।। श्री ।।

# शेषसमुच्चयः।

## प्रथमः पटलः।

**ब्रह्मार्कवैश्रवणकृष्णसरस्वतीश्री-**
**गौर्यग्रजा ददतु काळ्यपि मातरो मे।**
**क्षेत्राधिपोऽथ रुरुजिद्गिरिशादिरूपा-**
**णीन्द्रादयोऽपि नमतेभिमतं प्रसन्नाः ।। १ ।।**

श्रीमद्गुरून् गणेशं ब्रह्मादीर्देवताश्च नत्वाथ।
शेषसमुच्चयविषयां विमृशामि यथामति व्याख्याम्।।

अत्र खलु ग्रन्थकृत् सप्तविधतन्त्रप्रतिपादकात् तन्त्रसमुच्चयाख्याद् ग्रन्थादवशिष्टानि ब्रह्मादिविषयाणि तन्त्राणि समुच्चित्य प्रतिपादयितुमिच्छन्नादौ तदविघ्नपरिसमाप्त्यादिप्रयोजनाय ता एव देवता उद्दिश्याशिषं प्रार्थयते – ब्रह्मार्केत्यादिना। एता ब्रह्माद्या देवता नमते नमनं कुर्वाणाय मे मह्यं प्रसन्ना अभिमतमिष्टं ददतु। कास्ता देवता इत्याह – ब्रह्मार्कवैश्रवणकृष्णसरस्वती-श्रीगौर्यग्रजाः, ब्रह्मा प्रसिद्धः, अर्कः सूर्यः, वैश्रवणस्स एव, कृष्णो गोशालास्थः कृष्णः, सरस्वतीश्रीगौर्याः प्रसिद्धाः, अग्रजा ज्येष्ठा, काळी भद्रकाळी, मातरो वीरभद्रगणपतिसहिताः प्रसिद्धा एव, क्षेत्राधिपः क्षेत्रपालः, अपिशब्दः समुच्चयार्थः। अथ रुरुजिद्गिरिशादिरूपाणि। रुरुजिदिति रुरुनाम्नो दैत्यस्य

हन्त्री भद्रकाळी, गिरिशः शिवः, आदिशब्देन तत्रत्या मातरः क्षेत्रपालश्च तद्रूपाणि दैवतानि। इन्द्रादयः स्वप्राधान्येन स्थापनीया लोकपालाः। अपिशब्दोऽत्रापि समुच्चयार्थः। अत्र ब्रह्मादिक्षेत्रपालान्तानां तन्त्राणि षड्भिः पटलैरभिधाय सप्तमादिपटलैरुरुजिदादीनां तन्त्राणि वक्ष्यामीति मध्यस्थ-स्याथशब्दस्यार्थः।

**गुरून् प्रणम्याथ गुरोर्निदेशा-**
**देषां प्रतिष्ठाद्यभिधीयतेऽथ।**
**स्वतन्त्रके साङ्गनिरङ्गभिन्ने**
**बह्वेकवेरेऽपि विशेषयुक्तम् ।। २।।**

चिकीर्षितं प्रतिजानीते – गरूनिति। अथ अभिमतप्रार्थनानन्तरमेव गुरून् प्रणम्य। गुरोर्निदेशाद् गुरोरनुज्ञां प्राप्य। एषां ब्रह्मादीनाम्। स्वतन्त्रके स्वप्राधान्येन स्थापनीये। साङ्गनिरङ्गभिन्ने साङ्गादिभेदेन च स्थापनीये। स्वतन्त्रसाङ्गादिभेदं तूत्तरत्र वक्ष्यति। बह्वेकवेरेऽपि बहुवेरे एकवेरेऽपि। विशेषयुक्तं यथा भवति तथा, प्रतिष्ठादि प्रतिष्ठापूजादिकमभिधीयते, अस्माभिरिति शेषः।

**योऽयं तन्त्रसमुच्चयो गुरुकृतो यत्तन्त्रसारग्रहात्**
**तच्छिष्टागमसारसङ्ग्रहतयेहारभ्यमाणे ततः।**
**ग्राह्यं शेषसमुच्चये सुकुशलै सामान्यकर्माखिलं**
**योऽजाद्येषु विशेष एष निखिलः सुव्यक्तमत्रोच्यते ।। ३।।**

अस्य ग्रन्थस्य तन्त्रसमुच्चयशेषत्वेन शेषसमुच्चयत्वं प्रतिपादयति – योऽयमिति। यत्तन्त्रसारग्रहाद् येषां तन्त्रप्रतिपादकानामागमानां सारं गृहीत्वा। गुरुकृतः अस्मद्गुरुभिर्विरचितोऽयं यस्तन्त्रसमुच्चयः। तच्छिष्टागमसारसङ्ग्रहतया तेभ्यस्तन्त्रसमुच्चयमूलभूतेभ्य आगमेभ्योऽवशिष्टेभ्य आगमेभ्यः सारसङ्ग्रह-त्वेनारभ्यमाणे इह शेषसमुच्चये ततस्तस्मादेव तन्त्रसमुच्चायात् सुकुशलैः साधकैरखिलं सामान्यकर्म ग्राह्यं स्यात्। अत्र पुनरजाद्येषु ब्रह्मादिषु यो विशेष

एष निखिलः सुव्यक्तं सुतरां स्पष्टं यथा भवति तथाऽस्माभिरुच्यते।

**स्नातः स्वे सदने विशोधिततले स्नातान् गुरुं मूर्तिपां-**
**श्चाथ प्राग्वदनान् पुरो गणपतिं सम्पूज्य संवन्द्य तान्।**
**पाद्यादीनथ मूलमूर्तिमनुभिः सम्पूज्य कर्तेशदि-**
**श्येतैस्तानभिपूज्य भुक्तवत आचान्तान् वृणीतानतः ।। ४।।**

तत्रादौ गुरुवरणं संगृह्णाति - स्नात इति। अथ कर्ता स्नातो भूत्वा स्वे सदने विशोधिततले कृतस्थलशुद्धौ भूभागे स्नातान् गुरुं मूर्तिपांश्च प्राग्वदनानास्य उपवेश्य। पुरोभागे गणपतिं दीपं च सम्पूज्य तान् संवन्द्य स्वस्येशदिशि मूलमूर्तिमनुभिः पाद्यादीनि संसाध्य एतैः पाद्यादिभिरेतैर्मन्त्रैश्च तानभिपूज्य भुक्तवतः कृतभोजनानाचान्तांस्तान् ततोऽर्घ्यदानानन्तरं वृणीत।

**मया संपूजितैरत्र दक्षिणाभिश्च तोषितैः।**
**क्रियतां ब्रह्मयागो मे प्रार्थयामि प्रसीदत ।। ५।।**

**स्वस्वदोःसमवलम्बने वद-**
**न्त्वों तथेति त इति स्वयंभुवि।**
**स्वस्वनामभिदुरो वृतौ मनुः**
**स्यात् परेष्वखिलमन्यदुक्तवत् ।। ६।।**

ब्रह्मणि वरणमन्त्रं पठति – मयेति। ते गुरुमूर्तिपाः स्वस्वदोः समवलम्बने ओं तथेति वदन्तु। स्वयंभुवि ब्रह्मणीति वृतौ मनुः स्यात्। परेषु सूर्यादिषु स्वस्वनामभिदुरः 'क्रियतां सूर्ययागो मे' इत्यादिनामभेदयुक्तः। अन्यदखिलं कर्मोक्तवदेव।

**इह प्रमोदधात्रादिमनवोऽजारुणादिषु।**
**मूर्तीनां वेदराश्यादिसङ्ख्या ग्राह्यास्तु मूर्तिपाः ।। ७।।**



इह वरणे। आजारुणादिषु ब्रह्मसूर्यादिषु। मूर्तीनां, प्रमोदधात्रादिमनवः

ब्रह्मणि प्रमोदादयः सूर्ये धात्रादयश्चोत्तरत्र वक्ष्यमाणाः। अन्येषु स्वस्वयोग्या मूर्तिपा वेदराश्यादिसंख्याश्चत्वारो वा द्वादश वाऽष्टौ वा ग्राह्याः।

**स गुरुश्च समूर्तिपालकर्ता**
**सुपरीक्ष्य स्ववधार्य सद्गुणाढ्याम्।**
**धरणीं द्रुहिणारुणादियोग्यां**
**निशि गृह्णीत विशेषविच्छुभायाम् ।। ८।।**

भूपरिग्रहं संगृह्णाति – स गुरुरिति। समूर्तिपालकर्ता मूर्तिपैः कर्त्रा च सहितः संवृतो विशेषविद् गुरुः सुपरीक्ष्य सुतरां परितो विलोक्य सद्गुणाढ्यां द्रुहिणारुणादियोग्यां ब्रह्मसूर्यादीनां योग्यां धरणीमवधार्य शुभायां निशि गृह्णीत।

**देवान्तरस्थित्यनपेक्षयैव**
**यत्राजितादेरथवाप्यजादेः।**
**स्थितिः प्रकल्प्यायतनं तदेतत्**
**स्वतन्त्रकं स्यात् तदपेक्षमन्यत् ।। ९।।**

तत्रैकस्य बहूनां वा भूपरिग्रहेऽङ्गाङ्गिभेदेन विभागभेदमाह – देवान्तरेति। अजितादेस्तन्त्रसमुच्चयोक्तविष्ण्वादेरथवा इहोक्ताजादेरपि देवस्य देवान्तर-स्थित्यनपेक्षयैव यत्र स्थितिः प्रकल्प्या तदेतदायतनं स्वतन्त्रकं स्यात्; अन्यत् साङ्गनिरङ्गादि वक्ष्यमाणं तत्तदपेक्षं देवान्तरस्थित्यपेक्षमेव।

**मध्येऽजः स्वपदे धनेशतरणी प्रागीशमध्येऽथ मा-**
**शर्वाणीरवयो यमेन्द्रदिशि गोशालेन्दुरक्षोग्निषु।**
**काली दण्डधराशरेन्दुषु जनन्यो वाग्विधौ ग्रामपु-**
**र्यादौ क्षेत्रप ईश्वरेन्द्रशशिषु ज्येष्ठानिलाब्धीशयोः ।। १०।।**

तत्र ब्रह्मादीनां स्थाननियममाह – मध्येऽज इति। तत्र ग्रामपुर्यादौ मध्ये अजः स्यात्। धनेशतरणी स्वपदे वैश्रवणः उत्तरे भागे सूर्यः पूर्वभागे

माशर्वाणीरवयः क्रमात् प्रागीशमध्येषु। तत्र श्रीः प्राग्भागे उमा ईशदिशि सूर्या मध्ये। प्रागुक्तप्राग्भागाद् विकल्पेन यमेन्द्रदिशि गोशाला। काली इन्दुरक्षोऽग्निषु। जनन्यो दण्डधराशरेन्दुषु यमनिर्ऋतिसोमेषु। वाक्सरस्वती विधौ ब्रह्मस्थाने। क्षेत्रप ईश्वरेन्द्रशशिषु, अनिलाब्धीशयोः ज्येष्ठा च स्यात्।

**स्नात्वा तत्र कृतासनः स्वमनुविन्यासादि कृत्वा गुरु-**
**र्भूतान्नेन तु देवताभ्य इति मध्याशासु दत्त्वा बलिम्।**
**स्वाचान्तः सकलीकृतास्त्रकृतरक्षात्माथ मध्ये स्थितो**
**भूतानीत्यपवासयेदिह वसद् विज्ञाप्य भूतादिकम् ॥ ११॥**

तं परिग्रहक्रियाक्रममाह – स्नात्वेति। गुरुः स्नात्वा तत्र स्थले कृतासनो भूत्वा स्वमनुविन्यासादि कृत्वा भूतान्नेन भूतकूरसहितेन हविषा मध्याशासु मध्येऽष्टासु दिक्षु च देवताभ्य इत्यादिना मन्त्रेण बलिं दत्वा स्वाचान्तः सकलीकृतास्त्रकृतरक्षात्मा सकलीकृत्यास्त्रेण कृतात्मरक्षो भूत्वा मध्ये स्थितो भूतानीति मन्त्रमुच्चरन्निह वसद् भूतादिकं विज्ञाप्यापवासयेत् वियोजयेत्।

**देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः।**
**एतत्स्थाननिवासिभ्यः प्रयच्छामि बलिं नमः ॥ १२॥**

**भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन।**
**ते सर्वे व्यपगच्छन्तु स्थानं कुर्यां स्वयंभूवः ॥ १३॥**

**गृह्यते यद्यदर्थं भूस्तत्तत्पदमिहोन्नयेत्।**
**ग्राह्यो वैश्रवणे त्वत्र धनदस्येत्ययं मनुः ॥ १४॥**

तत्र प्रस्तुतमन्त्रद्वयं पठति – देवताभ्य इति, भूतानीति च। इह यद्यदर्थं यां यां देवतां विषयीकृत्य भूर्गृह्यते स्वयंभुव इत्यस्य स्थाने तत्तत्पदं तस्यास्तस्या देवतायाः पदमुन्नयेत् ऊहयेत्। स्थानं कुर्यामहं रवेरित्यादीत्यर्थः। वैश्रवणे त्वत्र भूतानीति मन्त्रस्य स्थाने धनदस्येत्ययं मनुर्ग्राह्यः।

**धनदस्य करिष्येऽत्र वेश्म युष्मदनुज्ञया।**
**व्यपगच्छन्तु यूयं तत् स्थानमन्यदितो नमः ।। १५।।**

तन्मन्त्रं पठति – धनदस्येति।

**शस्त्रैरथास्त्रमहितैरपहाय गुल्मा-**
**द्यस्त्रेण दिक्षु मिनुयात् परितोऽत्र शङ्कून्।**
**सूत्रं च तद्द्विगुणवेष्टनकृत् प्रसार्य**
**रक्षां चरेत् परिगृहीतवसुन्धरायाः ।। १६।।**

अथास्त्रमहितैः शस्त्रैरस्त्रेण गुल्मादि गुल्मवृक्षादिकमपहाय त्यक्त्वा मिनुयात् स्वेष्टं मानं कल्पयेत्। पुनरत्र परितोऽष्टासु दिक्षु शङ्कून् कृत्वा तद्द्विगुण-वेष्टनकृत् शङ्कौ शङ्कौ द्विगुणवेष्टनकृद् भूत्वा सूत्रं च प्रसार्य परिगृहति-वसुन्धरायाः परिगृहीताया भूमे रक्षां चरेत्।

**स्नातस्तद्देवतात्माभिनववृषयुगाद्यैस्त्रिधा पञ्चधा वा**
**कृष्ट्वा मूलेन तत्रावपतु शुभदिने सर्वधान्यानि मन्त्री।**
**सिञ्चेत् कुर्यात् समन्ताद् वृतिमथ फलितेष्वेषु गोब्राह्मणेभ्यो**
**दद्यात् तान्येकरात्रं त्र्यहमुत पशवः स्वैरमत्रावसेयुः ।। १७।।**

अथ मन्त्री कर्मसु मन्त्रयोगकुशलो गुरुः शुभदिने स्नातस्तद्देवतात्मा भूत्वाऽभिनववृषयुगाद्यैर्नवैः कर्षणसाधनैः सह मूलेन त्रिधा पञ्चधा वा कृष्ट्वा तत्र मूलेन सर्वधान्यान्यावपतु सिञ्चेच्च। समन्ताद् वृतिमपि कुर्यात्। अथैषु धान्येषु फलितेषु तानि गोब्राह्मणेभ्यो दद्यात्। एकरात्रं द्विरात्रं वा पशवोऽत्र स्वैरमावसेयुः। आवासं कारयेयुरित्यर्थः।

**खात्वा कर्त्तृवशादुत स्थलवशात् तां शोभनेऽह्नि क्षमा-**
**मन्तर्मण्डलमत्र मृद्भिरुपलैः पादोनमापूर्य च।**
**वेद्यामीशदिशीष्टवास्तुरिह तु स्थानाद्याभिज्ञो गुरु-**

**न्र्यस्याधारशिलादि गर्तमवशिष्टं पूरयेद् यत्नतः ।। १८।।**

पुनः शोभनेऽहनि कर्तृवशात् पुरुषप्रमाणम्। उत स्थलवशात् जलान्तमश्मान्तं वा अन्तर्मण्डलम् अष्टमूर्तिस्थानपर्यन्ताम्। तां क्षमां खात्वा मृद्भिरुपलैश्च पादोनमापूर्यात्र वेद्यामीशदिशीष्टवास्तुर्भूत्वा इह तु स्थानाद्यभिज्ञ आधारशिला-निधिकलशादीनां स्थानप्रमाणविधानादि जानन् गुरुराधारशिलादि न्यस्यावशिष्टं गर्तं यत्नतः पूरयेत्।

**प्रागाधारशिलां ततो निधिघटं त्वाधारशक्त्यास्पदं**
**पश्चात् कच्छपमक्षराब्जनिलयं मन्त्री प्रतिष्ठापयेत्।**
**विघ्नेशापचितिं विधाय यमदिग्द्वार्यग्रतः स्वस्तिके**
**देवेज्यामथ योगनालमुपदध्यादेवमत्र क्रमः ।। १९।।**

अत्र क्रमं दर्शयति – प्रागिति। पूर्वमाधारशिलां पुनराधारशक्तेराश्रयं निधिकलशं पश्चादक्षराब्जनिलयं पूजितलिपिपङ्कजमब्जनिलयं यस्य तत्, कच्छपं च प्रतिष्ठापयेत्। मन्त्रीति तत्र प्राप्तान् मन्त्रान् जानन्नित्यर्थः। पुनर्यमदिशि विघ्नेशपूजामग्रतः स्वस्तिके देवेज्यां च विधायाथ योगनालमुपदध्यात्। अत्र एवमिति तन्त्रसमुच्चयोक्त एव क्रियाक्रम इत्यर्थः।

**तत्र स्थलेऽथ सुदृढे सुदृढोपपीठ-**
**युक्तेऽपि वा निशि विधानविदिष्टवास्तुः।**
**द्वास्थानतो गुरुरुदग्विनिधाय वह्नि-**
**मिष्ट्वेष्टकाकलशमारभतां च होमम् ।। २०।।**

इष्टकानिधानमाह – तत्रेति। तत्र स्थले सुदृढोपपीठयुक्ते (पीठेति?) उपपीठयोगे सत्युपपीठस्योपर्येवेष्टकानां स्थानमित्यर्थः। तत्रापि निशि विधानविदिष्टवास्तुर्गुरुर्द्वाःस्थानतो भविष्यद्द्वारादुदग्भागे वह्निं विनिधायेष्टकाः कलशं चेष्ट्वा होमं चारभताम्।

**पक्वात् प्राङ्मूलवर्णै रविधनदमुखेषूपरि ब्रह्मलक्ष्मी-**
**कृष्णेष्वन्येषु पञ्चोपनिषदणुभिराज्यं जुहोत्वत्र पक्वम्।**
**पत्युर्मूलेन मातृष्विह तु च समिदादीनि तारेण गाय-**
**त्र्यान्येष्वाज्यं ततः प्राक् तदणुभिरजपूर्वेषु पश्चात् परेषु ।। २१।।**

अत्र होमे रविधनदमुखेषु शिवपक्षीयेषु पक्वात् प्राङ् मूलवर्णैः ब्रह्मलक्ष्मीकृष्णेषु विष्णुपक्षीयेषु पक्ववादुपरि मूलवर्णैः अन्येषु शिवपक्षीयेष्वत्र पक्वानन्तरं, पञ्चोपनिषदणुभिरप्याज्यं जुहोतु। मातृषु पत्युर्वीरभद्रस्य मूलेनान्येषु स्वस्वपक्वोक्तमन्त्रेण च पक्वं जुहोतु। इह तु मातृषु समिदादीनि चतुर्द्रव्याणि तारेणान्येषु गायत्र्या च जुहोतु। अजपूर्वेषु विष्णुपक्षीयेषु ततश्चतुर्द्रव्यहोमात् प्राक् तदणुभिः प्रणवव्याहृत्यादिभिः "भूराद्याः पृथगेव लोकपतयः" इत्यादितन्त्रसमुच्चयश्लोकोक्तमन्त्रैः परेषु शिवपक्षीयेषु चतुर्द्रव्यहोमतः पश्चाच्च तैराज्यं जुहोतु।

**तारव्याहृतिपूर्वकास्तदणवो विष्णूदिता विश्वसृक्**
**श्रीकृष्णेषु शिवोदिताः स्युरितरेष्विच्छादयः शक्तयः।**
**काल्यामष्ट भवेयुराभिरिह होमोऽष्टाष्टसङ्ख्यं ततो**
**होमान्ते गुरुरिष्टकादिषु चरेत् सम्पातपातादिकम् ।। २२।।**

तत्र विश्वसृक्श्रीकृष्णेषु विष्णुपक्षीयेषु तारव्याहृतिपूर्वका विष्णूदितास्तदणवः स्युः। इतरेषु शिवपक्षीयेषु शिवोदिताश्च तदणवः स्युः। काळ्यामिच्छादयः पूजापटले वक्ष्यमाणा अष्ट शक्तयस्तदणवो भवेयुः। इह काळ्यामाभिः शक्तिभिरष्टाष्टसंख्यं पृथगष्टेष्टकार्थं होमः स्यात्। ततो होमान्ते गुरुरिष्टकादिषु सम्पातपातादिकं चरेत्।

**प्रागुदगादिगृहमुखद्वारावामप्रदेश एतासाम्।**
**न्यासो मूलेन स्याद् विधानताष्ठ्युगयोगिना गौर्याम् ।। २३।।**

प्रागुदगादिगृहमुखद्वारा वामप्रदेशे प्रागुदगादिभूतस्य प्रासादमुखद्वारस्य दक्षिणप्रदेशे वामेतरद्वारशाखामूल इत्यर्थः। तत्र एतासामिष्टकानां विधानतो मूलेन न्यासः स्यात्। गौर्यां ठयुगयोगिना स्वाहास्तेन मूलेन।

**काल्यामिच्छाद्यष्टभिरथ तद्गर्तं कलशसलिलैः।**
**सिक्त्वाथ धान्यमृद्भिर्विद्वान् परिपूर्य रक्षतु च ।। २४।।**

काळ्यामिच्छादिभिरष्टभिः शक्तिभि स्थापनं स्यात्। अथ तद् गर्तं कलशसलिलैः सिक्त्वाऽथ धान्यमृद्भिः परिपूर्य रक्षतु। विद्वानिति जलावर्तपरीक्षितेत्यर्थः।

**निशान्तरे गर्भनिधित्सयोक्तव-**
**द्धुतं चरेत् प्राक् परिधानतो गुरुः।**
**स्वभाजने दक्षिणतः सुसंस्कृते**
**विधानवित् तद्द्रविणानि विन्यसेत् ।। २५।।**

अथ गुरुरन्यस्मिन् मुहूर्ते गर्भनिधित्सया गर्भाधानमिच्छन् उक्तवद् यथोक्तप्रकारेण हुतं चरेत्। तत्र परिधानतः प्राग् अग्नेर्दक्षिणतः सुसंस्कृते स्वभाजने गर्भपात्रे विधानवित् सामान्यविधानज्ञो द्रविणानि विन्यसेत्।

**शैवानि सूर्यधनदादिषु वैष्णवानि**
**श्रीकृष्णधातृषु निजं निजमायुधं च।**
**न्यस्य स्वमूलमनुभिः परिपूज्य चाधि-**
**वास्याथ पक्वचरमं तनुयात् पुरोवत् ।। २६।।**

तत्र सूर्यधनदादिषु शैवानि श्रीकृष्णधातृषु वैष्णवानि द्रव्याणि सर्वेषु निजं निजमायुधं च स्वमूलमनुभिर्न्यस्य परिपूज्याधिवास्याथ पक्वचरमं होमं पुरोवत् तनुयात्।



**हरिवदजरमाकृष्णेषु शेषेषु कुर्याद्**

**हरवदिह घृतद्रव्याहुतीः किन्तु मूलम्।**
**निजनिजमभिधानं चाथ काल्यां तु सर्पि-**
**र्हवनमिह मनोन्मन्याष्टकृत्वो विधेयम् ।। २७।।**

इह अजरमाकृष्णेषु हरिवत्। शेषेषु हरवच्च। घृतद्रव्याहुतीः घृतहोमं चतुर्द्रव्यहोमं च कुर्यात्। किन्तु तत्राभिधानं निजनिजं मूलं स्यात्। काळ्यां त्विह होमे मनोन्मन्याऽष्टकृत्वः सर्पिर्हवनं विधेयं स्यात्।

**शोधयित्वेष्टकामध्यगर्त्तं शक्तिं निजोचिताम्।**
**सन्निधाप्य न्यसेद् गर्भं मन्त्रज्ञोऽवहितो गुरुः ।। २८।।**

पुनरिष्टकामध्यगर्तं शोधयित्वा निजनिजोचितां शक्तिं सन्निधाप्य मन्त्रज्ञोऽवहितो गुरुर्गर्भं न्यसेत्।

**सर्वभूतधरे! कान्ते! पर्वतस्तनमण्डिते!**
**समुद्रपरिधाने! त्वं देवि! गर्भं समाश्रय ।। २९।।**

तन्मन्त्रं पठति – सर्वभूतधर इति।

**गौर्यां मनुर्निजं मूलं भद्रकाल्यां मनोन्मनी**
**देवं च तं तमत्रेष्टवा रक्षां कुर्यान्निजास्त्रतः ।। ३०।।**

गौर्यां निजं मूलं भद्रकाळ्यां मनोन्मनी च मनुः स्यात्। पुनरत्र तं तं देवमिष्ट्वा निजास्त्रतो रक्षां कुर्यात्।

**प्रासादं कारयेत् वृत्तं तुर्यश्रं वा यथोचितम्।**
**चतुरश्रायतं मातृष्वथ वृत्तायतं तु वा।। ३१।।**

तत्र वृत्तं चतुरश्रं वा यथोचितं प्रासादं कारयेत्। मातृषु तु चतुरश्रायतं वृत्तायतं वा प्रासादं कारयेत्।



**बिम्बान्यात्तगृहोचितान्युत गृहाण्येवात्तबिम्बोचिता-**

**न्येषां स्युर्नरधर्मणो भवतु वा भार्या विलासिन्यपि।**
**चामुण्डा प्रथमाथवास्तु चरमैवाथापि वा मध्यमा**
**वीरो वापि तयान्वितोऽथ नवसु स्यात् सोऽथ वान्यैव वा।।**
**३२।।**

अथैषां देवानामात्तगृहोचितानि पूर्वं प्रासादं प्रकल्प्य तद्योग्यानि बिम्बानि स्युः, उत आत्तबिम्बोचितानि पूर्वं बिम्बं प्रकल्प्य तद्योग्यानि गृहाणि स्युः। नरधर्मणो वैश्रवणस्य "विलासिनी" नाम भार्या भवतु वा। मातृषु प्रथमा चामुण्डाऽस्तु वा। अथवा सा चरमैवास्तु। अथापि वा सा मध्यमैवास्तु। नवसु मध्ये तया(न्वितः) चामुण्डयाऽन्वितो वीरो वीरभद्र एव स्वात्। अथवा स वीरभद्र एव स्यात्। अन्या चामुण्डैव वा स्यात्।

**अथाधिवासवासराद् गुरुः पुरोऽह्नि सप्तमे।**
**गिरीशदिक्प्रकल्पिते गृहेऽङ्कुरार्पणं चरेत्।। ३३।।**

अथ गुरुरधिवासवासरात् पुरः सप्तमेऽह्नि गिरीशदिक्प्रकल्पिते ईशकोणगते गृहेऽङ्कुरार्पणं चरेत्।

**स्नात्वाचम्य वितानदीपलसिते सम्मृष्टलिप्ते गुरुः**
**स्वासीनोऽङ्कुरमण्डपे स्वमनुविन्यासादि कृत्वाग्रतः।**
**विघ्नेशं परिपूज्य शोधिततलेऽस्त्रक्षालितालङ्कृता**
**न्यस्येत् षोडश पालिकाः पदचतुर्वर्गात्मके क्षेत्रके।। ३४।।**

तत्क्रियाक्रममाह – स्नात्वेति। गुरुः स्नात्वाऽऽचम्य वितानदीपलसिते संमृष्टलिप्तेऽङ्कुरमण्डपे स्वासीनः स्वमनुविन्यासादि कृत्वाऽग्रतो विघ्नेशं परिपूज्य शोधिततले कृतस्थलशुद्धौ पदचतुर्वर्गात्मके षोडशकोष्ठके क्षेत्रकेऽस्त्रक्षालितालङ्कृताः षोडशपालिका न्यस्येत्।



**बीजान्यस्त्रनिजाणुवास्तनजशुद्धानि न्यसोन्निष्कृतिं**

**प्राङ्नान्दीमुखकर्म मूर्त्तिपयुतः पुण्याहमप्याचरेत्।**
**पीठेज्यामनु पालिकासु तनुयाद् बीजेष्वथो धारणां**
**विष्णुं सोममपि क्रमेण परिपूज्याथावपेन्मूलतः।। ३५।।**

अस्त्रनिजाणुवाःस्तनजशुद्धानि अस्त्रेण निजाणुना च क्रमेण वारा क्षीरेण च शुद्धानि बीजानि पुरतो न्यसेत्। प्राक् पूर्वं निष्कृतिं प्रायश्चित्तं नान्दीमुखकर्म च पुनर्मूर्त्तिपयुतः पुण्याहमप्याचरेत्। पीठेज्यामनु पीठपूजानन्तरं पालिकासु बीजेषु च धारणास्तनुयात्। अथो विष्णुं सोममपि क्रमेण परिपूज्याथ स्वस्वमूलेनावपेत्।

**मूलेनैव समुक्ष्य गन्धरजनीतोयैः समावाह्य च**
**स्नाने प्रोक्ष्य समर्च्य साधु सुपटेनाच्छाद्य रक्षेदपि।**
**कुर्याद् रात्रिषु दिक्षु तद्ग्रहबलिं नित्यं त्रिसन्ध्यासु पी-**
**ठेज्याविष्णुशशीष्टिसेकनिजमन्त्रेज्याविधिं चाचरेत्।। ३६।।**

गन्धरजनीतोयैर्मूलेनैव समुक्ष्यावाह्य (च) स्नानेऽपि प्रोक्ष्य साधु समर्च्य सुपटेनाच्छाद्य रक्षेद् अपि। रात्रिषु नित्यं दिक्षु तद्ग्रहबलिं सत्सम्बन्धिनां ग्रहाणां बलिं च कुर्यात्। त्रिसन्ध्यासु पीठेज्याविष्णुशशीष्टिसेकनिजमन्त्रेज्याविधिं पीठपूजां विष्णुसोमयोः पूजनं सेचनं निजमन्त्रेण पूजां चाचरेत्।

**शालियवा राजितिला माषकुलुत्थाः स्युराढकीशिम्बाः।**
**बीजानि श्यामककङ्गवः पुनर्मुद्गराजमाषाश्च।। ३७।।**

**ब्रह्मश्रीकृष्णेषु द्विषडन्येषु द्विपञ्च वियवान्त्यानि।**
**विश्यामकान्तिमानि तु काल्यां रात्रिग्रहा हरिहरोक्ताः स्युः ।। ३८।।**

ब्रह्मश्रीकृष्णेषु द्विषड् द्वादश बीजानित्याह – शालीति। वैष्णवानीत्यर्थः। अन्येषु वियवान्त्यानि विगतं यवमन्त्यं राजमाषं च येषु तानि। द्विपञ्च दश

स्युः। काळ्यां विश्यामकान्तिमानि श्यामकमन्त्यं राजमाषं च रहितं येषु तानि द्विपञ्च। रात्रिग्रहाः हरिहरोक्ताः ब्रह्मादिषु हर्युक्ताः सूर्यादिषु हरोक्ताश्च स्युः।

**ध्वजं चाग्रे समुत्थाप्य त्रिसन्ध्यासु समर्चयेत्।**
**प्रातः कर्मदिने दद्याद् बीजाङ्कुरबलिं बुधः। ३९॥**

अग्रे ध्वजं च समुत्थाप्य त्रिसन्धासु समर्चयेत्। बुधः कर्मदिने प्रातर्बीजाङ्कुरबलिं दद्यात्।

**त्रिरात्रजलवासधीस्तदुचितेऽह्नि सायाह्नके**
**स्वमन्त्रकृतविग्रहो गणपतिं प्रपूज्याग्रतः।**
**प्रसाध्य मधुमद् घृतं स्थपतिशायितार्चादृशौ**
**समुन्नयतु कर्म तत् स्थपतिरप्यवस्येन्निजम् ॥ ४०॥**

**स्थपतेर्यजमानेन गृहीत्वार्चां समर्पिताम्।**
**तारेणाचार्य आलोक्य गृहीत्वास्त्रेण शोधयेत्॥ ४१॥**

बिम्बपरिग्रहक्रियाक्रममाह – त्रिरात्रेति। त्रिरात्रजलवासधीः त्रिरात्रं जलवासं कर्तुं कृतबुद्धिर्गुरुस्तदुचितेऽह्नि सायाह्नकाले स्वमन्त्रकृतविग्रहो भूत्वाऽग्रतो गणपतिं प्रपूज्य मधुमद् घृतं प्रसाध्य स्थपतिशायितार्चादृशौ शिल्पिना शायितस्य बिम्बस्य नेत्रद्वयं त्रयं वा समुन्नयतु उन्मीलयतु। स्थपतिरपि निजं कर्मावस्येत् समापयेत्। ततो जयमानेन स्थपतेर्गृहीतां समर्पितामर्चामाचार्य आलोक्य गृहीत्वाऽस्त्रेण शोधयेत्।

**नवार्चा वीरविघ्नेशमातृणामवलोक्य तु।**
**प्राङ्नमोस्त्वित्युपस्थाय गृहीत्वा शोधयेत् क्रमात्॥ ४२॥**

वीरविघ्नेशमातृणां नवसङ्ख्या अर्चाः प्रागबलोक्य नमोऽस्त्विति मन्त्रेणोपस्थाय गृहीत्वा क्रमाच्छोधयेत्।

**नमोऽस्तु लोकमातृभ्यो भूतमातृभ्य एव च।**
**आकाशमातरो दिव्यास्तथान्या लोकमातरः।। ४३ ।।**

**यानि बिम्बानि क्लृप्तानि युष्मद्भक्तैर्यथाबलम्।**
**यूयं तान्यनुगृह्णीध्वं संस्थापनविधेर्नमः।। ४४ ।।**

**ब्रह्मण्यब्दर्भगोबालघृतमासूरवारिभिः।**
**धनदे तोयसर्पिस्त्वग्दर्भमृद्वारिभिः क्रमात्।। ४५ ।।**

**कृष्णे च शोधयेत् सर्पिर्जलदर्भत्वगम्बुभिः।**
**लक्ष्म्यामम्बुघृतत्वङ्मृद्दर्भगन्धजलैरपि।। ४६ ।।**

**गौर्यां जलाज्यदर्भैश्च गौबालैर्गन्धवारिभिः।**
**अब्दर्भगव्यैर्ज्येष्ठायां मृद्धेममणिगन्धकैः।। ४७ ।।**

**मध्वाज्याब्वल्कदर्भैर्मृदुदकाभ्यां च मातृषु।**
**शेषेष्वाज्यमधुत्वङ्मृद्भस्मचूर्णैः सगन्धकैः ।। ४८ ।।**

**तद् बिम्बं वस्त्रयुग्मेन गन्धपुष्पाक्षतादिना।**
**अलङ्कृत्यास्त्रमन्त्रेण विद्वान् नीराजनं चरेत् ।। ४९ ।।**

उपस्थानमन्त्रं पठति – नमोऽस्त्विति। शोधनद्रव्याणि क्रमेण पठति – ब्रह्मणीति। शोधनानन्तरं विद्वान् तद्बिम्बं वस्त्रयुग्मेन गन्धाक्षतादिभिरलङ्कृत्यास्त्रमन्त्रेण नीराजनं चरेत्।

**प्राक्बिम्बशुद्धिकलशस्नपनादुमाश्री-**
**श्रीदाजशौरिषु विलोचनकर्म कुर्यात्।**
**काल्यां तु तद्विधिघटस्नपनात् परेषु**
**बिम्बग्रहे तु परिशोधित एव बिम्ब ।। ५० ।।**



पुनर्नयनोन्मीलनस्य कालभेदमाह – प्रागिति। उमाश्रीश्रीदाजशौरिषु

गौरीश्रीवैश्रवणब्रह्मकृष्णेषु बिम्बशुद्धिकलशस्नपनात् प्राग्विलोचनकर्म कुर्यात्। काळ्यां तु तद्विधिघटस्नपनात् बिम्बशुद्धिकलशे ब्रह्मकलशस्नापनात् प्राक् परेषु बिम्बग्रहे तु बिम्बे परिशोधित एव कुर्यात्।

**गन्धाद्यलङ्कृतिकृदाज्यमधु प्रगृह्य**
**सूच्या सुवर्णचषकान्मधुमन्त्रजप्तम्।**
**नेत्रेण यक्षगिरिजादिषु मूलतः श्री-**
**मात्रादिषून्मिषितयेदमुनाक्षि तद्वित् ।। ५१ ।।**

नेत्रोल्लेखनप्रकारमाह – गन्धादीति। तद्वित् तन्त्रसमुच्चयोक्तविधानज्ञो गुरुर्गन्धाद्यलङ्कृतिकृद् भूत्वा सुवर्णचषकात् सूच्या मधुमन्त्रजप्तमाज्यमधु प्रगृह्यामुना यक्षगिरिजादिषु वैश्रवणगौर्यादिषु नेत्रेण मन्त्रेण श्रीमात्रादिषु मूलतश्चाक्षि नेत्रद्वयं नेत्रत्रयं वोन्मिषितयेत् उन्मिषितं कुर्यात्।।

**हिरण्यगर्भो ग्रहणेऽथ चित्रं मन्त्रोऽक्षिकर्मण्यजकृष्णयोः स्यात्।**
**मूलेन संवेश्य सुरक्ष्य मालाणुना दृगुन्मीलनमग्रजायाम् ।। ५२।।**

अजकृष्णयोराज्यमधुग्रहणे 'हिरण्यगर्भो' मन्त्रः। अथाक्षिकर्मणि 'चित्रं देवानामि'ति मन्त्रः स्यात्। अग्रजायां मूलेन संवेश्य निद्रां प्रापय्य सुरक्ष्य मालामनुना दृगुन्मीलनं स्यात्।

**"ओं नमो भगवति सर्वकामप्रसाधिन्य-**
**मृतोद्भवे कलिपत्नि नमोनमः"।**

**मूलेनाक्ष्णोरशेषेषु शेषेणापूर्य दृक्पटम्।**
**हृत्वा गामग्रगां सद्यो दर्शयेत् सास्य दक्षिणा ।। ५३।।**

मालामन्त्रं पठति – ओं नम इत्यादि। अशेषेषु देवेषु शेषेण मूलेनाक्ष्णोरापूर्य दृक्पटं हृत्वा सद्य एवाग्रगां गां दर्शयेत्। साऽस्य गुरोर्दक्षिणा च स्यात्।

**ततः सूर्यादिषु त्वेतत् कार्यं नीराजनादिकम्।**
**कृत्वावाहनपाद्यादि गौर्यादिष्वभिषेचनम् ।। ५४।।**

ततः सूर्यादिषु तदानीं नेत्रोल्लेखनयोग्येषु एतन्नेत्रोल्लेखनं कृत्वा नीराजनादिकं कार्यम्। गौर्यादिषु एतत् कृत्वाऽऽवाहनपाद्याद्यभिषेचनं कार्यम्।

**इह त्वलङ्कृते श्रीदशौर्योर्बध्नातु कौतुकम्।**
**बिम्बे स्वास्त्रेण शेषेषु जलवाससमुद्धृतौ ।। ५५।।**

कौतुकबन्धनकालभेदमाह – इह त्विति। इह तु श्रीदशौर्यो वैश्रवणकृष्ण-योरलङ्कृते बिम्बे स्वास्त्रेण कौतुकं बध्नातु। शेषेषु *तूदवासरामुद्धृतौ जलाधिवासादुद्धारानन्तरम्।

**स्वगायत्र्यन्वितं मूलं मन्त्रोऽजे देवकीसुते।**
**जितन्तसंयुताष्टार्णः श्र्यादौ चक्रादिरिष्यते ।। ५६।।**

अजे कौतुकबन्धने स्वगायत्र्यन्वितं मूलमन्त्रः। देवकीसुते कृष्णे जितंतसंयुतोऽष्टार्णः। श्र्यादौ चक्रादिर्मन्त्र इष्यते।

**स्थित्वा प्रार्थ्य नमस्त इत्यणुयुजा दर्भाग्रगर्भाञ्जलिः**
**क्षौमक्षिप्तसमुक्तसर्षपसुवर्णोर्जस्वलं कौतुकम्।**
**ऊर्णासूत्रसितं सुवर्त्य परिजप्य स्वाणुना सप्तधा**
**साङ्गुष्ठोपकनिष्ठिकाङ्गुलियुजा बध्नातु बाहूत्तमे ।। ५७।।**

कौतुकबन्धनप्रकारं तु तन्त्रसमुच्चयोक्तश्लोकेनाह – स्थित्वेति। स तु श्लोकोऽस्माभिस्तत्र व्याख्यातः।

**नमस्तेऽर्चे सुरेशानि प्रतीके विश्वकर्मणः।**



* 'जलवास' इति मूले दृश्यते।

**प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः ।। ५८ ।।**
**त्वयि सम्पूजयामीशं स्वयम्भुवमनामयम् ।**
**रहिता योनिदोषैस्त्वमृद्धियुक्ता सदा भव ।। ५९ ।।**
**दिवाकरादिपदभाक् स्यात् सूर्यादावयं मनुः ।**
**पूर्वार्धयोर्मनाग्भेदो गौर्यामस्मिन् मनौ भवेत् ।। ६० ।।**

उपस्थानमन्त्रयुग्मं पठति — नमस्त इति । अयं मनुः सूर्यादौ स्वयम्भुवमित्यत्र दिवाकारादिपदभाग् भवेत् । गौर्यामस्मिन् मनौ पद्यद्वयस्य पूर्वार्धयोर्मनाग् ईषद् भेदो भवेत् ।

**नमस्तेऽर्चे सुरेशानि विश्वावासेऽसुरारिणि! ।**
**त्वयि सम्पूजयामीशे मायां विश्वात्मिकामुमाम् ।। ६१ ।।**

तत्पूर्वार्धद्वयं पठति — नमस्त इति ।

**नीत्वा जलाशयतटं प्रतिमां तदम्भः**
**संशोध्य पूजयतु वह्निमयं तु बिम्बम् ।**
**सम्भावयेच्च फलकोपरि पीठमिष्ट्वा**
**बिम्बं निवेश्य परिरक्षतु मन्त्रिवर्यः ।। ६२ ।।**

पुनर्जलाशयतटं प्रतिमा नीत्वा तदम्भः संशोध्य वरुणमावाह्य पूजयतु । बिम्बं तु वह्निमयं सम्भावयेच्च फलकोपरि पीठमिष्ट्वा बिम्बं निवेश्य मन्त्रिवर्यो यथोक्तप्रकारेण रक्षतु ।

**ततस्तार्तीयेऽह्नि स्थपतिकरमुक्तं सुरगृहं**
**गृहीत्वा तद्बाह्ये स्वपद उपविश्याशरदिशि ।**
**दिनान्ते तन्मन्त्रन्यसनगणपत्यर्चनगुणा-**
**दिसंस्कारान् दानं च चरतु पशो रक्षितगृहः ।। ६३ ।।**

प्रासादशुद्धिं संगृहाति – ततस्तार्तीय इति। ततस्तस्मात् तार्तीयेऽह्नि स्थपतिकरमुक्तं यजमानेन शिल्पिकराद् गृहीत्वा दत्तं सुरगृहं गृहीत्वा दिनान्ते काले तद्बाह्याशरदिशि निर्ऋतिभागे स्वपदे स्वस्थानउपविश्य तन्मन्त्रन्यसनगण-पत्यर्चनगुणादिसंस्कारान् स्वस्य सकलीकरणं गणपतिपूजां तन्तुकुशस्रगादि-संस्कारं च कृत्वा पशोर्दानं चरतु।

**गुणस्रग्भ्यां धाम्नः परिकलनकृच्छोधयतु तत्-**
**क्रमज्ञो मुष्ट्याद्यैर्यजतु शुचि दिश्यस्त्रकलशम्।**
**सकृद्राक्षोघ्नं स्वास्त्रमसकृदिहावर्त्य कुसुमा-**
**स्त्रमोक्षं कुर्वीताखिलमनलसालान्तमपि च ।। ६४।।**

ततो रक्षितगृहो भूत्वा तालत्रयादिभिः प्रासादं संरक्ष्य गुणस्रग्भ्यां धाम्नः परिकलनकृद् भूत्वा तत्क्रमज्ञः प्रासादशुद्धिक्रमं जानन् मुष्ट्याद्याद्यैः शोधयतु। शुचिदिश्यग्निकोणेऽस्त्रकलशं यजतु च। इह सकृद् राक्षोघ्नमसकृदस्त्रं चावर्त्य कुसुमास्त्रमोक्षमनलसालान्तमग्निप्राकारपर्यन्तमखिलमपि कुर्वीत च।

**सर्वत्र वैष्णवी ज्ञेया मुष्टिः श्रीकृष्णधातृषु।**
**गौर्यां दर्भशलाकाभिः काल्यां चान्येषु शाम्भवी ।। ६५।।**

श्रीकृष्णधातृषु सर्वत्र स्थलशोधने वैष्णवी मुष्टिर्ज्ञेय। गौर्यां दर्भशलाकाभिः, काळ्यामन्येषु च शाम्भवी शैवी मुष्टिः।

**निश्यग्निदिशि राक्षोघ्नं श्रीकृष्णाजेषु वैष्णवम्।**
**होमं शैवं तु शेषेषु कुर्यादस्त्रं निजं निजम् ।। ६६।।**

निश्यग्निदिशि श्रीकृष्णाजेषु वैष्णवं, शेषेषु शैवं च राक्षोघ्नं होमं कुर्यात्। अस्त्रं तु निजं निजं स्यात्।

**वास्तुहोमं शिवदिशि कुर्याद् द्विकलशान्वितम्।**
**सूर्यादिष्वपि दुर्गाः स्युर्मूलं दूर्वास्वजादिषु ।। ६७।।**

शिवदिशि द्विकलशान्वितं वास्तुहोमं च कुर्यात्। वास्तुहोमे सूर्यादिष्वपि "पञ्च दुर्गाः" स्यु। अजादिषु दूर्वाहोमे स्वमेव तु मूलं स्यात्।

**काल्यां स्वस्त्यणुभिश्च प्राग् व्याहृतिभ्योऽष्टभिः क्रमात्।**
**हृल्लेखा हुंफडन्ता स्याद् राक्षोघ्नेऽस्त्रमुदीरितम् ।। ६८ ।।**

काळ्यां व्याहृतिभ्यः प्रागष्टभिः स्वस्त्यणुभिः क्रमादाज्यहोमश्च स्यात्। अस्यां भद्रकाळ्यां हुंफडन्ता हृल्लेखा राक्षोघ्नहोमेऽस्त्रमुदीरितम्।

**कुर्याद् वास्तुबलिं शैवं ब्रह्मादिषु तु वैष्णवम्।**
**विनियोज्य घटौ त्वन्ते रक्षां पुण्याहकृच्चरेत् ।। ६९ ।।**

सर्वेषु शैवं ब्रह्मादिषु तु वैष्णवं च वास्तुबलिं कुर्यात्। पुनरन्तर्घटौ वास्तुकलशौ विनियोज्य पुण्याहकृद् रक्षां चरेत्।

**अथ बिम्बशुद्धिकलशं शिवदिशि कृतमण्डपे गुरुः शुद्धे।**
**पूजयतु पञ्चकैर्वा नवकैर्वा भेदितं बुधो नवभिः ।। ७० ।।**

बिम्बशुद्धिकलशपूरणमाहः – अथ इति। अथ शिवदिशि कृते शुद्धे मण्डपे बुधो गुरुर्नवभिः पञ्चकैर्वा नवकैर्वा भेदितं बिम्बशुद्धिकलशं पूजयतु।

**प्रागादिखण्डगतमध्यघटेष्वशेषे**
**द्रव्याणि विन्यसतु मध्यगमध्यमे च।**
**मन्त्री प्रदक्षिणतयोपघटेषु तेषां**
**शुद्धाम्बु चेति तु नवद्रविणक्रमः स्यात् ।। ७१ ।।**

अशेषे प्रागादिखण्डगतमध्यघटेषु मध्यगमध्यमे च मन्त्री पूरणमन्त्रज्ञः प्रदक्षिणतया द्रव्याणि विन्यसतु। तेषामुपघटेषु शुद्धाम्बु च, इति नवद्रविणक्रमः स्यात्।

**प्रागादिषु क्रमत एव वहिस्तथान्त-**

**र्लक्ष्म्यां दिशासु विदिशासु बहिस्तु काल्याम्।**
**स्वीयक्रमेण नवकानि नवापि तुल्य-**
**द्रव्याणि मातृषु न शुद्धजलं तथेह ।। ७२।।**

सप्तदशद्रव्ये लक्ष्म्यामन्तस्तथाऽन्तबर्हिश्च प्रागादिषु क्रमत एव स्यात्। काल्यामन्तर्बहिश्च दिशासु विदिशासु च मातृषु स्वीयक्रमेण नव नवकान्यपि तुल्यद्रविणानि। तथेह शुद्धजलं न स्यात्।

**मृद्वारि पत्रसलिलं क्वथितं च पञ्च**
**गव्यानि गन्धसलिलं च पितामहे स्युः।**
**क्वाथाम्बुपुण्यजनराज्यथ पञ्चगव्यं**
**व्यस्तं समस्तमपि मृज्जलगन्धवारि ।। ७३।।**

क्रमेण द्रव्याणि पठति – मृद्वारीति। पितामहे ब्रह्मणि मृद्वारि पत्रसलिलं कथितं पृथक् पञ्चगव्यानि गन्धसलिलं च स्युः। एवं सर्वत्र द्रष्टव्यम्। पुण्यजनराजि वैश्रवणे।

**गव्यानि पञ्च बसुदेवसुताद्रिपुत्र्यो-**
**र्मृत्क्वाथरत्नजलगन्धजलं च भूयः।**
**गव्यं पृथक् सहकषायमृदम्बु लक्ष्म्यां**
**रत्नाम्बु चाथ बहिरष्टसु गन्धतोयम् ।। ७४।।**

वसुदेवसुताद्रिपुत्र्योः कृष्णे गौर्यां च। लक्ष्म्यां सप्तदशद्रव्ये गोमूत्रादिरत्न-जलान्तानि नव द्रव्याणि मध्यादीशान्तं बहिरष्टसु गन्धतोयं च स्युः।

**गव्यं पृथक् सह च पत्रकमग्रजायां**
**गन्धान्वितामलकवारि हिरण्यवारि।**
**मुत्साकषायमपि मातृषु पञ्चगव्यं**
**व्यस्तं समस्तमथ गन्धजलं च विद्वान् ।। ७५।।**

ज्येष्ठादिषु नवद्रव्याण्याहः – गव्यमिति।

**मूलेन रत्नमपि गन्धमशेषमन्त-**
**र्व्यस्तानि मातृमनुभिश्च ततो नृभागे।**
**काल्यां समृत्क्वथितकौषधिपुष्पतैलं**
**गव्याज्यगौलमपि भैरवनामभिश्च ।। ७६ ।।**

काळ्यां सप्तदशद्रव्यमाह – मूलेनेति। काळ्यां अन्तः ब्रह्मकलशे मूलेनाशेषं रत्नमशेषं गन्धं च ततो दैविके मातृमनुभिर्व्यस्तानि रत्नानि गन्धानि च; नृभागे भैरवनामभिः मृत्क्वथिताद्यष्टकं च।

**शेषेषु तु क्वथितकं पशुमूत्रगव्य-**
**क्षीराणि भस्म दधि मृत् कुशगन्धवारि।**
**कृत्वासनोष्टिघटसंस्करणादि सर्वं**
**न्यासक्रमादिह तथा द्रविणप्रयोगः ।। ७७ ।।**

शेषेषु सूर्यादिषु कथितपशुमूत्रादि नव द्रव्याणि स्यु। आसनेष्टिघटसंस्करणादि सर्वं कृत्वा न्यासक्रमाद् द्रविणप्रयोगः स्यात्।

**नदीतटाभ्यां वल्मीकात् कुलीरावासतो विधौ।**
**क्षेत्राद् गजविषाणाच्च ग्राह्या वेद्याच्च मृत्तिकाः ।। ७८ ।।**

**ब्रह्मश्रीचम्पकाशोकनीपाम्रबकुलार्जुनाः**
**क्षीरिणश्च वटाश्वत्थपक्षोदुम्बरशाखिनः ।। ७९ ।।**

**पत्रमेषामिह ग्राह्यं कमलक्षीरिणां तु वा।**
**सेव्यार्त्यम्बुजटास्त्रायोमुरशीतैस्तु गन्धकम् ।। ८० ।।**

मृदादिसङ्घातद्रव्याणि क्रमेण पृथक् पृथगाहः – नदीतटाभ्यामित्यादिभिः। विधौ ब्रह्माणि।

**वेद्या नद्यास्तथा क्षेत्रात् पर्वताद् वृषश्रृङ्गतः।**
**वराहगजदन्ताभ्यां वार्ष्णेये त्वाहरेन्मृदः ।। ८१ ।।**

**क्षीरित्वग्भिः कषायोऽत्र गन्धो ब्राह्मोऽत्र रत्नकम्।**
**वज्रं मौक्तिकवैडूर्यपद्मरागप्रवाळकम् ।। ८२ ।।**

वार्ष्णेये कृष्णे मृदादि पठति – वेद्या इति। अत्र कृष्णे ब्राह्मः ब्रह्मणि प्रोक्तो गन्धः वज्रादिपञ्चकं रत्नकम्।

**वेद्या नद्यास्तथा तीर्थाद् वल्मीकाद् वृषश्रृङ्गतः।**
**वराहगजदन्ताभ्यामपि गौर्यां मृदो हरेत् ।। ८३ ।।**

**पलाशखदिरक्षीरिशमीत्वग्भिः कषायकम् ।। ८३¹/४**

गौर्यां मृदादि पठति – वेद्या नद्या इति। उमाश्रियोर्गन्धाष्टकमाह – चन्दनेति। रोहित् कुङ्कुमम्।

**वज्रं मौक्तिकवैडूर्यशङ्खस्फटिकपुष्यकम्।**
**चन्द्रकान्तं महानीलं रत्नानि ब्रह्मरागकम् ।। ८४⁷/२**

**चन्दनागरुकर्पूरमांसीरोचनरोहितः।**
**कचूरं वानरं चैव गन्धाष्टकमुमाश्रियोः ।। ८५ ¹/२**

**शमीपलाशखदिरविल्वाश्वत्थविकङ्कतैः।**
**सोदुम्बरवटैश्चैव लक्ष्म्यां क्वाथो विधीयते ।। ८६¹/२**

**वल्मीकाद् वृषश्रृङ्गाच्च सूकरान्मूषिकालयात्।**
**क्षेत्रात् तीर्थान्मुदोऽत्राग्न्यायतनात् पर्वतादपि ।। ८७¹/२**

**मणिं मुक्ताफलं चैव वैदूर्यं नीलमेव च।**
**पद्मरागं प्रवालं च रत्नं वज्रं हरिन्मणिः ।। ८८¹/२**

लक्ष्म्यां कषायादिकमाह – शमीति।

**वज्रं मौक्तिकमाणिक्यशङ्खस्फटिकपुष्यकम्।**
**गोमेदकं मरतकं काल्यां रत्नाष्टकं भवेत् ।। ८९१/२ ।।**

**रक्तचन्दनकाश्मीररोचनाकपिमांसिकाः।**
**चोरागुरू च गन्धाः स्युरभिषेके तदर्चने ।। ९०१/२ ।।**

**वल्मीकवृषश्रृङ्कोत्था नादेयी च समुद्रजा।**
**आखुसूकरसम्भूता खलजा वेदिजा मृदः ।। ९११/२ ।।**

**शिरीषास्त्रशमीपर्णक्षीरिणां तु कषायकम् ।। ९२।।**

**सहा च सहदेवी च सदाभद्रा कृताञ्जलिः।**
**श्रीदेवी विष्णुपर्णी च दूर्वौषधय ऐन्द्र्यपि ।। ९३।।**

**जातिस्त्रीमल्लिकाकुन्दनन्द्यावर्ताब्जचम्पकैः।**
**यूथिकासहितं पुष्पमथवा बकुलान्वितम् ।। ९४।।**

**मयूराश्वत्थपनसशिरीषाम्रवटोद्भवैः।**
**पलाशौदुम्बरयुतैः शेषेषु स्यात् कषायकम् ।। ९५।।**

**वल्मीकचत्वरगिरिनदीतीर्थाग्निवेश्मजाः।**
**वृषकुञ्चरश्रृङ्गोत्था मृदो गन्धास्त्वजोदिताः ।। ९६।।**

**मणिर्मुक्ता मरतकमिन्द्रनीलगतः परम्**
**वज्रं वैदूर्यकं पुष्यं गोमेदं रत्नमीरितम् ।। ९७।।**

**कषायत्वक्करीषाणां दग्धं भस्मात्र कीर्तितम्।**
**बिम्बग्रहेऽपि तच्छुद्धावेत एव मृदादयः ।। ९८।।**


काळ्यां रत्नादिकमाह – वज्रं मौक्तिकेति। पर्णं पलाशम्। शेषेषु सूर्यादिषु

कषायादिकमाह – * मधुकेति। शेषेषु गन्धास्त्वजोदिताः ब्रह्मण्युक्ताः। सर्वत्र बिम्बग्रहे तच्छुद्धौ बिम्बशुद्धौ एत एव मृदादयः स्युः।

**कलशपूरणपूजनकृद् गुरुः**
**स्वमनुना हुतकृद् दहनेऽर्चिते।**
**द्रविणकुम्भसमर्पिततद्घृतः**
**प्रतिजपेत् परिरक्षतु चास्त्रतः ।। ९९ ।।**

कलशपूरणपूजनकृद् गुरुरर्चिते दहने स्वमनुना स्वस्वमूलमन्त्रेण हुतकृद् भूत्वा द्रविणकुम्भसमर्पितं घृतं तत्सम्पातद्रविणकुम्भेषु संस्पृश्य स्वस्वमन्त्रान् प्रतिजपेत्। अस्त्रतः परिरक्षतु च।

इति शेषसमुच्चये प्रथमः पटलः।

* 'मयूराश्वत्थ' इत्येव मूले पठितम्। किन्तु 'मधुकाश्वत्थ' इत्यपि घ मातृ, य. मूलमात्रायां दृश्यते।।

# अथ द्वितीयः पटलः।

**अथाधिवासदिवसे प्रासादस्याग्रतः कृतम्।**
**पूर्वाह्ने विधिवत् स्नातः संस्कुर्यान्मण्डपं गुरुः ॥ १ ॥**

मण्डपसंस्कारं विधत्ते – अथेति। अथ अधिवासदिवसे पूर्वाह्ने काले गुरुः स्वयं स्नातः प्रासादस्याग्रतः कृतं मण्डपं विधिवत् संस्कुर्यात्।

**ज्येष्ठायां मण्डपस्त्र्यश्रस्त्रिद्वाः स्वालयसम्मुखः।**
**शालाकारः समचतुरश्रो वा जननीषु सः ॥ २ ॥**

तत्र ज्येष्ठायां त्र्यश्रस्त्रिद्वाः कोणत्रयद्वारत्रययुक्तः स्वालयसम्मुखः स्वप्रासादाभिमुखो मण्डपः स्यात्। जननीषु शालाकारो वा समचतुरश्रो वा स मण्डपः स्यात् ।

**स्वाचान्तो मण्डपान्तर्निर्ऋतिदिशि निषद्यात्मयागान्तमाधा-**
**येष्ट्वा विघ्नाधिराजं सुभृतपरिकरो धेनुदोऽपास्तरक्षाः।**
**तन्तुस्त्रग्भ्यां समन्तात् कलयतु मनुवित् संस्कृते खात इष्ट्वा**
**पीठं शुद्धान् क्रमज्ञो न्यसतु सुमहितांस्तोरणांश्च ध्वजांश्च**
**॥ ३ ॥**

तत्क्रियाक्रममाह – स्वाचान्त इति। स्वाचान्तो मण्डपान्तर्निर्ऋतिदिशि निषद्यात्मयागान्तमाधाय विघ्नाधिराजम् इष्ट्वा सुभृतपरिकरो यथोक्तप्रकारेण

परिगृहीततन्तुकुशस्रगादियुक्तः धेनुदः कृतपशुदानोऽपास्तरक्षा उत्सारितरक्षोभूतादिको मनुवित् तत्तदुक्तमन्त्रज्ञः तन्तुस्रग्भ्यां समन्तात् कलयतु। सुसंस्कृते अस्त्रेण कृतखननादिके खाते गर्ते शुद्धान् क्षाळनादिभिर्धारणाभिश्च शोधितान् क्रमज्ञः प्रागादिक्रमं तोरणादिक्रमं च जानन् सुमहितांस्तोरणान् ध्वजांश्च न्यसतु।

**स्युर्बोध्युदुम्बरवटा विधिकृष्णमासु**
**प्लक्षश्च गुह्यकपतौ स उदुम्बरश्च।**
**बोधिर्वटश्च वटबोधिविभेदतोऽमी**
**शेषेषु तोरणकृते तरवो दिशासु ।। ४।।**

तोरणे दारुनियममाह – स्युरिति। विधिकृष्णमासु बोध्युदुम्बरवटाः प्लक्षश्च दिशासु तोरणकृते तोरणनिर्माणाय तरवः स्युः। गुह्यकपतौ वैश्रवणे, सः प्लक्ष उदुम्बरो बोधिर्वटश्च स्युः। शेषेषु अमी वैश्रवणोक्ता वटबोधिविभेदतो वटाश्वत्थक्रमेण तरवः स्युः।

**ध्वजानां वेणुरष्टासु दिक्षु काल्यां दशस्वपि।**
**वाण्यां चतसृषु द्वौ ज्येष्ठायां तिसृषु त्रयः ।। ५।।**

सर्वेष्वष्टासु दिक्षु ध्वजानां वेणुस्तरुः स्यात्। काळ्यां दशस्वपि दिक्षु, वाण्यां चतसृषु दिक्षु द्वौ द्वौ स्याताम्। ज्येष्ठायां तिसृषु दिक्षु त्रयो ध्वजाः स्युः।

**स्वादयः शोभनो भद्रः कर्महोत्रोऽजकृष्णयोः।**
**प्रभूतो विमलः सारः समाराध्यश्च भास्वति ।। ६।।**

पूजार्थं तोरणदेवता आहः – स्वादय इति। अजकृष्णयोर्वैष्णवाः सुशोभनाद्या इत्यर्थः। भास्वति सूर्ये प्रभूतादयः।

**प्रणवस्त्वेव वेदात्मा ज्येष्ठाधनदमातृषु।**
**पुष्करश्चाथ पूर्णश्च वाण्यामानन्दनन्दनौ ।। ७।।**

ज्येष्ठाधनदमातृषु वेदात्मा प्रणवस्त्वेव। तत्र ज्येष्ठायाम् ओं ऋग्वेदात्मने नम इत्यादयस्त्रयः। धनदे मातृषु च ओम् अथर्वात्मने नम इत्यनेन सहेत्यर्थः। वाण्यां पुष्करादयः ।

**भारती पार्वती लक्ष्म्यां तोरणेष्वैन्द्र्यथो शची।**
**अद्भुतो विकृतो गौर्यां भीमश्च क्षोभणस्ततः ।। ८।।**

**काल्यां निवृत्तिः प्रतिष्ठा विद्या शान्तिर्यथाक्रमम्।**
**शमो विभूतिः सुबलश्चारोगः क्षेत्रपालके ।। ९।।**

**वेदादिभिः स्थापनं स्याज्ज्येष्ठाश्रीश्रीदमातृषु।**
**तोरणानां परेषु स्वैरेवाधिपतिनामभिः ।। १०।।**

लक्ष्म्यां भारत्यादयः, गौर्यामद्भुतादयः, काळ्यां निवृत्त्यादयः, क्षेत्रपालके शमादयः, ज्येष्ठाश्रीदमातृषु वेदादिभिरग्निमीळ इत्यादिभिस्तोरणानां स्थापनं स्यात्। परेषु स्वैः स्वैरधिपतिनामभिः स्यात्।

**कुमुदकुमुदाक्षकावजनन्दजयोः पुण्डरीकवामनकौ।**
**अथ शङ्कुकर्णसर्वाधिकनेत्रौ सुमुखसुप्रतिष्ठितकौ ।। ११।।**

**इन्द्रो वज्री यमो दण्डी वरुणः पाश्यपि क्रमात्।**
**कुबेरश्च गदी दिक्षु सरस्वत्याममी द्विशः ।। १२।।**

**कुन्दी कुमुदिनी गौर्यां विद्युन्माली च भीषणी।**
**कलुषी घोषणी चाथ करवीराक्षिरेवती ।। १३।।**
**हेतुकस्त्रिपुरान्तश्च साग्निवेतालजिह्वकौ।**
**कालक्षोऽथ कराल (श्चै? श्चाप्ये) कपाद् भीमरूपकः ।। १४।।**

**अलोहः शाङ्करे काल्यामष्टकोशश्च नैर्ऋते।**
**शेषेष्विन्द्रादयोऽष्टौ च स्थापनेज्ये स्वनामतः ।। १५।।**

ध्वजदेवताः पठति – कुमुदेति। अजनन्दजयोर्ब्रह्मकृष्णयोः कुमुदाद्या वैष्णवा एव। सरस्वत्यामिन्द्रवज्र्यादयो द्वारेषु द्विशः स्युः, गौर्यां कुन्द्यादयः; काळ्यां हेतुकादयो दश, तत्र हेतुकक्षेत्रपालाय नम इत्यादिक्षेत्रपालशब्दान्ता ऊह्याः। शेषेष्विन्द्रादयः स्युः। एषु सर्वेषु स्वस्वनामतः स्थापनेज्ये भवतः।

**ज्येष्ठा कली तथाग्र्यायां कलिपत्नी केतुदेवतास्ताश्च।**
**प्राग्द्वारे प्रागाद्या मण्डपकेऽन्यत्र याम्यपक्षाद्याः ।। १६ ।।**

[१]अग्र्यायां ज्येष्ठायां ज्येष्ठा कली कलिपत्नी च केतुदेवताः; ताश्च प्राग्द्वारे मण्डपके प्रागाद्याः, अन्यत्र प्रत्यग्द्वारे याम्यपक्षाद्या दक्षिणपार्श्वाद्याः।

**इष्ट्वा क्रमात् तोरणदेवताभ्यो ध्वजाधिपेभ्यश्च बलिं विकीर्य।**
**ततः समाचम्य समेत्य चान्तः समाचरेद् द्वारघटार्चनाद्यम् ।। १७ ।।**

इष्ट्वा क्रमादिति। तन्त्रसमुच्चयोक्तश्लोक एव।

**द्वौ द्वौ द्वारघटावेकैकं तोरणघटं च पूजयतु।**
**द्वार्घटपूरणमत्राजशौर्योर्निजाष्टवर्णार्णैः ।। १८ ।।**

द्वारकलशपूजामाह – द्वौ द्वाविति। सर्वेषु द्वौ द्वौ द्वारघटौ। एकैकं तोरणघटं च पूजयतु। [२]अत्राजशौर्योः निजाष्टवर्णार्णैः ओं तत् सन्नमो ब्रह्मणे, ओं क्लीं गोविन्दाय नमः इत्यष्टवर्णयोरष्टभिरक्षरैर्द्वार्घटपूरणं स्यात्।

**पूर्णश्च पुष्करश्चाजे कृष्णे चानन्दनन्दनौ।**
**वीरसेनः सुषेणश्च सम्भवः प्रभवोऽपि च ।। १९ ।।**

---

१. 'ज्येष्टा कलिरग्र्यायां कलिपत्नी' इति भाषाव्याख्यायुते संस्कारणे मूलपाठौ दृश्यते।
२. 'अजशौर्योर्निजनिजाष्टवर्णार्णैः' इति स्यान्मूलपाठः।।

**प्रत्यूषश्च प्रभासश्च प्रद्योतो द्योतनः क्रमात्।**
**दण्डी च पिङ्गलश्चण्डस्तीव्रश्चापि दिवाकरे ॥ २०॥**

**मेधा प्रज्ञा प्रभा चैव विद्या चाप्यथ धीर्धृतिः।**
**सरस्वत्यां स्मृतिर्बुद्धिर्द्वारकुम्भाधिदेवताः ॥ २१॥**

**विभूतिरुन्नतिरथ हृष्टिरुत्कृष्टिरेव च।**
**धृतिः क्षमा क्रमाल्लक्ष्म्यां सन्तुष्टिः पुष्टिरित्यपि ॥ २२॥**

**पालनी प्लावनी चैव क्षमा शान्तिस्ततः परा।**
**आनन्दी भैरवी गौर्यामद्भुती विकृतिः क्रमात् ॥ २३॥**

**सुन्दरी सुमुखी काल्यां विरूपा विमला ततः।**
**अन्तकी वन्दनी द्वे पुरन्दरी पुष्पमर्द्दिनी ॥ २४॥**

**चण्डेशी प्रादियुता क्रोधा च क्रोधवदना च।**
**सौम्या मातृषु सुमुखी भद्रा च पुनः सुभद्रा च ॥ २५॥**

**क्षेत्रपे हेतुकाद्यष्टावितरेषु च लोकपाः।**
**स्युरिन्द्राग्न्यादयो द्वौ द्वावित्युक्ता द्वारकुम्भगाः ॥ २६॥**

अजे कृष्णे च पूर्णपुष्कराद्या विष्णूक्ता एव द्वारकलशदेवताः। दिवाकरे प्रत्यूषादयः; सरस्वत्यां मेधादयः; लक्ष्म्यां विभूत्याद्याः; गौर्यां पालिन्याद्याः; काळ्यां सुन्दर्याद्या; मातृषु चण्डेश्याद्याः प्रादियुताः। प्रचण्डेति। क्षेत्रपे हेतुकाद्यष्टौ, इतरेषु इन्द्राग्न्याद्या लोकपा दिक्षु द्वौ द्वौ भवतः, इति द्वारकुम्भगा देवता उक्ताः।

**इन्द्रो यमश्च वरुणः सोमश्च ब्रह्मकृष्णयोः।**
**पूज्यास्तोरणकुम्भेषु लक्ष्म्यामपि तथा भवेत् ॥ २७॥**



तोरणकलशस्था देवताः पठति – इन्द्र इत्यादि। ब्रह्मकृष्णयोरिन्द्रय-

माद्याश्चत्वारः लक्ष्म्यामपि तथा भवेत्।

**सहस्रवीची विमला शतधारा प्रमोदिनी।**
**पार्वत्यां भद्रकाळ्यां च सूर्यादिष्वपि तद् भवेत् ॥ २८॥**

पार्वत्यां भद्रकाळ्यां च सहस्रवीच्यादयः, सूर्यादिष्वपि तथा भवेत्।

**कुम्भी निकुम्भिनी वज्रभीषणा तरङ्गिणी च जननीषु।**
**क्षेत्रपतौ च शमाद्यास्तोरणघटदेवताः प्रोक्ताः ॥ २९॥**

जननीषु कुम्भ्याद्याः क्षेत्रपतौ च शमाद्याः।

**चण्डीं च चण्डनादां च प्रधानद्वारपालयोः।**
**ज्येष्ठायां पूजयेद् द्वास्थे प्राग् द्वारकलशार्चनात् ॥ ३०॥**

ज्येष्ठायां द्वारकलशार्चनात् प्राक् प्रधानद्वारपालयोः[१] प्रधान द्वारस्य द्वयोः शाखयोश्चण्डीं चण्डनादां च पूजयेत्। अस्या द्वारद्वयेप्येवमेव।

**अस्यास्तोरणकुम्भेषु ज्येष्ठाद्या एव देवताः।**
**प्रागुक्तक्रमतः पूज्यास्तोरणेष्वप्ययं क्रमः ॥ ३१॥**

अस्या ज्येष्ठायाः तोरणकुम्भेषु ज्येष्ठाद्या एव। तत्र तोरणेष्वप्ययमेव देवताक्रमः।

**मुष्ट्यादिभिः साधु विशोध्य भूमिं**
**कुम्भेशमभ्यर्हतु वर्धनीं च।**
**कुम्भेशभाङ्मातृषु वीरभद्र**
**एकप्रतिष्ठा यदि यः स एकः ॥ ३२॥**

स्थलशुद्ध्यादिकमाहः – मुष्ट्यादिभिरिति। मातृषु वीरभद्रः कुम्भेशभाक्



१. 'दयोः' इत्यपि मूलपाठे दृश्यते।

स्यात्। एकप्रतिष्ठा यदि आसामेकस्य एव प्रतिष्ठा क्रियते यदियो वीरभद्रः स एक स्याद्।

**ततो गुरुः शुद्धचरे स्वकुण्डे मन्त्रभावितः।**
**जनयेदनलं वीरभद्रात्मा स तु मातृषु ॥ ३३॥**

अग्निजननं विधत्ते तत इति। ततो गुरुः शुद्धचरे स्थलशुद्धावेव पूर्वं शोधिते स्वकुण्डे मन्त्रभावितो भूत्वा अनलं जनयेत्। मातृषु स गुरुर्वीरभद्रात्मा भूत्वैव।

**कुण्डे शोषादि कृत्वायतनविनिहिते विष्टरे पीठमिष्ट्वा**
**शक्तिं सम्भाव्य शुद्धार्चितदमुनसमाधाय सम्पाद्य सिद्धे।**
**सर्पिष्याराधितेऽग्नौ चरतु निजनिजोक्तक्रिया देवमावा-**
**ह्येष्ट्वा सन्तर्प्य साङ्गावरणमपि घृतेनाथ सन्तोषयेश्च**
**॥ ३४॥**

तत्र क्रियाक्रममाहः – कुण्ड इति। पूर्वं कुण्डे शोषादि कृत्वा आयतनविनिहिते उल्लेखनानन्तरमायतने विष्टरं विनिधाय तत्र विष्टरे पीठमिष्ट्वा शक्तिं सम्भाव्य शुद्धार्चितदमुनसं शोधितं पूजितं चाग्निमाधाय स्थापयित्वा संव[1]न्द्य सिद्धे सर्पिषि सत्याराधितेऽग्नौ निजनिजोक्तक्रियाश्चरतु। देवमावाह्येष्ट्वा साङ्गावरणं तं घृतेन सन्तर्प्याथ सन्तोष्य रक्षेत्।

**गर्भाधानाद्याः क्रियाः स्वाङ्गमन्त्रैः**
**षट् काल्यां सप्तेन्दिरायामथाष्टौ।**
**शेषेष्वस्त्रं शेषमन्त्रोऽखिलेषु**
**ज्ञेयः कृष्णेष्टापि चाष्टार्णवर्णैः ॥ ३५॥**

१. 'सम्पाद्य' इति मूले।

तत्र काळ्यां स्वाङ्गमन्त्रैः गर्भाधानाद्याः षट् क्रियाः स्युः। इन्दिरायां सप्त, शेषेष्वष्टौ। अथाखिलेष्वस्त्रं शेषमन्त्रः शेषितक्रियामन्त्रो ज्ञेयः। कृष्णेऽष्टार्णवर्णैरष्ट क्रियाः स्युः।

**कुम्भेशभ्रमणं कृत्वा तच्छेषार्चनकृद् गुरुः।**
**शय्यामपि निजे स्थाने समास्तीर्य समर्चयेत् ।। ३६ ।।**

अथ गुरुः कुम्भेशभ्रमणं कृत्वा तच्छेषार्चनकृत् कुम्भेशकर्कर्योः पुनरर्चनकृद् भूत्वा निजे स्थाने शय्यामपि समास्तीर्य समर्चयेत्।

**शय्येयं दक्षिणार्धे स्यात् प्रत्यक् प्राग्द्वारि मण्डपे।**
**ग्राम्योदग्द्वारि पूर्वार्धे मूलप्रासादसम्मुखी ।। ३७ ।।**

इयं शय्या प्रत्यक्प्राग्द्वारि प्रत्यग्द्वारे प्राग्द्वारे च मण्डपे तस्य दक्षिणार्धे मूलप्रासादसम्मुखी स्यात्। याम्योदग्द्वारि दक्षिणद्वारे उत्तरद्वारे च मण्डपे पूर्वार्धे च।

**वीरादीनां पृथक् शय्याः प्रतिष्ठाव्युत्क्रमात्तु ताः।**
**शालाकारेऽथ तुर्यश्रे वीरपूजागतक्रमात् ।। ३८ ।।**

शालाकारे च मण्डपे वीरादीनां प्रातिष्ठाव्युत्क्रमात् प्रतिष्ठायाः प्रातिलोम्येन पृथक् ताः शय्याः स्युः। चतुरश्रे मण्डपे वीरपूजागतक्रमाद् वीरभद्रस्य पूजायां प्राप्तेन क्रमेण स्युः।

**निद्राकुम्भां शिरःस्थाने मातृष्वपि समन्ततः।**
**शय्यायां विष्टरं त्विष्ट्वा शक्तिमावाह्य पूजयेत् ।। ३९ ।।**

मातृष्वपि प्रत्येकं समन्ततः शिरःस्थाने निद्राकुम्भं पूजयेत्। सर्वेषु शय्यायां तु विष्टरमिष्ट्वा शक्तिमावाह्य पूजयेत्।

**शिरःस्थाने निद्राकलशमपि विद्येशकलशान्**
**समन्ताद् दिक्ष्वष्टौ न्यसतु चतुरस्त्वम्बरमणौ।**

**क्रमाज्ज्येष्ठायां षोडश यजतु निद्राख्यमखिले**
**स्वमूलेनान्यांश्चागमविदिह विद्येशमनुभिः ।। ४० ।।**

आगमविद् गुरुः शिरःस्थाने निद्राकलशमपि समन्तादष्टौ दिक्षु विद्येशकलशान् न्यसतु। अम्बरमणौ सूर्ये चतुर एव; ज्येष्ठायां षोडश च न्यसतु। अखिले निद्राख्यं कलशं स्वमूलेन यजतु। अन्यान् विद्येशमनुभिश्च यजतु।

**विष्णुमधुसूदनौ च त्रिविक्रमो वामनोऽष्टवर्णार्णयुताः।**
**सश्रीधरो हृषीकेशोऽपि विधौ पद्मनाभदामोदरकौ ।। ४१ ।।**

विधौ अष्टवर्णार्णयुताः स्वाष्टाक्षरमन्त्रस्यार्णैर्युता विष्णवाद्या विद्येश्वराः।

**ऋग्वेदाद्या रवौ श्रीदे माणिभद्रादयोऽजवत्।**
**वार्ष्णेये वाचि योगाद्या हैमवत्यां तु मातरः ।। ४२ ।।**

रवावृग्वेदाद्याश्चत्वारः; श्रीदे माणिभद्रादयः; वार्ष्णेये कृष्णेऽजवत्। वाचि सरस्वत्यां योगाद्याः; हैमवत्यां पार्वत्यां मातरः स्युः।

**श्रियि दुग्धं निद्राख्यं दधिघृतगव्यं च फलोदरत्नोदम्।**
**हेमोदगन्धतोयं यवोदमितरेषु मूलेन ।। ४३ ।।**

श्रियि निद्राख्ये कलशे दुग्धम्। इतरेषु विद्येश्वरकलशेषु दधिघृताद्याष्टकं मूलेन परिपूर्य यजतु।

**कृष्णा विघ्ना च मूका च जम्भनी स्तम्भनी क्रमात्।**
**महाधिया महाघोरा काळी च परमाङ्कुशा ।। ४४ ।।**

**महामन्दी च मलिनी भूतिघ्नी दुर्मुखी पुनः।**
**मन्दा शुभाशुभा चेमा ज्येष्ठायां पूर्वतः क्रमात्। ४५ ।।**



ज्येष्ठायां विद्येश्वरकलशेषु कृष्णाद्याः षोडश पूर्वत आरभ्य क्रमात् स्युः।

**भद्रकाल्यां वशिन्याद्या ऐन्द्र्याद्या जननीष्वपि।**
**क्षेत्रपालेऽनलाद्याः स्युः प्रोक्ता विद्येश्वरा अमी ॥ ४६ ॥**

भद्रकाळ्यां वशिन्याद्याः; जननीष्वैन्द्र्याद्याः क्षेत्रपाले अनलाद्याश्च क्रमेण पठति। वशिन्याद्याः स्वस्वपूजोक्ता एव स्युः।

**ऐन्द्र्याग्नेयी च ग्राम्या च नैर्ऋती वारुणी पुनः।**
**वायवी शक्तयः सौम्या चैशानी पुनरष्टमी ॥ ४७ ॥**

**अनलश्चाग्निकेतुश्च कालो घण्डारवस्तथा।**
**महाक्रोधः पिङ्गलाक्षः सप्तमः पिशिताशनः ॥ ४८ ॥**

**ऊर्ध्वकेशोऽष्टमः प्रोक्त इतरे प्रागुदीरिताः।**
**वशिन्याद्याः स्वपूजोक्ताः शय्या त्वेवं प्रसाध्यताम् ॥ ४९ ॥**

**मङ्गलान्यष्ट परितस्तथा मङ्गलपालिकाः।**
**प्रदीपादींश्च विन्यस्य मण्डयेन्मण्डपोदरम् ॥ ५० ॥**

**वैष्णवं ब्रह्मकृष्णादिष्वैशं सूर्याग्रजादिषु।**
**क्षीरिभिर्लोहभेदैर्वा कल्प्यतामष्टमङ्गलम् ॥ ५१ ॥**

**पीठखड्गसुधाकुम्भकौशेयादर्शपुस्तकम्।**
**काळ्यां सपूगताम्बूलमिक्षुदण्ड इति क्रमात् ॥ ५२ ॥**

एवं सर्वेषु शय्या प्रसाध्यताम्, अष्टमङ्गलादिविन्यासाय तन्त्रसमुच्चयोक्त-श्लोकमाहः – मङ्गलानीति। तत्र ब्रह्मकृष्णादिषु वैष्णवं, सूर्याग्रजादिषु सूर्यवैश्रवणादिष्वग्रजामात्रादिषु चैशं चाष्टमङ्गलं, क्षीरिवृक्षैर्वा लोहभेदैर्वा कल्प्यताम्। अत्र काळ्यां पीठखड्गादीन्यष्टमङ्गलानि। अत्र काळ्यां "भद्रपदो" क्तक्रमेणैवाष्टमङ्गलानि स्थापनीयानि; तथा भद्रपदे –



"पीठं च दर्पणं खड्गं कौशेयं च सुधाघटम्।

पुस्तकं चैक्षवं दण्डं ताम्बूलं पूगमिश्रितम्" इति।

**अथ गिरिशदिशायां स्वस्तिके धान्यपीठे**
**यजतु विनिहिते स्वां पीठिकां भद्रपीठे।**
**अथ च सलिलतः सूद्धृत्य संक्षाल्य बिम्बं**
**सकलितमिह नीत्वा तत्क्रमज्ञो निदध्यात् ।। ५३ ।।**

बिम्बानयनकर्मक्रममाह – अथेति। अथ तत्क्रमज्ञः विद्वान् गुरुर्गिरिशदिशायां मण्डपस्येशानकोणस्थाल्पमण्डपे स्वस्तिके धान्यपीठे विनिहिते भद्रपीठे स्वां पीठिकां यजतु। अथ च जलाशयं गत्वा सलिलतो बिम्बं सूद्धृत्य संक्षाल्य सकलितं कृत्वा इह अल्पमण्डपे नीत्वा भद्रपीठे निदध्यात्।

**प्रासादसंमुखं तद् भद्रं कर्णोभिरित्युपस्थाय।**
**मूलेन घृताक्तं मासूरेणोद्वर्त्य शोधयेदद्भिः ।। ५४ ।।**

**शकृत्कषायमृद्दर्भजलैर्लक्ष्म्यां सगोमयैः।**
**मृत्त्वग्जलैरपर्णायां काल्यां त्वङ्मृत्तिकाम्बुभिः ।। ५५ ।।**

**ज्येष्ठायां मृज्जलक्वाथैर्दर्भमृत्वग्जलैः पुनः।**
**शेषेषु च निजास्त्रेण शोधयेत् कुशलो गुरुः ।। ५६ ।।**

लक्ष्म्यादिषु शोधनक्रममाह – शकृतिति शकृद् गोमयं, अपर्णा गौरी निजास्त्रेणेति सर्वत्र सम्बध्यते।

**मूलेनावाह्याग्रजायामुमायां काल्यां च न्यासादि कृत्वाथ दत्त्वा।**
**पाद्यादीनि स्नापयेत् स्नापयित्वाथावाह्य न्यासादि कुर्यात् परेषु।।**
**५७।।**

अथाग्रजाजामुमायां काळ्यां च मूलेनावाह्य न्यासादि कृत्वा पाद्यादीनि दत्त्वा बिम्बशुद्धिकलशैः स्नापयेत्। परेषु तैः स्नापयित्वाथावाह्य न्यासादि

कुर्यात्।

**पूरणक्रममाश्रित्य स्यात् सर्वेष्वभिषेचनम्।**
**काल्यां मृदादिभीर्रत्नागन्धाद्भिर्वैधसेन च ।। ५८।।**

सर्वेषु पूरणक्रममाश्रित्यभिषेचनं स्यात्। काळ्यां पूर्वं मृदादिभिर्मानुषगत-कलशैः पुनः रत्नगन्धाद्भिर्दैविकगतैः पुनर्वैधसेन ब्रह्मघटेन च स्नपनं स्यात्।

**षडर्णाष्टार्णरव्यर्णाः स्वे मन्त्राः पञ्च च क्रमात्।**
**ब्रह्मणि स्वा च गायत्री दिङ्मध्यमनवः क्रमात् ।। ५९।।**

ब्रह्मादीनां बिम्बशुद्धिस्नपनमन्त्रानाह – षडर्णेति। ब्रह्मणि षडर्णाष्टर्ण-रव्यर्णाः। षडक्षराष्टाक्षरद्वादशाक्षराः स्वे पञ्च मन्त्राः पञ्च तत्त्वानि स्वा गायत्री च इति नव। दिङ्मध्यमनवः दिक्षु मध्ये च क्रमान्मन्त्राः स्युः।

**ऋतं च तृचमासत्येनोद्यन्नद्यतृचं रवौ।**
**पावमान्यः खषोल्काणुर्मूलमन्त्रं षडङ्गकम् ।। ६०।।**

रवौ ऋतं च तृचं 'ऋतं च सत्यं चे' त्यादि तृचमेको मन्त्रः। 'आसत्येन' 'उद्यन्नद्य' तृचमेको मन्त्रः। पावमान्यः प्रसिद्धा एको मन्त्रः। खषोल्काणुर्मूलमन्त्रः षडङ्गकमेको मन्त्रः।

**सावित्राष्टाक्षरं चापि प्रागादिमनवः क्रमात्।**
**दशप्रणवगायत्री ब्रह्मकुम्भे विधीयते ।। ६१।।**

सावित्री तत्सवितुरिति सौरमष्टाक्षरं च एतद्द्वयमप्येको मन्त्रः। अमी अष्ट क्रमात् प्रागादिमनवः ब्रह्मकुम्भे दश प्रणवगायत्री विधीयते।

**धनदे त्वपनः शोशुचदिति सूक्तस्याष्टदिक्ष्वृचोऽष्टौ स्युः।**
**सूक्तं समस्तमन्तः स्वं मूलं नवसु चान्ततो योज्यम् ।। ६२।।**



धनदेऽष्टदिक्षु 'अपनः शोशुचादि'ति सूक्तस्याष्टावृचः स्युः। अन्तर्ब्रह्मकलशे

समस्तं सूक्तं, नवस्वपि मन्त्रेष्वन्ततः स्वं मूलं योज्यम्।

**स्वे मन्त्राः पञ्चगव्येषु भूतिर्धेनुश्च नन्दजे।**
**विष्णुगायत्र्यथाष्टार्णो मध्यमे द्वादशाक्षरम् ।। ६३।।**

नन्दजे पञ्चगव्येषु स्वे 'तत्सावितुरि'त्यादयो मन्त्राः। पुन'र्भूमिर्धेनुः' पुनर्विष्णुगायत्री पुनरष्टार्णो मध्यमे द्वादशाक्षरश्च मन्त्राः।

**दिक्षु शान्त्यादिमनवो विदिक्षु हृदयादयः।**
**भारत्यां शान्त्यतीतान्तः समूलाः पूरणक्रमात् ।। ६४।।**

भारत्यां दिक्षु शान्त्यादयः शान्तिविद्याप्रतिष्ठानिवृत्तयः, विदिक्षु हृदयाद्याङ्गानि, अन्तः शान्त्यतीता च समूला एते पूरणक्रमान्मन्त्राः स्युः।

**रमायां पञ्च वारुण्यो गन्धोदेष्वितरेषु तु।**
**अपनः शोशुचदिति सर्वं मूलसमन्वितम् ।। ६५।।**

रमायां बहिष्ठेषु गन्धोदेषु 'अवते हेळ' इत्यादि पञ्च वारुण्यः। इतरेषु गोमूत्रादिषु 'अपनः शोशुचदि'ति अष्टभिः ऋग्भिर्मध्ये समस्तसूक्तैः एतत् सर्वं मूलसमन्वितं स्यात्।

**गौर्यां गव्येषु मन्त्राः स्वे वारुण्यः पञ्च मृज्जले।**
**पावमान्योऽथ वारुण्यः एवं तूत्तरयोर्द्वयोः ।। ६६।।**

गौर्यां गव्येषु स्वे मन्त्राः मृज्जले पञ्च वारुण्यः। अथ कषाये पावमान्य उत्तरयोः द्वयोः रत्नजलगन्धजलयोस्तु पञ्च वारुण्य एव।

**मूलं स्वीया च गायत्री दधिक्राव्णस्ततस्तृचः।**
**आपो हीत्यवते हेडो हिरण्यवर्णा यजुर्विदाम् ।। ६७।।**

ज्येष्ठायां पूर्वं मूलं ततः स्वीया गायत्री 'दधिक्राव्णः' तत 'आपो हिष्ठे'ति तृचम् 'अवते हेडः' 'हिरण्यवर्णाः' पुनर्यजुर्विदाम्।

**पावमानोऽनुवाकोऽथ प्रागादिमनवः क्रमात्।**
**मध्यमे स्वस्तिसूक्तं स्यात् ज्येष्ठायां मूलसंयुतम् ॥ ६८॥**

पावमानोऽनुवाकः। काळ्यां पूरणमन्त्रा एव स्युः। मातृषु स्वस्वमन्त्राः स्युः। क्षेत्रपालेऽपि स्वमन्त्र एव। इति बिम्बशुद्धिरीरिता।

**काल्यां पूरणमन्त्राः स्युः स्वस्वमन्त्रास्तु मातृषु।**
**स्वमन्त्रः क्षेत्रपालेऽपि बिम्बशुद्धिरितीरिता ॥ ६९॥**

**पितामहेऽर्घ्यादि ततः पवित्रं धूपप्रदीपाञ्जनरोचनाश्च।**
**पुण्याहकृत् पादुकचामराणि छत्रं च दद्यादथ वारिधाराम् ॥ ७०॥**

**वस्त्रकुण्डलयुगोपवीतवर्माख्यगन्धकुसुमाक्षतस्रजः।**
**चामराञ्जनमथातपत्रकं रातु भास्वति वितानकध्वजम् ॥ ७१॥**

**वस्त्रद्वयोपवीतकगन्धप्रसवाक्षतस्रजो लक्ष्म्याम्।**
**प्रददातु रोचनाञ्जनवितानचामरयुगातपत्राणि॥ ७२॥**

**पुण्याहकृत् सिञ्चतु वारुणीभिः शेषाद्भिरिष्ट्वा वितरेद् वितानम्।**
**सचामरच्छत्रमयं पुराद्यैर्नीराजयेत् पञ्चसु दिक्षु गौर्याम् ॥ ७३॥**

अथ ब्रह्मादीनामुपहारदानक्रममाह – पितामह इति। रोचना गोरोचना। भास्वति वस्त्रकुण्डलादि रातु ददातु। लक्ष्म्यां वस्त्रद्वयादि प्रददातु। गौर्यां पूर्वं पुण्याहकृद् भूत्वा तच्छेषाद्भिर्वारुणीभिः सिञ्चतु। पुनरिष्ट्वा वितानादि वितरेत्। 'अयं पुर' इत्याद्यैः पञ्चभिः पञ्चासु दिक्षु नीराजयेत्।

**पाद्यादिभूषान्तमथाङ्गुलीयं द्वे कुण्डले रातु जलादि यज्वा।**
**द्वे पादुके यानमथातपत्रं परेषु दद्यादथ दर्पणं च ॥ ७४॥**

परेषु पाद्यादिभूषान्तं नवकमथाङ्गुलीयं द्वे कुण्डले च रातु। अथ जलादि यज्वा भूत्वा पादुकाद्वयादि दद्यात्।

**दत्त्वार्घ्यमुत्तिष्ठमनुप्रजापी सूत्थाप्य मूलेन निधाय याने।**
**प्रदक्षिणप्रक्रमतो नयेत तन्मण्डपं शाकुनकादिजापी ।। ६५।।**

बिम्बस्यानयनाय तन्त्रसमुच्चयोक्तं श्लोकं लिखतिः – दत्त्वार्घ्यमिति।

**दत्त्वा द्वार्युपचारतोऽर्घ्यमवतार्याथ स्वमूलेन त-**
**न्नीत्वान्तर्विनिधाय चाधिशयनं मूलेन सर्वेष्वपि।**
**दत्त्वार्घ्यं क्रमविद् विधाय निजमूलव्यापकार्णाङ्गवि-**
**न्यासं स्वालयसंमुखं स्वमनुना शय्यातले शाययेत् ।। ७६।।**

अन्तरानयनक्रममाह – दत्त्वा द्वारीति। सर्वेषु द्वार्युपचारतोऽर्घ्यं दत्त्वावतार्याथ स्वमूलेनान्तर्नीत्वा मूलेनाधिशयनं शयने विनिधायार्घ्यं दत्त्वा क्रमवित् तत्कर्मक्रमज्ञो गुरुर्निजमूलव्यापकार्णाङ्गविन्यासं विधाय शय्यातले स्वमनुना स्वप्रासादाभिमुखं शाययेत्।

**गुरुः स्नाताचान्तो निशि समुपविश्योपशयनं**
**कृतन्यासो गौर्यां शिवमनुयुगिष्टात्मगणपः।**
**चितिं बिम्बाद् धृत्वात्मनि हृतधारादिः कृतधृति-**
**श्चितिं प्रत्यर्प्यापि क्षितिचरमवर्णन्यसनकृत् ।। ७७।।**

ध्यानाधिवासं संक्षिपति – गुरुरिति। गुरुः स्नाताचान्तो भूत्वा निशिकाले उपशयनं शयनस्य समीपे उपविश्य कृतन्यासः कृतस्वसकलीकरणो गौर्यां शिवमनुयुक् शिवमन्त्रसकलीकरणयुक्तश्च भूत्वा शङ्खपूरणानन्तरं इष्टात्मगणपश्च भूत्वा बिम्बार्पितं चैतन्यं धृत्वात्मनि संयोग्य हृतधारादिभिः तत्त्वसंहारकृत् कृतधृतिः कृतधारणश्च भूत्वा चितिं प्रत्यर्प्य बिम्बे योजयित्वा क्षितिचरमन्तत्त्वसृष्टिं कृत्वार्णन्यसनकृत् लिपिन्यासकृद् भूत्वा।

**मनूत्पत्तिं कृत्वासननिजमनुन्यासमपि चा-**
**र्चिते पीठे स्वावाहयतु तनुतत्वान्यथ मनुम्।**
**लिपिं तत्त्वार्णाङ्गाद्युत निजषडध्वाद्यपि बुधो**
**न्यसेत् पूजां बिम्बे चरतु च तथा मण्डल इह ।। ७८।।**

मनुत्पत्तिं मन्त्रोदयप्राणायामादिं आसननिजमनुन्यासं पीठन्यासमूल-मन्त्रन्यासमपि कृत्वा चार्चिते पीठे तनुतत्त्वानि मूर्तितत्त्वानि अपिच मनुं मूलमनुं च, स्वावाहयतु। अथ बुधो लिपिं तत्त्वार्णाङ्गादि च न्यसेत्। उत अथवा निजषडध्वाद्यपि न्यसेत्। इह बिम्बे मण्डले च पूजां चरतु।

**अष्टलिङ्गोद्भवे गौर्यां लक्ष्म्यां पद्मोदरे यजेत्।**
**कृष्णे चक्राम्बुजेऽजे वाग्धनदादिषु भद्रके ।। ७९।।**

**लिङ्गाख्येऽष्टविकारवर्गपदवत्क्षेत्रेऽन्तरर्धेऽम्बुजं**
**पीठाढ्यं बहिरस्य दिक्षु रचयेद् द्वारं पदैर्द्वादश।**
**तत्कोणेषु चतुर्षु षोडशपदैः कुर्यात् ततः स्वस्तिकं**
**तन्मध्येऽष्टपदैश्चतुर्दिशमथो लिङ्काकृतिं कल्पयेत् ।। ८०।।**

**मध्ये षोडशभिस्त्रिवृत्तसहितं पद्मं च तद्बाह्यतो**
**राशिस्थानगताम्बुजानि परितः पङ्क्तिद्वयेऽब्ध्युन्मितैः।**
**कुर्यात् पङ्क्तियुजाथ वीथिमभितो द्वारादिकं तद्बहिः**
**सर्वं भद्रकवत् विकारकृतियुक्क्षेत्रेऽत्र पद्मोदरे ।। ८१।।**

**पीठं ब्रह्मशिलान्वितं कृतजलावासान्तमुक्तक्रमात्**
**सिक्त्वा गान्धजलाभिपूर्णकलशैर्न्यस्येच्च शय्यान्तरे।**
**संस्थाप्यैव यथास्थिति स्थपतिना गर्भालये गौरवे**
**सिञ्चेद् वारुणवाभिरुक्तकलशैर्भूयोऽभिषिञ्चेद् गुरुः ।। ८२।।**

**हामादिबीजपवनायमनादिक्लृप्त्या**
**भूतानि पञ्च परमात्मनि संविलाप्य।**
**शोषादिकं च सुविधाय धारवधीनि**
**सृष्ट्वाथ तानि तनुयाल्लिपिभावनां च ।। ८३।।**

**तत्तच्छक्त्युक्तबीजाहितपवननिरोधेन संपाद्य मान्त्रं**
**भावं पीठीयमन्त्रान् न्यसतु वितनुयात् तत्र तत्पीठपूजाम्।**
**बीजेनावाह्य शक्तिं सकलयतु यजेच्चाथ वेधःशिलायां**
**सर्वे कृत्वैवमावाहयतु मपरतः कल्पवित् पूजयेच्च ।। ८४।।**

तत्र गौर्यां अष्टलिङ्गोद्भवे मण्डले यजेत्। लक्ष्म्यां पद्मोदरे च कृष्णे चक्राम्बुजे, अजेऽपि चक्राम्बुजे वा। वाग्धनदादिषु भद्रके च। पीठनपुंसकशिलयोः शोधनार्थमुक्तस्य 'पीठं ब्रह्मशिलान्वितमि'त्याद्यस्य किञ्चिद् भेदयुक्तस्य श्लोकत्रयस्य तन्त्रसमुच्चये व्याख्यात एवार्थः। तत्र वेधश्शिलायां नपुंसकशिलायामेवं सर्वं कृत्वा कल्पवित् मपरत आवाहयतु पूजयेच्च।

**बिम्बमिष्ट्वैवमाचार्यः पीठं ब्रह्मशिलामपि।**
**वस्त्रैराच्छाद्य संरक्षेदस्त्रतालत्रयादिभिः ।। ८५।।**

एवमाचार्यो बिम्बपीठं ब्रह्मशिलामपीष्ट्वा वस्त्रैराच्छाद्य अस्त्रतालत्रयादिभिः संरक्षेत्।

**बिम्बग्रहेऽजकृष्णादौ कार्यं वैष्णववद्धुतम्।**
**शैववद्धनदार्क्कादाविदानीं बिम्बपूर्तिदम्।। ८६।।**

**गुरुः स्वकुण्डेऽग्निमुखं विधाय सर्गक्रमेणाखिलतत्त्वमन्त्रैः।**
**हुत्वा चतुर्द्रव्यहुतान्तमाज्यं संपातपातादि करोतु बिम्बे ।।**
**८७।।**



अथ तत्त्वहोममाह – गुरुरिति।

**होमोऽयं पञ्चतत्त्वैर्वा केवलैर्विधिवद् भवेत्।**
**स्वे स्वे तु कुण्डे वीरादिनवानां स्यादिदं हुतम् ।। ८८ ।।**

अयं तत्त्वहोमः केवलैः पञ्चतत्त्वैर्वा भवेत्। वीरभद्रादिनवानांत्विदं हुतं स्वे स्वे कुण्डे स्यात्।

**अथाचार्यकुण्डात् क्रमाद्धोममन्त्रैः**
**विहृत्याग्निमाधाय दिक्कुण्डकेषु**
**स्वकुण्डे गुरुर्मूर्तिपाः स्वस्वकुण्डे-**
**ष्वधीवासहोमं विदध्युर्यथास्वम् ।। ८९ ।।**

अधिवासहोमं प्रस्तौति – अथेति। अथ आचार्यकुण्डाद्धोममन्त्रैः क्रमादग्निं विहृत्य पूर्वादिदिक्कुण्डकेषु अग्निमाधाय गुरुः स्वकुण्डे मूर्तिपाः स्वस्वकुण्डेषु च यथास्वं स्वस्वविहितक्रमेण अधीवासहोमं विदध्युः।

**कृष्णाग्रजाजगिरिजासु चतुर्दिशासु**
**शेषेष्वथाष्टसु रवीन्दिरयोर्द्विधापि।**
**होमोऽथवा भवतु राशिदिशासु मूर्ति-**
**पानां गुरोः स्वदिशि मातृषु तु स्वदिक्षु ।। ९० ।।**

तत्र कृष्णाग्रजाजगिरिजासु चतुर्दिशासु शेषेष्वष्टसु चतसृषुदिशासु वा रवीन्दिरयोर्द्विधापि चतसृषु अष्टासु वा दिशासु। अथवा राशिदिशासु राशिस्थानेषु वा मूर्तिपानां होमो भवतु। गुरोः स्वदिशि शिरःस्थाने च; मातृषु तु स्वस्वदिक्षु होमो भवतु।

**मूलेन पक्वमचलाब्धिजयोर्जिनार्णे-**
**नान्येषु तेन जननीष्वितरेषु पूर्णाम्।**
**मूलेन कुर्युरखिलेष्वपि होमक्लृप्ति-**
**गुर्वीरितैव समिदादिषु चैव संख्या ।। ९१ ।।**

तत्र पक्वमचलाब्धिजयोर्मूलेनान्येषु जिनार्णेन च कुर्युः। जननीषु तेन जिनार्णेन इतरेषु मूलेन च पूर्णां कुर्युः। अखिलेष्वपि होमक्लृप्तिः होमप्रकारः समिदादिषु द्रव्यसंख्या च गुर्वीरितैव।

**समिदाज्यहवींषि लाजराजीं-**
**श्चतुरास्ये सयवांस्तिलांश्च शालीन्।**
**सघृतान् निगमादिभिर्निजाङ्गै-**
**रथवा जुह्वतु दिक्षु मूलतोऽन्तः ।। ९२।।**

**रवौ पलाशार्कसमिद्घृतान्न-**
**लाजांस्तिलानक्षतसर्षपांश्च।**
**ससर्वधान्यान् सघृतान् स्वमूले-**
**नान्तर्बहिर्जुह्वतु धातृपूर्वैः ।। ९३।।**

**दिक्ष्वङ्गैरष्टहोमाश्चेत् प्रत्यूषादिभिरेव वा।**
**बीजवापोदितान्येव सर्वधान्यानि भास्वति ।। ९४।।**

तन्त्रसमुच्चयोक्तान्येव द्रव्याणि मन्त्रांश्च पृथक् पृथगाह समिदित्यादि। चतुरास्येऽन्तर्मूलतः तत्र चतुसृषु दिक्षु निगमादिभिः अग्निमीळे, इषे त्वा, अग्न आयाहि, शंनो देवीरिति मन्त्रैर्वा निजाङ्गैर्हृदयशिरः शिखाकवचैर्वा समिदादिनवद्रव्याणि जुह्वतु। रवावन्तः स्वमूलेन बहिर्द्वादशहोमपक्षे धातृपूर्वैरष्टहोमपक्षेऽङ्गैः पूर्वादिचतुर्दिक्ष्वस्त्रैरग्निनिर्ऋतिवाय्वीशानकोणेषु हृदयशिखाकवचशिरोभिर्वा द्वारघटोक्तप्रत्यूषादिभिर्वा चतुर्होमपक्षे स्वस्वदिङ्मुखैः प्रत्यूषादिभिश्च पलाशसमिदादिदशद्रव्याणि जुह्वतु भास्वति सर्वधान्यानि बीजवापोदितान्येव।

**धनदे समिदाज्यहविर्लाजतिलान् जुहुयुरथ च शालियवान्।**
**परितः शतमष्टयुतं मूलेन द्विगुणमन्तश्च ।। ९५।।**

धनदे मूलेन परितः समिदादिसर्वद्रव्याण्यष्टयुतं शतमन्तर्द्विगुणं च जुहुयुः।

**समिधः स्वर्णासनबिल्वखदिरजाः स्युर्दिशासु विदिशासु**
**साशोकशमीद्विजतरुरोहिणजा मध्यतस्तु पालाश्यः ।। ९६ ।।**

तत्र दिशासु स्वर्णासनविल्वखदिरजाः[१]। स्वर्णं[२] (കൊന്ന) असनं (വേങ്ങ)। विदिशासु अशोकशमीद्विजतरुरोहिणजाश्च समिधः स्युः। मध्यतस्तु पालाश्यः स्युः।

**सूक्तेन सर्पिः पुरुषस्य हुत्वा**
**समिद्घृतान्नं शतमष्टयुक्तम्।**
**सर्वेऽपि सिद्धार्थतिलांश्च कृष्णे**
**स्वपञ्चतत्त्वैर्जुहुयुः क्रमेण ।। ९७ ।।**

कृष्णे सर्वेऽपि पुरुषस्य सूक्तेन सर्पिर्हुत्वा पलाशसमिद्घृतान्नं सिद्धार्थतिलाश्च अष्टयुक्तं शतं स्वपञ्चतत्त्वैः क्रमेण जुहुयुः।

**मूलेन मध्ये समिदाज्यमन्नं**
**लाजांश्च योगादिभिरष्टदिक्षु**
**शालीन् ससिद्धार्थकसर्षपांश्च**
**वाण्यां तिलान् जुह्वतु च क्रमेण ।। ९८ ।।**

वाण्यां मध्ये मूलेनाष्टदिक्षु पूजायामुक्ताभिर्योगादिभिः शक्तिभिः पलाशसमिदाद्यष्टद्रव्याणि क्रमेण जुह्वतु।

**वेदादिमन्त्रैस्समिदाज्यमन्नं**
**लाजान् यवान् शालितिलान् क्रमेण।**

१. ‘खदिरजाः’ इत्येव मूलेऽपि। किन्तु ‘खादिराः’ इति पठनीयम्।
२. अनेन आरग्वधवृक्षो विवक्षितः।

**दिशासु जुह्वत्वथ मूलतोऽन्त-**
**रङ्गैर्दिशास्वष्टसु चेद् रमायाम् ॥ ९९ ॥**

रमायामन्तर्मूलतश्चतसृषु दिशासु चेद् वेदादिमन्त्रैरष्टसु दिशासु चेदङ्गैश्च समिदादिसप्तद्रव्याणि जुह्वतु ।

**श्रीब्रह्मखदिरप्लक्षपिप्पलीवटमार्गजाः**
**शमीमय्यश्च समिधः प्रागाद्यासु यथाक्रमम् ॥ १०० ॥**

अष्टहोमपक्षे पूर्वाद्यष्टसु दिशासु यथाक्रमं श्रीब्रह्माद्या अष्ट समिधः स्युः ।

**पालाश्यो राशिकुण्डेषु होम्या द्वादशशक्तिभिः**
**श्रीवागीश्वर्यादिभिः स्युरिन्दिरायां यथाक्रमम् ॥ १०१ ॥**

इन्दिरायां द्वादशहोमपक्षे मेषादिषु राशिकुण्डेषु श्रीवागीश्वर्यादिभिर्द्वादश-शक्तिभिः पलाशसमिधः आज्यादिषङ्बीजद्रव्याणि च स्युः ।

**मूलेन दशाख्याभिः सकृदाज्यं मूलतोऽष्टशतमपि गौर्याम् ।**
**हृल्लेखाद्यैः समिदाज्यहविस्तिलसर्षपांश्च तावज्जुहुयुः ॥ १०२ ॥**

गौर्यां मूलेन देव्यादि दशाख्याभिश्च सकृदाज्यं हुत्वा पुनर्मूलतोऽष्टशत-मप्याज्यं हुत्वा हृल्लेखाद्यैः पञ्चभिः समिदादिपञ्चद्रव्याणि च तावत् जुहुयुः ।

**स्वाख्याभिर्ज्येष्ठायां केष्ठेत्यृग्भिः स्वमूलतः समिधः ।**
**मध्याशासु फलीकरणतिलान् सक्तूंश्च मूर्तिभिर्जुहुयुः ॥ १०३ ॥**

ज्येष्ठायां ज्येष्ठाकलिपत्न्यादि स्वाख्याभिः केष्ठानर इत्याद्याभिश्च घृतं हुत्वा मध्याशासु मध्ये चतसृष्वाशासु च फलीकरणानि तिलान् सक्तूंश्च त्रीणि द्रव्याणि मूर्तिभिर्यथोक्तसंख्यं जुहुयुः ।

**ज्येष्ठायां मूर्तयस्तिस्रो भूर्लक्ष्म्यै भुव उग्रियै।**
**क्रमात्स्वः कालकर्णिन्यै द्विठान्ता द्रविणक्रमात् ।। १०४।।**

मूर्तीराह – ज्येष्ठायामिति। भूर्लक्ष्म्यै भुवः श्रियः स्वः कालकर्णिन्यै एता द्विठान्ताः स्वाहान्ताः तिस्रो मूर्तयः स्युः।

**शमीपलाशबिल्वानां स्युर्दिक्षु तिसृषु क्रमात्।**
**समिधस्त्र्यश्रकुण्डेषु गुरुकुण्डे पलाशजाः ।। १०५।।**

तत्र तिसृषु दिक्षु त्र्यश्रकुण्डेषु शमीपलाशबिल्वानां समिधः स्युः। त्र्यश्रे गुरुकुण्डे पलाशजाश्च।

**काल्यां मूलेनान्तर्ब्रह्मोक्तान्येव नवमसक्तूनि।**
**जुहुयात् द्रव्याणि गुरुर्दिक्षु निजाङ्गैश्च मूर्तिधराः ।। १०६।।**

काल्यामन्तर्मूलेन गुरुर्दिक्ष्वष्टसु निजाङ्गैश्च मूर्तिधरा व्रीहिस्थान्येव गतसक्तूनि[1] ब्राह्माणि ब्रह्मण्युक्तानि समिदादीनि नव द्रव्याणि जुहुयात्।

**मातृषु निजनिजकुण्डे समिदाज्यान्नानि सक्तुलाजांश्च।**
**शालीन् राजितिलानपि जुहुयुर्वीरे गुरुः परेष्वितरे ।। १०७।।**

मातृषु वीरे वीरभद्रकुण्डे गुरुः परेष्वितरे मूर्तिधराश्च निजनिजकुण्डे समिदाज्यष्टद्रव्याणि स्वस्वमन्त्रैर्जुहुयुः।

**वीरे बैल्व्यः समिधो ब्रह्मार्ककदम्बचलदलवटोत्थाः।**
**काष्मर्यमार्गजा च मातृष्वौदुम्बर्य इभवदने ।। १०८।।**

वीरे वैल्व्यः मातृषु क्रमेण पलाशाद्याः इभवदने औदुम्बर्यः समिधः स्युः।

**असिताङ्गभैरवादिभिरष्टसु दिक्षु स्वमूलतो मध्ये।**



१. 'ब्रह्मोक्तान्येव' इति मूलपाठे दृश्यते। व्याख्यानुसारी पाठे मृग्यः।।

**काल्युक्तद्रव्याणि तु दश जुहुयुः क्षेत्रपालेऽपि ।। १०९ ।।**

क्षेत्रपालेऽसिताङ्गभैरवादिभिरष्टभिरष्टसु दिक्षु मध्ये स्वमूलतश्च काल्युक्तद्रव्यणि नव जुहुयुः।

**मध्ये पलाशस्य चतुर्दिशासु**
**स्वस्वक्रमात् तोरणभूरुहाणाम्।**
**ब्रह्मादिषु स्युः समिधोऽथ यत्र**
**नोक्ताः पलाशस्य तु तत्र च स्युः ।। ११० ।।**

ब्रह्मादिषु सर्वेषु पञ्चहोमपक्षे मध्ये पलाशस्य चतुर्दिशासु स्वस्वक्रमात् स्थितानां तोरणभूरुहाणां समिधः स्युः। यत्र तु समिधो नोक्तास्तत्रापि पलाशाः स्युः।

**पलाशखदिराश्वत्थप्लक्षन्यग्रोधबिल्वजाः।**
**औदुम्बर्यः स काष्मर्यः सूर्यादिष्वष्ट दिक्षु तु ।। १११ ।।**

सूर्यादिषु नवहोमपक्षे पलाशाद्यष्टसमिधोऽष्टदिक्षु मध्ये पालाश्यश्च।

**तत्संपातेन स्पृशेदत्र बिम्बं**
**पादाद्याकं पादहृन्नाभिवक्त्रे।**
**पृष्ठे के देहे च यक्षेऽथ लक्ष्म्यां**
**पद्धस्ताङ्गुल्यास्यहृत्पृष्ठकेषु ।। ११२ ।।**

अथ सकलेषु तत्तत्संपातेनात्र बिम्बे पादाद्याकं पादादिमूर्धान्तं स्वस्वहोममन्त्रेण स्पृशेत्। यक्षे वैश्रवणे पादादिसप्तस्थानेषु तत्तद्रव्यहोमानन्तरं तदा तदा क्रमेण स्पृशेत्। अथ लक्ष्म्यां पद्धस्ताङ्गुल्यादिषु पद्धस्ताङ्गुलिषु वदने कुक्षौ पृष्ठे शिरसि स्कन्धे कट्यां च सप्तस्थानेषु तत्तद्द्रव्यहोमानन्तरं तदा तदा गुरुर्मूलेन वा पद्ममुद्रया संपातं स्पृशेत्। तथा 'रमाकल्पे' -

"पद्धस्ताङ्गुलि वदनं कुक्षिं पृष्ठं शिरस्तथा।
स्कन्धं कटिं तथैकैकं हुत्वा हुत्वा स्पृशेत् क्रमात्।।
सम्पाताज्ययुताम्भोजमुद्रया साधकः स्वयम्।
मूलेन पक्वं पूर्णा च स्पर्शनं चात्र कीर्तितम्।।"

इति।

**भूराद्यैर्जुहुयाद् घृतं दधिपयोमाध्वीः समस्तं गुरु-**
**र्मूलेन त्वखिलेषु मातृषु तु पञ्च स्वाणुभिर्जुह्वतु।**
**ज्येष्ठायां तु गुरुः पयोऽपि च घृतं मूलेन काल्यां स्वमू-**
**लांशैः पञ्चभिरंशविद् दधिमधुक्षीराज्यसर्वाणि च ।। ११३।।**

पुनः शान्तिहोमार्थमत्रैव गुरुरखिलेषु तु देवेषु भूराद्यैश्चतुर्भिर्घृतं दधिपयोमाध्वीः मूलेन समस्तं चाष्टशो जुहुयात्। मातृषु तु पञ्चद्रव्याणि स्वाणुभिः स्वस्वमन्त्रैः ते सर्वे जुह्वतु। ज्येष्ठायां तु गुरुः पयोऽपि घृतं च मूलेन जुहुयात्। काल्यामंशविद् ऐं स्वाहा क्लीं स्वाहा सौः स्वाहा ह्लीं स्वाहा ऐं क्लीं सौः ह्लीं भद्रकाल्यै नमः स्वाहा इति पञ्चभिः स्वमूलांशैर्दधिमधुक्षीराज्यानि सर्वाणि च जुहुयात्।

**पन्नाभिहृच्छिरोदेहेष्वर्पयेत् तत्तदन्ततः।**
**स्रुवेणैवेह सम्पातं ज्येष्ठायां हृदि मूर्धनि ।। ११४।।**

पुनः सर्वेषु तत्तद्धोमान्ततः स्रुवेणैव पन्नाभिहृच्छिरस्सु देहे च इह शान्तिहोमे सम्पातमर्पयेत्। ज्येष्ठायां हृदि मूर्धनि च।

**पीठं स्वशक्त्या प्रणवेन वेधः-**
**शिलां जिनार्णेन मणींश्च सर्पिः।**
**हुत्वोक्तसंख्यं क्रमतः समर्प्य**
**सम्पातसर्पिस्त्वधिवासयेच्च ।। ११५।।**

पुनः सर्वेषु स्वशक्त्या स्वस्वशक्तिबीजेन तन्त्रसमुच्चयोक्तसंख्यंसर्पिर्हुत्वा पीठं प्रणवेन हुत्वा वेधश्शिलां नपुंसकशिलां जिनार्णेन हुत्वा मणींश्च क्रमतः सम्पातसर्पिः समर्प्य स्वेधिवासयेत्। रत्नन्यासार्थ जिनार्णजनितसम्पातशेषं रक्षेच्च।

**हुत्वा निजाभिर्नवशक्तिभिश्च**
**सर्वेषु संपातघृतं सुरक्षेत्।**
**सर्वे ततः स्विष्टकृदादि हुत्वा**
**होमं विधानेन समापयेयुः ।। ११६ ।।**

पुनः सर्वेषु निजार्भिनवशक्तिभिराज्यं यथोक्तसंख्यं हुत्वा सम्पातघृतं सुरक्षेत् ततः सर्वे विधानेन स्विष्टकृदादि हुत्वा होमं समापयेयुः।

**गुरुरथ च दुग्धसिद्धं निवेद्यमखिलेषु मूलमन्त्रेण।**
**इष्ट्वा निवेद्य हुत्वा विप्रानुपभोज्य किरतु बलिम् ।। ११७।।**

अथ गुरुरखिलेषु मूलमन्त्रेणेष्ट्वा दुग्धसिद्धं पायसं निवेद्यं हुत्वा स्वकुण्डे पूजाहोमं कृत्वा विप्रानुपभोज्य बलिं किरतु। गुरुरित्यनेन अजकृष्णादिषु गोदोहनमप्यूह्यम्।

**बलिश्रीकृष्णविधिषु वैष्णवोऽन्येषु शाम्भवः।**
**कार्यः स्वः स्वो बलिस्तु प्राङ्मातृषु स्वस्वसंनिधौ ।।११८।।**

श्रीकृष्णविधिषु वैष्णवा विष्णूक्त एव बलिः कार्यः। अन्येषु शाम्भवः शिवोक्त एव। मातृषु तु स्वस्वसन्निधौ स्वस्वस्थाने प्राग्भागे स्वः स्वो बलिः कार्यः।

**कुशगन्धाक्षतयुक्तं क्षैरेयं रक्तगन्धकुसुमयुतम्।**
**गौलं हारिद्रान्नं सर्वगन्धकुसुमान्वितं पिशितयुक्तम् ।। ११९ ।।**

**मातृणां बल्यन्नं सर्वान्नं भवति वीरभद्रस्य।**
**फलपूपमिश्रितं स्याद् विघ्नस्य बलिक्रमो नित्यः ।। १२० ।।**

मातृणां क्रमेण बलिद्रव्यमाह – कुशगन्धेति। एकैकं पदमेकैकत्र योज्यम्। पिशितयुतमिति। पिशितार्थं मोदकेन प्रतिनिधिरेव प्राश्यः। बलिक्रमो नित्य इति भूतबलिवदित्यर्थः।

**आचम्य नैवेद्यविसर्जनाद्यं**
**सर्वत्र निर्वर्त्य समुक्तरीत्या।**
**प्रसन्नपूजामपि संविधाय**
**प्रजप्य मन्त्रान् प्रकरोतु रक्षाम् ।। १२१ ।।**

ततस्तन्त्रसमुच्चयोक्तश्लोकेन क्रियाशेषमाह – आचम्येति।

**रत्नादि शयने न्यस्य धारणाभिर्विशोध्य च।**
**संपूज्य हुतमन्त्रेण सुधीराच्छाद्य रक्षतु ।। १२२ ।।**

ततो रत्नान्यप्यधिवासयेदित्याह – रत्नानीति।

**ततः प्रतिष्ठादिवसे स्नानाचामादिकृद् गुरुः।**
**प्रासादं परिशोध्यैतदात्मनः स्थापनं चरेत् ।। १२३ ।।**

ततः प्रतिष्ठादिवसे विधेयं कर्माह – तत इति। एतदात्मनः प्रासादरूपस्य देवस्य स्थापनं चरेत्।

**कृष्णेऽजे च गृहाष्टदिक्षु परिहोमं वालुकास्थण्डिले-**
**ष्वष्टार्णाक्षरपूर्णकुम्भयुतमादध्युर्नृसूक्तेन तु।**
**हुत्वाज्यं शरतत्त्वभास्वदहिवर्णैः स्वोक्तसंख्यं चतु-**
**र्द्रव्यं राजितिलान् घृतं च समवस्येयुर्हुतं मूर्तिपाः ।। १२४ ।।**



**एवं शौर्यजयोर्विधाय परिहोमांस्ताम्रकुम्भं परं**

**तत्संपातघटोदकैः समभिपूर्याष्टार्णवर्णैः क्रमात्।**
**ऐकीभूतचितिं स्वमूलमनुना सङ्कल्प्य तस्मिन् विभुं**
**प्राच्र्याविष्ट्य नवांशुकेन करगुप्तं मण्डपान्तर्नयेत् ।। १२५।।**

ब्रह्मकृष्णायोः परिहोममाह – कृष्ण इति। मूर्तिपाः कृष्णे अजे गृहाष्टदिक्षु वालुकास्यण्डिलेषु वालुकाविक्षिप्तेषु स्थण्डिलेषु अष्टार्णाक्षरपूर्णकुम्भयुतं स्वस्वाष्टाक्षरवर्णैः पूरितैः कलशैर्युक्तं परिहोममादध्युः। नृसूक्तेन त्वाज्यं हुत्वा शरतत्त्वभास्वदहिवर्णैः पञ्चतत्त्वैर्द्वादशाक्षरेणाष्टाक्षरेण च सप्तभिर्मन्त्रैश्चतुर्द्रव्यं राजितिलान् घृतं च सप्तद्रव्याणि स्वोक्तसंख्यम् अष्टशतसंख्यं हुत्वा हुतं सभवस्येयुः। ततः किञ्चिद्भेदयुक्ताद्यपादतन्त्रसमुच्चयोक्तश्लोकेनैतच्छेषमाह – [1]कृष्णेऽजे च विधाय चेति।

**आचार्यो नववस्त्रधृग् विधिवदाचम्यालयान्तर्निष-**
**द्यात्मानं सकलं विभाव्य गणपं संपूज्य नान्दीमुखम्।**
**कृत्वा मूर्तिधरैः सहाचरितपुण्याहो वटे पीठमि-**
**ष्ट्वात्रास्थाप्य विधेः शिलां प्रणवतः प्रार्थ्याथ रत्नं न्यसेत् ।। १२६।।**

अथ रत्नन्यासात् पूर्वं कर्तव्यं क्रियाकलापं संगृह्णाति – आचार्य इति। विधेः शिलां नपुंसकशिलां प्रणवत आस्थाप्य प्रार्थ्य अथ रत्नं न्यसेत्। प्रार्थनामन्त्रद्वयं पठति।

**"त्वमेव परमा शक्तिस्त्वमेवासनधारिका।**
**देवाज्ञया त्वया देवि स्थातव्यमिह सर्वदा।।**
**स्थितं चराचरं यस्यां रत्नानां निधिरव्ययः।**
**सा त्वं ब्रह्मशिलारूपा तिष्ठात्र धरणि? स्थिरा।।"**

१. अयं प्रतीको नमुद्रिते मूले दृष्टं शक्यः।

**ज्येष्ठायां मणिधातुलोहमिह बीजान्तं कगौर्योस्तदा-**
**द्येतत्स्यान्मणिलोहधातु धनदक्षेत्रेशवाक्पूषसु।**
**मृद्गन्धं धनदेऽधिकं त्रिषु परेषु त्वौषधीबीजकं**
**बीजोपान्तमजोक्तमेव जननीष्वन्येषु रत्नं परम् ।। १२७।।**

अथ रत्नन्यासक्रममाह – ज्येष्ठायामिति। ज्येष्ठायां मणिधातुलोहं बीजान्तं स्यात्। कगौर्योर्ब्रह्मोमयोः इह तदादि बीजादि एतन्मणिधातुलोहं स्यात्। धनदक्षेत्रेशवाक्पूषसु वैश्रवणक्षेत्रपालसरस्वतीसूर्येषु मणिलोहधातुतत्र धनदे मृद्गन्धमधिकं स्यात्। परेषु त्रिषु क्षेत्रेशवाक्पूषसु ओषधीबीजकमधिकम्। जननीष्वजोक्तं बीजोपान्तं यथा भवति तथा रत्नधातुबीजलोहक्रमादित्यर्थः। अन्येषु कृष्णश्रीभद्रकालीषु परं केवलं रत्नं वा। तत्र कृष्णश्रियोर्वैष्णवं वा, काल्यां वक्ष्यमाणं स्वीयं वेत्यर्थः।

**ज्येष्ठायां कुलिशं मुक्ताशङ्खस्फटिकपुष्यकम्।**
**नीलं चैव प्रावलं चाब्जरागं चेन्द्रनीलकम् ।। १२८।।**

**मनःशिलां हरितालमञ्जनं श्यामसीसके।**
**सौराष्ट्रीं रोचनां चैव गैरिकं रसमेव च ।। १२९।।**

**सुवर्णं रजतं ताम्रमायसं त्रपुसीसके।**
**कासीसमारकूटं च हिरण्यं च यथाक्रमम् ।। १३०।।**

**व्रीहिप्रियङ्गुनिष्पावश्यामाकं वैणवं क्रमात्।**
**गोधूमं च तिलं चैव मुद्गं सर्षपमेव च ।। १३१।।**

**के यवव्रीहिनिष्पावप्रियङ्गुतिलमाषकान्।**
**नीवारांश्च तथा शालीन् सिद्धार्थे च यथाविधि ।। १३२।।**

**वज्रं मौक्तिकवैडूर्यं शंखं स्फटिकपुष्यकम्।**
**चन्द्रकान्तं चेन्द्रनीलं पद्मरागं च मध्यतः ।। १३३।।**

**मनश्शिलां हरीतालमञ्जनं श्यामसीसके।**
**सौराष्ट्रीं रोचनां चैव गैरिकं पारतं तथा ।। १३४।।**

**सुवर्णं रजतं ताम्रमायसं त्रपु सीसकम्।**
**सौवर्णं कच्छपं शङ्खं ब्रह्मस्थाने हिरण्यकम् ।। १३५।।**

उत्तक्रमेण तानि द्रव्याणि पृथक् पृथगाह – ज्येष्ठायामित्यादिभिः। ज्येष्ठायां कुलिशादीनि नव रत्नानि, तत्र मनःशिलादीनि नव धातूनि, तत्र सुवर्णादीनि नव लोहानि, व्रीह्यादीनि नव बीजानि। पुनः के ब्रह्माणि यवादीनि नव बीजानि। तत्र वज्रादीनि नव रत्नानि। मध्यतः पद्मरागम्। अत्र सर्वत्र नवमं मध्य इत्यर्थः। तथा मनश्शिलादीनि नव धातूनि। तत्र सुवर्णादिलोह षट्कान्ते सौवर्णं सुवर्णमयं कच्छपं शङ्खं च ब्रह्मस्थाने मध्ये हिरण्यकं च स्यात्।

**अष्टमं वैणवं गौर्यां महानीलं मणीष्वपि।**
**मध्येऽब्जरागमेवास्य बीजेषु त्वष्टबीजकम् ।। १३६।।**

**पुलकं विद्रुमं चापि साञ्जनं श्यामसीसकम्।**
**मनश्शिलां हरितालं गैरिकं पारतं तथा ।। १३७।।**

**हिरण्यं रजतं ताम्रमायसं त्रपु सीसकम्।**
**सुवर्णं तप्तहेमाढ्यमारकूटं त्विहाष्टमम् ।। १३८।।**

**शङ्खं चक्रं रुजां दण्डं खड्गं पाशं शरं तथा।**
**पिनाकमपि सौवर्णान्येतानि त्विह मध्यतः ।। १३९।।**

**पूर्वादिमध्यपर्यन्तं न्यासः सर्वेष्वपि स्मृतः।**
**ज्येष्ठायां मध्यतः स्वास्त्रमष्टलोह्येव वेष्यते ।। १४०।।**

गौर्यां ब्रह्मोक्तबीजेष्वष्टमं वैणवम्। तत्र ब्रह्मोक्तमणीष्वप्यष्टमं महानीलं मध्येऽब्जरागमेव। बीजेषु बीजकं मध्ये त्वष्टबीजकं तत्र पुलकादीनि नव

धातूनि तत्र हिरण्यादीनि लोहानि तप्तहेमाढ्यं सुवर्णं सप्तमं सौवर्णादीनि शङ्खादीनि मध्यतश्च सर्वेष्वपि पूर्वादिमध्यपर्यन्तं क्रमादेव न्यासः। ज्येष्ठायां मध्यतः स्वास्त्रमष्टलोहि लोहाष्टकं वेष्यते।

**वज्रं मरतकं यक्षे पद्मरागं प्रवालकम्।**
**मुक्ता पुष्यमहानीलेन्द्रनीलं सूर्यकान्तकम् ।। १४१।।**

**सुवर्णं रजतं ताम्रमायसं त्रपुसीसके।**
**आरकूटं च विदलं कांस्यं मध्यादितः क्रमात् ।। १४२।।**

**गन्धकं च रसं चैव हरितालं मनःशिलाम्।**
**सौराष्ट्रीं माक्षिकरसौ गैरिकं च रसेन्द्रकम् ।। १४३।।**

**नद्याश्चोभयतस्तीरान्नागवल्मीकगोष्ठकात्।**
**क्षेत्राद्ध्रदाच्च मृच्छैलाद् वेदिमध्याच्च सागरात् ।। १४४।।**

**चन्दनं कुङ्कुमं लोध्रं वङ्गं जातीं च वानरम्।**
**अङ्कोलं कटुकं वज्रं गन्धमेतच्च पूर्ववत् ।। १४५।।**

यक्षे मध्यादितः क्रमाद् वज्रादीनि नव रत्नानि सुवर्णादीनि नव लोहानि गन्धकादीनि नव धातूनि नद्युभयतीरादिभ्यो गृहीता नव मृदाः चन्दनादीनि नव गन्धानि।

**वज्रं चार्कमणिं नीलं महानीलं च मौक्तिकम्।**
**पुष्यगारुडवैदूर्यपद्मरागाश्च भास्वति ।। १४६।।**

**ताम्रायस्त्रपूरूप्याणि पित्तळं कांस्यसीसके।**
**देवलोहं सुवर्णं च मध्यान्तं पूर्ववन्न्यसेत् ।। १४७।।**

**तालं शिलां तोलिकां च माक्षिकं हेममाक्षिकम्।**
**गैरिकं गन्धकं चाभ्रं पारतं नवमं स्मृतम् ।। १४८।।**

**उशीरं जातिरक्ताख्यचन्दनागरुशारिबाः।**
**उत्पलं चन्दनं कुष्ठं शङ्खपुष्पीं यथाक्रमम् ।। १४९।।**

**व्रीहिगोधूमकतिलमाषमुद्गयवानपि।**
**श्यामाकान् शालिसिद्धार्थान् दिक्षु मध्ये च विन्यसेत् ।। १५०।।**

भास्वति पूर्वादिमध्यान्तं वज्रादीनि नव रत्नानि। तत्र ताम्रादीनि नव लोहानि तालादीनि नव धातूनि उशीरादिनवौषध्यः व्रीह्यादिनवबीजानि विन्यसेत्।

**सूर्यवत् क्षेत्रपे वाचि गौर्यां वा शैवमेव वा।**
**सूर्यादिषु चतुर्ष्वेषु श्रीशौर्योर्वा तु वैष्णवम् ।। १५१।।**

क्षेत्रपे वाचि च सूर्यवद् विन्यसेत्। गौर्यां वा विकल्पेन सूर्यवत्। एषु सूर्यादिषु चतुर्षु। सूर्यक्षेत्रपसरस्वतीगौरीषु शैवमेव वा। श्रीशार्यो वैष्णवमेव वा। बीजोपान्तमजोक्तमेव।

**वज्रं मातृषु मुक्तां च पुष्यरागेन्द्रनीलकम्।**
**स्फटिकं चाथ वैदूर्यं मरतकं नीलमेव च ।। १५२।।**

**मनःशिलां हरीतालं सौराष्ट्रीं विद्रुमं तथा।**
**गोरोचनां प्रवालं चाप्यञ्जनं माक्षिकं क्रमात् ।। १५३।।**

**शालीयवं सगोधूमं कङ्कुमाषतिलान् क्रमात्।**
**दिक्षु नीवारनिष्पावान् मध्येऽष्टावपि सर्वतः ।। १५४।।**

**सुवर्णं रजतं ताम्रमायसं त्रपु मध्यतः।**
**सौवर्णं वाहनं स्वं स्वमित्थं वा क्षेत्रपालके ।। १५५।।**

**रत्नानि मातृभिर्धातून् भैरवैर्लोकपालकैः।**
**बीजानीत्थं न्यसेत्काल्यां मध्ये लोहांश्च मूलतः ।। १५६।।**

**रत्नानि सूर्यवद् वाऽस्यां केवलान्येव विन्यसेत्।**
**कालीवद्वा क्षेत्रपाले मध्ये स्वं स्वं च वाहनम् ।। १५७।।**

जननीष्वित्युक्तमाह – वज्रमिति। मातृषु वज्रादीन्यष्ट रत्नानि मनशिशलादीन्यष्ट धातूनि शाल्यादीन्यष्ट बीजानि। मध्येऽष्टावपि सर्वत इति – मध्ये एतत्त्रिकेऽपि अष्टकत्रयं च विन्यसेत्। अत्र लोहे दिक्षु सुवर्णादीनि चत्वारि मध्ये सौवर्णं स्वं स्वं वाहनं च क्षेत्रपालेपीति वा मातृवद्वा इत्यर्थः। काल्यां रत्नधातुबीजलोहसद्भावपक्षे मातृषूक्तानि रत्नानि मातृभिर्भैरवैः धातूनि लोकपालकैः बीजानि इत्थं न्यसेत्। मध्ये लोहांश्च मूलतो न्यसेत्।

अस्यां काल्यां सूर्यवद्वा रत्नानि केवलान्येव विन्यसेत्। क्षेत्रपाले कालीवद्वा। तत्र मध्ये तु स्वं स्वं वाहनं च।

**वज्रं मौक्तिकवैदूर्यं स्फटिकं पुष्यरागकम्।**
**इन्द्रनीलं प्रवालं च शङ्खं कृष्णेऽब्जरागकम् ।। १५८।।**

कृष्णे केवलरत्नपक्षे वज्रादीनि नव रत्नानि।

**वज्रं मुक्ताफलं लक्ष्म्यां वैदूर्यं नीलमेव च।**
**पद्मरागं प्रवालं च पुष्यं मरतकं क्रमात् ।। १५९।।**

लक्ष्म्यां वज्रमुक्ताफलादीन्यष्ट रत्नानि। यत्र मध्ये नोक्तं तव सर्वाणि मध्ये विन्यसेत्। लक्ष्म्यां तु मध्ये हिरण्मयं कूर्मं वृषं पृथिवीं च।

**मध्ये सर्वाणि विन्यस्येद् यत्र मध्ये न चोदितम्।**
**लक्ष्म्यां हिरण्मयं कूर्मं वृषं च पृथिवीमपि ।। १६०।।**

**दिक्पाणवो दिक्षु रवाविभार्णवर्णास्तु कृष्णे निजमूलवर्णाः।**
**स्युरग्रजायामितरेषु मूलं मध्येऽपि सर्वेषु हरौ त्विनार्णः ।।**
**१६१।।**

एतेषां न्यासमन्त्रानाह दिक्पाणव इति। रवौ दिक्षु दिक्पाणवः दिक्पालमन्त्राः। कृष्णे दिक्षु इमार्णवर्णाः अष्टाक्षरमन्त्रस्य वर्णाः। अग्रजायां निजमूलवर्णाश्च स्युः। इतरेषु मूलमेव। सर्वेष्वपि मध्ये मूलं हरौ तु कृष्णे इनार्णः, द्वादशाक्षरमन्त्रः ।

**पुनश्चतुर्दिक्षु मध्ये ज्येष्ठायां कनकं क्रमात्।**
**पञ्चशक्त्यणुभिर्न्यस्यदस्यां रत्नानि हेम वा ।। १६२।।**

**ओं हौं नमः सर्वलोकहृदयायै स्वाहा ।। १।।**
**ओं हृं नमः आत्मतेजसे स्वाहा ।। २।।**
**ओं हूं नमः धर्मतेजसे स्वाहा ।। ३।।**
**ओं क्ष्लूं नमः सर्वहासायै स्वाहा ।। ४।।**
**ओं कं नमः परमेशायै स्वाहा ।। ५।।**

ज्येष्ठायां पुनश्चतुर्दिङ्मध्ये चतसृषु दिक्षु मध्ये च पञ्चशक्त्यणुभिः क्रमात् कनकं न्यस्येत्। अस्यां रत्नानि (वा)। पञ्चशक्तिमन्त्रान् लिखति – हौं नम इत्यादि।

**इति हुतमनुनाभिमृशेत् प्रणवेनावाह्यार्चयेदथ च पीठम्।**
**स्थापितपीठे शक्त्याऽऽवाह्य यजेदिह च पीठमथ रक्षेत् ।। १६३।।**

हुतमनुना होमोक्तमन्त्रेणाभिमृशेत् स्पृशेत्। पुनः प्रणवेनावाह्यार्चयेत्। अथ स्थापनीयं पीठमर्चयेच्च। पुनः स्थापितपीठे शक्त्यावाह्य यजेत्। इह च प्रतिष्ठार्थं पीठं यजेच्च। अथ रक्षेच्च।

**बिम्बे तत्परिकुम्भसेचनकृदिष्ट्वा कर्मविन्मण्डला-**
**वध्युद्वासनकर्करीकलशराण् निद्राघटोद्धारणम्।**
**शेषोद्वासनमङ्गकर्म च चरेन्नीराजनार्घ्यार्पणो-**
**त्तिष्ठोत्थापनयापनानि परिगत्या स्वालयासादनम् ।। १६४।।**

अथ बिम्बानयनकर्मक्रममाह – बिम्ब इति। कर्मवित् तन्त्रसमुच्चयोक्तकर्मज्ञो गुरुः बिम्बे तत्परिकुम्भसेचनकृत् परिकुम्भशब्देन परिहोमवतोः परिहोमकलशसेचनं सर्वत्र विद्येश्वरकलशसेचनं चोच्यते। अन्येषु विद्येश्वरकलशसेचनमेव तत् कृत्वा बिम्बे मण्डले चेष्ट्वा मण्डलावध्युद्वासनकर्करीकलशराण्निद्राघटोद्धारणं तोरणादिमण्डलपर्यन्तस्योद्वासनं कर्कर्याः कुम्भेशस्य निद्राघटस्य च मूर्तिपरुद्धारणं पुनर्मङ्गलाङ्कुरादिशय्यापर्यन्तस्य शेषस्वोद्वासनं पुनः अङ्गकर्म बिम्बे लयाङ्गकरणं पुनर्नीराजनं अर्घ्यार्पणमुत्तिष्ठब्रह्मण इत्युत्थापनं यापनं प्रादक्षिण्येन स्वस्वप्रासादासादनं चाचरेत्।

**नीराजनं प्राग्वर्धन्या धाराथार्घ्यकरो गुरुः।**
**बिम्बं निद्राघटः कुम्भेश्वरः कर्तेत्ययं क्रमः ।। १६५।।**

गमने क्रममाह – नीराजनमिति। प्राङ्नीराजनं तद्यापनमित्यर्थः। पुनर्वर्धन्या धारा तत्पातनम्। अथार्घ्यकरो गुरुः गच्छेत् पुनर्बिम्बं तत्प्रापणं पुनर्निद्राघटः तद्गमनं पुनः कुम्भेशस्तद्गमनं पुनः कर्ता च गच्छेत्। अयं क्रमः स्यात्।

**द्वार्यर्घ्यार्पणमन्तरास्पदपराग् भद्रासने स्थापनं**
**सद्योऽर्घ्यार्पणवर्धनीजलवृती तत्रास्य विघ्नार्चनम्।**
**कुर्वीताथ विधानवित् परदशामन्त्राभिवाहान् क्रमाद्**
**दानं कालविधापनं तदनु नीराज्य प्रतिष्ठापनम् ।। १६६।।**

पुनस्तत्क्रियाशेषं सङ्गृह्णाति – द्वारीति। द्वारदेशे स्थित्वार्घ्यार्पणं पुनरन्तर्नीत्वास्पदपराग्भागे प्रतिष्ठास्थानस्य पृष्ठभागे भद्रासने स्थापनं सद्यस्तदानीमेवार्घ्यार्पणवर्धनीजलवृती अर्घ्यार्पणं वर्धनीजलेनावरणं च पुनस्तत्रास्य उपविश्य विघ्नार्चनं गणपतिपूजनं पुनः परदशामन्त्राभिवाहान् परावाहनमवस्था-वाहनं च मन्त्रावाहनं च। पुनर्ब्राह्मणेभ्यो दानं कालविधापनं मुहूर्तदानेन तत्परिग्रहं च तदनु नीराज्य प्रतिष्ठापनं च विधानविद् गुरुः कुर्वीत।

**प्रणवो मूलरुद्धोऽत्र स्यात् परावाहने मनुः।**
**तद्वर्णरुद्धप्रणवान् वर्णस्थानेषु विन्यसेत् ।। १६७।।**

परावाहनादिकं विवृणोति – प्रणव इति। अत्र परावाहने मूलरुद्धः प्रणवो मनुः। तदा मूलवर्णस्थानेषु तद्वर्णरुद्धप्रणवान् मूलाक्षरपुटितप्रणवान् विन्यसेत्।

**मूर्तयः स्युर्मूलरुद्ध अवस्थावाहनाणुषु।**
**पञ्चभिर्व्यार्पयेद् यद्वाऽथान्तिमौ तु हृदि न्यसेत् ।। १६८।।**

अवस्थावाहनाणुषु मूलमन्त्ररुद्धा स्वस्वपञ्चमूर्तयः स्युः। तन्न्यासे पञ्चभिरपि व्यापयेत्। यद्वा अथ त्रिभिर्व्याप्या अन्तिमौ तु मन्त्रौ हृदि न्यसेत्।

**गायत्री स्वमनुश्च के ध्रुव इने वाक्क्षेत्रपालार्थदे**
**मूलं तारनिरुद्धमेतदगजायां पञ्च तत्त्वानि च।**
**कृष्णे वैष्णवसूक्तमूलमपरं लक्ष्म्यां प्रतिष्ठामनुः**
**काल्यामों तु ययान्ततोऽग्रभुवि मूलं स्थापयाम्यन्ततः ।।**
**१६९।।**

प्रतिष्ठामन्त्रं क्रमेणाह – गायत्रीति। के ब्रह्मणि गायत्री स्वमूलमनुश्च प्रतिष्टामनुः स्यात्। इने ध्रुवः प्रणव वाक्क्षेत्रपालार्थदे सरस्वतीक्षेत्रपालवैश्रवणेषु तारनिरुद्धं मूलम्। अगजायां गौर्यामेतत् तारपुटितमूलं पञ्च तत्त्वानि च कृष्णे वैष्णवसूक्तं मूलं लक्ष्म्यामपरं श्रीसूक्तं मूलं च काल्यां यया विश्वमिति मन्त्रान्तत ओं इति, अग्रभुवि ज्येष्ठायाम् ओं स्थापयामिति मन्त्रान्ततो मूलं च मातृषु लग्ने स्वबीजमन्त्रैस्तु स्थापयेत्। 'प्रतिमाः क्रमादि'ति सिद्धान्तसारोक्तत्वात् स्वस्वबीजमन्त्रा एव प्रतिष्ठामनुरिति द्रष्टव्यम्।

**"यया विश्वमिदं व्याप्तं शिववच्छिवमायया।**
**सा त्वं नारायणी देवी स्थातव्यमिह सर्वदा।।"**

**“ओं स्थापयामि कलिपत्नीं सर्वसिद्धिप्रदायिनीम्।**
**पद्मजापूर्वजां देवीमाद्याममृतसम्भवाम्।।”**

**तारोपचारमूलानि त्रिः प्रतिष्ठामनुः सकृत्।**
**मूलरुद्धेषुतत्त्वानि मूलमोमिति तत्क्रमः ।। १७०।।**

काल्यां ज्येष्ठायां च मन्त्रे पठति – ययेत्यादि। प्रतिष्ठामन्त्रे विशेषयोजनक्रममाह – तारोपचारेति तारोपचारे मूलानि त्रिः त्रिकृत्वः उक्तः प्रतिष्ठामनुः सकृद्। पुनर्मूलपुटितानि पञ्चतत्त्वानि मूलमोमिति च पठेत्। इति तत्क्रमः स्यात्।

**कुर्वीत ध्रुवजापविश्वत उपस्थानाष्टबन्धस्वम-**
**न्त्रावाहान् कलशेशसुप्तिकलशासेकौ सजीवक्रियाम्।**
**स्थूलस्तुत्यभिवाहपूर्ववदुपस्थानस्वमन्त्राभिवा-**
**हेज्यापायसतोषणानि पुनरङ्गन्यासनीराजनम् ।। १७१।।**

अथ तच्छेषं कर्म सूत्रयति – कुर्वीतेति। ध्रुवजापविश्वत उपस्थानाष्टबन्ध-स्वमन्त्रवाहान् ध्रुवसूक्तजापं विश्वतश्चक्षुरित्युपस्थानमष्टबन्धनिक्षेपं स्वमन्त्रावाहनं च क्रमात् कुर्वीत। कलशेशसुप्तिकलशासेकौ कुम्भेशाभिषेकं निद्राकलशाभिषेकं च। पुनः सजीवक्रियां जीवावाहनादिकं स्थूलस्तुत्यभिवाहपूर्वदुपस्थानस्वमन्त्रा-भिवाहेज्यापायसतोषणानि स्थूलावाहनं स्तोत्रावाहनं पूर्ववद्विश्वतश्चक्षुरित्या-द्युपस्थानं स्वमन्त्रावाहनं पूजां पायसनिवेदनं प्रसन्नपूजां पुनरङ्गन्यासं नीराजनं च कुर्वीत।

**स्वाङ्गं स्वमूलं सखषोत्कहंसं**
**हृद्येव देहे दशतारकांश्च।**
**न्यस्येदुपस्थानविधेः पुरस्तात्**
**सूर्ये प्रतिष्ठासि वदेद् रमायाम् ।। १७२।।**

सूर्ये विशेषमाह – स्वाङ्गमिति। सूर्ये उपस्थानविधेः। पुरस्तात् स्वाङ्गं स्वमूलं सखषोक्तहंसं खषोत्कमन्त्रमजपां च हृदि न्यस्येत्। देहे दशतारकां दशप्रणवगायत्रीं च न्यसेत्। रमायामुपस्थानकाले प्रतिष्ठासि प्रतिष्ठेत्यादिमन्त्रं च वदेत्।

**पीठार्चे निजशक्तिमूलमहिते कृत्वाऽम्वराद्युज्ज्वले**
**विद्वांस्तद्विवरे सहेमासिकतापूर्णेऽथ शुद्धार्चितम्।**
**संपातार्जितमष्टबन्धमपि कृत्वा क्लृप्तनीराजनो**
**बध्वा मन्त्र्यमुनाचरेद् ध्रुवजपोमामेलनाङ्गादि च ।। १७३।।**

सूत्रितानि कर्माणि विवृण्वन्नष्टबन्धविधानमाह – पीठार्थे इति। प्रकृतिपुरुषयोर्विभागं विद्वान् निजशक्तिमूलमहिते निजया शक्त्या निजेन मूलेन च पूजिते पीठार्चे अंबराद्युज्ज्वले वस्त्रमाल्यादिभिरलङ्कृते कृत्वा तद्विवरे नालविवरे सहेमसिकताभिः पूर्णे सति, अथाष्टबन्धं शुद्धार्चितं शोषणादिभिः शोधितं नवशक्तिभिरर्चितं च संपातार्जितं संपातेन संस्पृष्टं च कृत्वा क्लृप्तनीराजनो भूत्वा मन्त्री अष्टबन्धस्थापनमन्त्रज्ञोऽमुनाष्टबन्धेन बध्वा घ्रुवजपोमामेलनाङ्गादि ध्रुवसूक्तजपं प्रणवेनामेलनमङ्गादीनि च चरेत्।

**नीराज्य तारादियुतौस्त्रितत्त्वै-**
**रथाभिषिञ्चेत् कलशेश्वरेण।**
**व्यापय्य तारेण सुधीस्त्रितत्वा-**
**दिन्यासकृत् तं कुसुमैर्धिनोतु ।। १७४।।**

**नीराज्य तारादियुतैरशेष-**
**तत्त्वैस्तु निद्राकलशेन बिम्बम्।**
**मूलावसानैरभिषिच्य चोमा**
**व्यापय्य तत्वाद्यपि विन्यसेच्च ।। १७५।।**

अथ प्रणवोपचारादियुतस्त्रितत्त्वैः कुम्भेशाभिषेकं कुर्यादित्याह – नीराज्येति। तारोपचारादियुतैर्मूलावसानैरशेषैस्तत्त्वैर्निद्राकलशेनाभिषिच्य प्रणवेन व्यापय्य पञ्चतत्त्वन्यासादि कुर्यादित्याह – पुनर्नीराज्येति।

**स्वर्णं न्यस्य तु बिम्बकेऽर्णकमलं हृद्यात्महृत्स्थेऽणुभि-**
**र्जीवं त्र्यन्यतमैर्विभाव्य शरतत्त्वैः शङ्खके श्वासतः।**
**आधायास्य हृदङ्करन्ध्रसिरया प्रापय्य नीत्वा परं**
**प्रत्यावर्त्य तदङ्गजातमनुभिः स्वैर्न्यस्य मन्त्र्यर्हतु ।। १७६।।**

**ताररुद्धेन मूलेन स्थूलावाहनमाचरेत्।**
**तेन व्याप्य षडध्वादिन्यासपुष्पाञ्जलिं चरेत् ।। १७७।।**

**कृष्णे स्याद् वैष्णवं स्तोत्रं काल्यामुक्तं ययेत्यदः।**
**ज्येष्ठायामृग्यजुरिति तथान्येष्वपि मृग्यताम् ।। १७८।।**

**"ऋग्यजुस्सामरूपाय स्थित्युत्पत्तिविनाशिने।**
**देव्योऽयं स्थापयामीह कलिपत्नि! कलिप्रिये!।।"**

**"यस्याः सिंहा रथे युक्ता व्याघ्री चाप्यनुगामिनी।**
**तामिमां पुण्डरीकाक्षीं ज्येष्ठीं देवीमावाहयामि"।।**

**पूर्ववद् विश्वतश्चक्षुरित्युपस्थाय मन्त्रवित्।**
**लोकानुग्रहहेत्वर्थमिति चाप्युपतिष्ठताम् ।। १७९।।**

गुरूपदेशग्राह्यत्वाज्जीवावाहनविधिं तिरोहितपदैराह – स्वर्णमिति। स्थूलावाहनादिकमाह – ताररुद्धेनेति। स्तोत्रावाहनमन्त्रमाह – कृष्ण इति। ज्येष्ठायाः स्तोत्रमन्त्रं पठति – ओमृग्यजुरित्यादि। उपस्थानमन्त्रमाह – पूर्ववदिति।

**पीठेज्यावाहनसकलनार्घ्यादि साङ्गावृतीज्या-**
**नैवेद्यान्नार्पणहुतपरीवारक्लृप्त्यर्थनानि।**

**इज्याशेषस्वमनुकरविन्याससम्मेलनानि**
**व्याप्तिं रक्षां चरतु च ततो द्वारमावृत्य रक्षेत् ।। १८०।।**

अथ पूर्वोक्तशेषं कर्म सूत्रयति – पीठेज्येति। पीठपूजामावाहनं सकलीकरणमर्घ्यादिदानमङ्गपरिवारैः सह पूजनं निवेदनं पूजाहोमं परिवारकल्पनं प्रार्थनं पूजाशेषं स्वमन्त्रकरविन्यासं चिच्चैत्यसंमेलनं तेजोव्याप्तिचिन्तनं रक्षां च क्रमाच्चरतु। ततो द्वारमावृत्य रक्षेच्च।

**कल्पनं परिवाराणामुत्सवेन क्रमेण तु।**
**तदा सकृद् बलिं दद्याद्यावदित्यर्थनं ततः ।। १८१।।**

सूत्रितानि कर्माणि विवृण्वन् परिवारकल्पनमाह – कल्पनं परिवाराणामिति। औत्सवेन उत्सवेन वक्ष्यमाणेन क्रमेण परिवाराणां कल्पनं स्यात्। तदा सकृद् बलिं तेषां दद्यात्। ततो यावदत्रेत्यादिनाऽर्थना च स्यात्। तन्मन्त्रं पठति – यावदत्रेति।

**"यावदत्र जगन्नाथो बिम्बमाश्रित्य तिष्ठति।**
**तावदत्रैव रक्षार्थं यूयं तिष्ठत सर्वदा।।"**
**स्वहस्ते मण्डलं ध्यात्वा तत्र मन्त्रमयं विभुम्।**
**विभाव्य बिम्बमूर्ध्न्येतत् न्यस्येत्स्वोक्तमनून् जपेत् ।। १८२।।**

पुनः स्वस्वहस्ते स्वस्वमण्डलं ध्यात्वा तत्र मन्त्रमयं देवं विभाव्य एतद्धस्तं बिम्बमूर्ध्नि न्यस्येत्। स्वोक्तमन्त्रं जपेच्च।

**द्विद्येकोद्भिदुरेषुतत्त्वमनुसंव्याप्त्यात्र चिन्मन्त्रबि-**
**म्बार्च्चाविष्टरपीठिकायतनसंयोगं विभाव्य क्रमात्।**
**ब्रह्माध्वेद्धचिताऽऽदिनोदवपरिव्याप्त्याऽभिपूर्याखिलं**
**काण्डं तत् परिकल्पयेदथ महासालात्मनाऽवस्थितम् ।। १८३।।**



चिच्चैत्यसंमेलनप्रदर्शनाय तन्त्रसमुच्चयोक्तश्लोकमेवाह – द्विद्येकेति।

**ततः कृत्वा लयाङ्गादि रक्षां कृत्वा निधाय तु।**
**दीपमब्गान्धपुष्पादि द्वारं बध्नन् वहिर्व्रजेत् ।। १८४।।**

ततो लयाङ्गादि कृत्वा रक्षां च कृत्वा दीपमब्गन्धपुष्पादि च निधाय द्वारं बध्नन् वहिः व्रजेत्।

**नोद्घाटयेद् द्वारमहस्त्रयेऽत्र**
**कृत्वाऽग्रतः स्थण्डिलमादधीत।**
**नित्यार्चनं स्वार्हहुतादियुक्तं**
**संस्नाप्य तुर्येह्नि यजेच्च बिम्बे ।। १८५।।**

पुनस्तच्छेषत्वेन तन्त्रसमुच्चयश्लोकमाह – नोद्घाटयोदिति।

**तत्रैव त्रिदिनेऽग्रिमादिबलिपीठानां दिशाहोमव-**
**न्मातॄणां सहुतं तु वा निजपदे शेषाशिनः स्वास्पदे।**
**कार्यं स्थापनमग्रिमोरुबलिपीठस्याधिवासादिकं**
**सर्वं 'तन्त्रसमुच्चये' निगदितं तत् कर्म केतोरपि ।। १८६।।**

पुनश्चतुर्थदिवसादर्वाक्तनं कर्माह – तत्रैवेति। तत्रैव त्रिदिने अग्रिमादिः बलिपीठानामिन्द्रादिदिक्पालबलिपीठानां दिशाहोमवद् दिशाहोमसहितं यथा भवति तथा निजनिजपदे स्थापनं कार्यम्। मातॄणां च तथा कार्यम्। शेषाशिनो निर्माल्यभोक्तुः सहुतं वाऽन्यथा वा सास्पदं पीठेन सह स्थापनं कार्यम्। पुनरग्रिमोरुबलिपीठस्याग्रतो महाबलिपीठस्य केतोरप्यधिवासादिकम् अधिवासादिसहितं स्थापनं कार्यम्। तत् सर्वं कर्म तन्त्रसमुच्चये निगदितमेव स्यात्।

इति शेषसमुच्चये द्वितीयः पटलः।।

# अथ तृतीयः पटलः।

**अथ प्रतिष्ठापितदेवताना-**
**मासां सपर्याऽप्यभिधीयतेऽद्य।**
**तत्रादितो मूलमनून् सहाङ्गैः**
**षडध्वनो न्यासमपि ब्रवीमि ॥ १॥**

अथ पूजाप्रतिपादनाय तृतीयपटलमारभते – अथेति। प्रतिष्ठापितदेवता-नामासां अद्य इदानीं सपर्याऽप्यभिधीयते। तत्र पूजाभिधाने आदितो मूलमनून् अङ्गैः सह षडध्वनो न्यासमपि ब्रवीमि।

**तारो नतिर्ब्रह्मणि नाम च स्वं**
**चतुर्थ्युपेतं मनुरेष मूलम्।**
**तत्सन्नतेः प्राग् यदि नागवर्ण-**
**स्तत्सन्नमोऽन्तस्त्वयमर्कवर्णः ॥ २॥**

तत्र ब्रह्मणि प्रथमं तारः ततो नतिः पुनश्चतुर्थ्येकवचनोपेतं ब्रह्मणे इति स्वं नाम, एष मनुः मूलं भवति। नतेः प्राक् तत्सदिति यदि भवति तदा नागवर्णोऽष्टाक्षरः। अयमष्टाक्षरस्तु तत्सन्नमोऽन्तः अर्कवर्णो द्वादशाक्षरः।

**वर्णैः षडङ्गानि दृगन्तिमानि**
**षडक्षरस्योदरपृष्ठवन्ति।**
**अष्टाक्षरस्य द्विषडक्षरस्य**
**पदैः षडाख्यानि समुज्वलानि ॥ ३॥**

षडक्षरस्य वर्णैर्दृगन्तिमानि षडङ्गानि अष्टाक्षरस्योदरपृष्ठयुक्तानि द्विषडक्षरस्य पदैर्नेत्रान्तिमानि षडङ्गानि सर्वाणि तान्याख्याजातिसंयुक्तानि च भवन्ति।

**प्रजापतिर्ऋषिः पङ्क्तिश्छन्दो ब्रह्मा च देवता।**
**षडर्णस्याथ गायत्रीश्च्छन्द उत्तरयोर्मतम् ।। ४।।**

षडक्षरस्य प्रजापत्यादयः ऋष्याद्याः; इतरयोस्तु गायत्र्येव छन्दो मतं स्यात्। ह्रां ह्रीं सः स्यात्।

**तारो वियत् सानलदीर्घबिन्दु-**
**शक्तीरवौ सस्वपदं च ङेऽन्तम्।**
**नतिश्च मूलं नववर्ण एषः**
**भङ्क्त्वाऽऽहुरब्ध्यर्णमथाङ्गवर्णम् ।। ५।।**

रवौ तारः सानलदीर्घबिन्दुः रेफाकारबिन्दुयुतं वियत् ह्रामित्यर्थः। शक्तिर्भुवनेशी स इति स्वरूपं ङेन्तं स्वपदं रवये इति नतिर्नम इति नवार्णो मूलमन्त्रः। भङ्क्त्वा विभज्य ओं ह्रां ह्रीं सः इति अब्धिवर्णः चतुरक्षरमूलं, ओं रवये नम इत्यङ्गवर्णः मूलं च आहुरित्यनेन षडक्षरपूरणाच्च प्रणवादित्वं सूचितम्।

**शक्तेः षडङ्गानि युगाक्षरस्य**
**ङेऽन्तस्वनाम्ना सहितानि तानि।**
**नवाक्षरस्याथ षडक्षरस्य**
**स्वैरक्षरैर्बिन्दुयुतैः क्रमेण ।। ६।।**

युगाक्षरस्य चतुरक्षरस्य शक्तेः षडङ्गान्येवाङ्गानि। नवाक्षरस्य ङेन्तस्वनाम्ना सहितानि ओं ह्रां रवये हृदयाय नमः इत्यादीनि। तान्यङ्गानि षडक्षरस्य बिन्दुयुतैः स्वैरक्षरैः क्रमात् षडङ्गानि।

**ऋषिर्ब्रह्मा भृगुर्वा स्याद् गायत्रीच्छन्द ईरितः।**
**षडक्षरस्य पङ्क्तिर्वा स्वयं सूर्यश्च देवता ।। ७।।**

ऋष्यादीन्याह – ऋषिरिति। षडक्षरस्य पङ्क्तिर्वा छन्दः।

**तारो निजादिर्धनदे सरेफ-**
**स्त्रिरुद्रविश्वस्वरबिन्दुयुक्तः।**
**बीजत्रयं स्यान्निजनाम ङेऽन्तं**
**नतिश्च मूलं दशवर्ण एषः ।। ८।।**

धनदे तारः पुनर्निजादिर्धकारः सरेफो रेफयुक्तः त्रिरुद्रविश्वस्वरबिन्दुयुक्तः तृतीयेनैकादशेन त्रयोदशेन स्वरेण प्रत्येकं बिन्दुना च युक्तः ध्रिं ध्रें ध्रों इति बीजत्रयं पुनर्ङेन्तं निजनाम धनदायेति नतिश्च। एष दशवर्णो मूलम्।

**पदैरस्य षडङ्गानि स्यादृषिर्नलकूवरः।**
**छन्दो गायत्र्यथैतस्य धनदो देवता स्मृतः ।। ९।।**

ऋष्यादिकमाह – पदैरिति।

**कृष्णे ध्रुवः स्वनामाथ चतुर्थ्यन्तं नतिः क्रमात्।**
**षडर्णोऽर्णैः षडङ्गानि सप्तार्णः कामबीजयुक् ।। १०।।**

कृष्णे ध्रुवः। अथ चतुर्थ्यन्तं स्वनाम कृष्णायेति। पुनर्नतिः इति षडर्णः। अत्र अर्णैः षडङ्गानि ध्रुवानन्तरं क्लीमिति कामबीजयुगयमेव सप्तार्णः।

**नामेह गोविन्दपदं गोपीजनपदं तु वा।**
**वल्लभान्तं नारदोऽस्य गायत्र्यृष्यादयः स्वयम् ।। ११।।**

इह नाम कृष्णस्थाने गोविन्दपदं वा। तत्र ओं क्लीं गोविन्दाय नम इत्यष्टार्णः। कृष्णस्थाने वल्लभान्तं गोपीजनपदं वा। ओं क्लीं गोपीजनवल्लभाय नम इति द्वादशार्ण इत्यर्थः। नारदाद्या ऋष्यादयः।

**स्वाख्या ङेन्ता सरस्वत्यां नतिर्मूलं षडक्षरैः।**
**अङ्गानि कण्वो गायत्री स्वयमृष्यादयः क्रमात् ।। १२।।**

सरस्वत्यां ङेऽन्ता स्वाख्या नतिश्चमूलम्। ओं सरस्वत्यै नम इति। सकाराद्यैः षडक्षरैरङ्गानि कण्वादय ऋष्याद्याः।

**स्वाख्या बिन्दुमती बीजं बीजैस्त्वङ्गानि षड्च्छ्रियः।**
**भृगुर्निचृच्छ्रीर्ऋष्याद्याः सन्ति मूलान्तराण्यपि ।। १३।।**

श्रियो बिन्दुमती स्वाख्या श्रीं नतिर्बीजं मूलं तस्य श्रामित्यादिदीर्धैः षडङ्गानि तस्य भृग्वादय ऋष्याद्याः। तस्याः श्रियो मूलान्तराण्यपि सन्ति कमलवासिन्याद्याः।

**शक्तिर्मूलं षडङ्गानि दीर्घैः शक्तिर्ऋषिर्भवेत्।**
**देवता भुवनाधीशा गौर्यां गायत्र्यपीतरत् ।। १४।।**

**उमोमे प्रणवो द्वेधा ङेऽन्ता स्वाख्या नमोऽन्विता।**
**पञ्चार्णोऽथ शिवाशब्दो नत्यादिर्ङेऽन्वितस्तथा ।। १५।।**

गौर्यां शक्तिबीजं मूलं शक्त्याद्या ऋष्यादयः। तत्र उमोमे उमा ओं इति द्वेघा प्रणवः स्यात्। ङेन्ता नमोन्विता स्वाख्या 'उमायै नम' इति, ओं हाम् उमादेव्यै नम इत्यष्टाक्षरोऽपि मूलम्। तथा 'गौरीप्रश्ने' –

"तारादिव्योम सानन्तं सबिन्दू पञ्चमं पुनः।
उद्धरेदायुतं क्ष्वेळमत्रिमेकारसंयुतम्।।
इनेरसंयुतं तोयं नमोऽन्तं मूलमीरितम्।"

इति। नत्यादिङेन्वितशिवाशब्दश्च तथा पञ्चार्णः। 'नमः शिवायै' इत्यपि मूलमित्यर्थः। इत्येते पृथङ्मूलमन्त्राः।

**ज्येष्ठायामनलोनतालवलसत् खं बीजमूर्ध्वं ध्रुवा-**
**दूर्ध्वं च प्रणतेश्चतुर्थ्युपगतं सर्वादिरिङ्गापदम्।**

**मूलं स्याद् वसुवर्णमर्णविहिताष्टाङ्गं कलिः स्यादृषि-**
**र्गायत्री स्वयमप्युतेतरदिह स्वं नाम्नि मूलान्तरम् ।। १६ ।।**

ज्येष्ठायां ध्रुवादूर्ध्वम्, अनलोनतालवलसत्खम् अनलो रेफः ऊनता ऊकारः लवो बिन्दु खं हकारः। ह्रूमिति बीजमित्यर्थः। पुनः प्रणतेर्नमस्कारादूर्ध्वं चतुर्थ्युपगतं चतुर्थ्येकवचनसहितं सर्वादि सर्वशब्दादिभूतं रिङ्गापदम् 'ओं ह्रूं नमः सर्वरिङ्गायै' इति वसुवर्णमूलं स्यात्। अर्णविहिताष्टाङ्गं च स्यात्। कलिः ऋषिः स्यात्। गायत्री छन्दः स्वयं ज्येष्टा चेतरत् देवता च। इह नाम्नि स्वं ज्येष्ठापदं यदि तदा मूलान्तरम्।

**बालादिशक्तिं निजनाम ङेऽन्तं**
**नतिर्दशार्णास्त्विह भद्रकाल्याम्।**
**शक्त्युत्थदीर्घैर्निजभादिवर्णैः**
**सहाङ्गषट्कं विदधीत चास्य ।। १७ ।।**

भद्रकाल्यां बालादिशक्तिः 'ऐं क्लीं सौः ह्रीम्' इति। ङेन्तं निजनाम भद्रकाल्ये इति, नतिश्च। एष दशार्णो मूलमन्त्रः। इह मन्त्रे शक्त्युत्थदीर्घैः ह्रां ह्रीमित्यादिभिर्निजभादिवर्णैर्निजैर्भद्रकाल्यै नम इति षड्भिरक्षरैश्च सहाङ्गषट्कं विदधीत।

**शक्तेरिहोर्ध्वं भमिति स्वबीजं**
**न चास्ति बाला ध्रुववान्नवार्णः।**
**ऋष्यादयश्चेश्वरपङ्क्तिशक्ति-**
**भैरव्य उक्ता मतिमद्भिरस्य ।। १८ ।।**

इह मन्त्रे शक्तेरूर्ध्वं भमिति स्वबीजमस्तिचेत् न च बाला स्यात्। ध्रुववांश्च अयं नवार्णो मन्त्रः। अत्र मन्त्रद्वयस्येश्वरः पङ्क्तिः शक्तिभैरवी च ऋष्याद्या उक्ताः।

**तारं स्वबीजं नतिपश्चिमं तु**
**स्वनाम ङेऽन्तं क्रमतः स्वमूलम्।**
**स्याद् वीरभद्रादिषु दीर्घभाजा**
**बीजेन चाङ्गानि पुनः षडेषाम् ।। १९।।**

वीरभद्रादिषु मातृषु तारं स्वबीजं ङेन्तं नतिपश्चिमम् स्वनाम'क्रमत' 'ओं वीरभद्राय नम' इत्यादि स्वस्वमूलं स्यात्। एषां पुनर्दीर्घभाजास्वस्वबीजेन चाङ्गानि।

**वीरे गणेशे च निजादिवर्णो**
**बीजं ध्रुवादिस्त्वथ विर्विषं द्विः।**
**नभश्चतुर्मातृषु विश्वभूमि-**
**द्व्यर्केशविश्वाङ्गकलान्वितानि ।। २०।।**

वीरे गणेशे च निजादिवर्णः। वीं गं इति बीजम्। अथ तु विः विकारः विषम् मकारः द्विः द्वयोश्चतुर्मातृषु नभः हकारः एतानि वर्णानि क्रमाद् विश्वभूमिद्व्यर्केशविश्वाङ्गकलान्वितानि। विश्वं त्रयोदशी भूमिः प्रथमा द्विः द्वितीया अर्को द्वादशी ईश एकादशी विश्वं त्रयोदशी अङ्गं षष्ठि एताभिः कलाभिरन्वितानि व्यों मं मां हैं हें हों हूम् इति ब्रह्माण्यादीनां बीजानि। ध्रुवादीत्युक्त अनुवाद एव।

**ऋष्याद्यास्त्वीश्वरो गायत्र्येषां ज्ञेया स्वयं स्वयम्।**
**स्वं स्वं नाम चतुर्थ्यन्तमेषामङ्गेषु योजयेत् ।। २१।।**

एषां ईश्वरो गायत्री। स्वयं स्वयं च ऋष्याद्याः अङ्गेषु बीजान्तं चतुर्थ्यन्तं स्वं स्वं नाम च *योज्यन्ते आचार्यैः। ओं वां वीरभद्राय हृदयाय नमः इत्याद्या इत्यर्थः।



* 'योजयेत्' इति मूले दृश्यते।

**संवर्तश्चन्द्रदस्रेशमनुस्वरविकल्पितः।**
**ध्रुवादिः क्षेत्रपाले स्यान्मूलं ङेन्ताभिधा नतिः ।। २२।।**

क्षेत्रपाले ध्रुवादिः। संवर्तः क्षकारः चन्द्रदस्रेशमनुस्वरविकल्पितः चन्द्र आद्यः, दस्रो द्वितीयः, ईश एकादशः, मनुश्चतुर्दशः एतैः स्वरैः कृतः विकल्पः एषामन्यतम इत्यर्थः। ङेन्ताभिधा नतिश्च क्षं क्षेत्रपालाय नमः। अत्र क्षामिति वा क्षेमिति वा क्षोमिति वा बीजम्। अस्य बीजोत्थदीर्घैरङ्गानि। वटुकाद्या ऋष्यादयः।

**शिरोनेत्रास्यहृन्नाभिगुह्यजानुपदानि तु।**
**स्थानान्यष्टार्णमन्त्राणां वर्णन्यासे जनिक्रमात् ।। २३।।**

**बीजोत्थदीर्घैरङ्गानि षडस्य बटुकस्त्वृषिः।**
**गायत्रीच्छन्द उद्दिष्टं क्षेत्रपालश्च देवता ।। २४।।**

**सप्तार्णे हीयते नाभिर्नेत्रनाभि षडक्षरे।**
**मन्त्रे पञ्चाक्षरे नेत्रनाभिजानून्यपि क्रमात् ।। २५।।**

मन्त्राक्षरन्यासस्थानान्याह – शिर इति। अष्टार्णमन्त्राणां वर्णन्यासे जनिक्रमात् सृष्टिक्रमात् शिरआदिपदान्तान्यष्टस्थानानि। सप्तर्णे मन्त्रे नाभिः हीयते त्यज्यते। षडर्णे नेत्रनाभी हीयेते। पञ्चाक्षरे मन्त्रे नेत्रनाभिजानूनि हीयन्ते।

**नाभिहृन्मूर्धसु ततो मूर्ध्नि श्रोत्रे च लोचने।**
**मुखे घ्राणे करे पादे न्यासो दारुकविद्विषि ।। २६।।**

**ब्रह्मादीनां स्वगायत्र्य उपचाराणवः स्मृताः।**
**तेषां प्रसिद्धं सामान्यं विशेषस्तु पदत्रयम् ।। २७।।**

दारुकविद्विषि भद्रकाल्यां नाभिहृन्मूर्धसु बालाबीजानि। मूर्धादिषु सप्तसु

सप्तावशिष्टानि ब्रह्मादीनां सर्वेषां स्वस्वगायत्त्र्य उपचाराणवः। तेषां सामान्यं गायत्रीस्वरूपं प्रसिद्धम्। पदत्रयमेव विशेषः।

**हिरण्यगर्भोऽथ शतानन्दो ब्रह्मण्यथ स्वयम्।**
**धनाधिपो वैश्रवणो धनदेऽपि तथा स्वयम् ।। २८।।**

**वागीश्वरी सरस्वत्यां ततो वाग्वादिनी स्वयम्।**
**सुभगाकामदायिन्यौ हैमवत्यां तु गौर्यपि ।। २९।।**

**काल्यां रुद्रसुता शूलहस्ता कालीति च क्रमात्।**
**वीरभद्रादिगायत्र्य उत्सवे प्रथिताः स्मृताः ।। ३०।।**

**भूर्लक्ष्मी भुव उग्री चाग्र्यायां स्वः कालकर्णिनी।**
**गायत्रीयं स्वबीजादिः तन्नो ज्येष्ठी प्रचोदयात् ।। ३१।।**

पदत्रयाण्याह – हिरण्यगर्भ इत्यादि। ब्रह्मण्यथ स्वयमित्यादिषु तन्नो ब्रह्मा प्रचोदयाद् इत्यादि योजयेदित्यर्थः। वीरभद्रादिगायत्र्य उत्सवे प्रसिद्धाः। अग्र्यायां ज्येष्ठायाम् ओं ह्रूं भूर्लक्ष्म्यै भुव उग्र्यै विद्महे स्वः कालकर्णिन्यै धीमहे तन्नो ज्येष्ठी प्रचोदयात्। इयं गायत्रीत्यर्थः। इह सूर्यकृष्णश्रीक्षेत्रपालानां गायत्र्योऽन्वेष्याः।

**ब्रह्मादीनां मन्त्रभेदानपि वच्मीह कांश्चन।**
**ब्रह्मा प्रजापतिः कस्य परमेष्ठी हिरण्यतः ।। ३२।।**

अथ ब्रह्मादीनां कांश्चन मन्त्रभेदान् वच्मि तानाह – ब्रह्मेति। कस्य ब्रह्मणः ब्रह्माद्याः षडाह्वयानि। हिरण्यतो गर्भः हिरण्यगर्भः।

**गर्भश्चतुर्मुखश्च स्युः स्वयम्भूराह्वयानि षट्।**
**न्यासे होमे च योज्यानि तारनत्यादियोगतः ।। ३३।।**



**नमः सकलरूपाय निष्कलायोभयात्मने।**

**ब्रह्मणे वेदगर्भाय शान्ताय परमात्मने ।। ३४।।**

तारनत्यादियोगः सामान्येन सर्वत्र ग्राह्यः। मन्त्रान्तरं लिखति – नमः सकलेति।

**आदित्यः सूर्यभानू च सहस्रकिरणो रवौ।**
**मार्ताण्डो द्वादश ज्योतीरूपोऽपि च दिवाकरः ।। ३५।।**

**नामान्यंशुपतिर्विष्णुस्तारादीनि रविः शिवः।**
**ज्योतिर्मयो नमोऽन्तानि न्यासहोमादिषु क्रमात् ।। ३६।।**

रवेर्न्यासहोमाद्यर्थं द्वादशनामानि पठति – आदित्य इति।

**तारः षष्ठे चतुर्थं तु षष्ठस्वरविषान्वितम्।**
**कुबेराय नतिर्मूलमपरं नरधर्मणः ।। ३७।।**

नरधर्मणो वैश्रवणस्य मूलान्तरमुद्धरति – तार इति। षष्ठे वर्गे चतुर्थो भकारः। षष्ठस्वर ऊकारः। विषं मकारः। कुबेरायेति नतिश्च। 'वैश्रवणकल्पे' – भूयो बीजतारसमन्वितमित्युक्तत्वान्नत्यन्तेऽपि बीजतारं योज्यम्। ओं भूं कुवेराय नमः भूम् ओम् इति मन्त्र इत्यर्थः। मन्त्रान्तरं लिखति – ओं श्रीमित्यादि।

**ओं श्रीं धनद वैश्रवण शङ्खपद्मनिधिनाथ अवतर मे स्वर्णं बहु प्रयच्छ स्वाहा।**

**कृष्णश्च वासुदेवश्च ततो नारायणः परः।**
**देवकीनन्दनश्चापि यदुश्रेष्ठस्तु पञ्चमः ।। ३८।।**

**वार्ष्णेयश्चासुराक्रान्तभागहारी यथाक्रमम्।**
**धर्मसंस्थापको न्यस्येत् कृष्णाष्टकमिदं स्मृतम् ।। ३९।।**



कृष्णाष्टकं पठति – कृष्णश्चेति।

**तारनत्यन्वितं न्यासस्त्वष्टस्थानेषु कीर्तितः।**
**श्रीश्च वागीश्वरी कान्तिः क्रियाशक्तिर्विभूतयः ।। ४० ।।**

**इच्छा प्रीती रतिर्माया श्रियो धीर्महिमा द्विषट्।**
**एता द्विठान्ता होमे स्युस्ताराद्या नतिसंयुताः ।। ४१ ।।**

**न्यस्येदलिककुक्ष्योर्हृत्कण्ठयोर्दक्षिणे पुनः।**
**पार्श्वांसकन्धरेष्वेवं वामे पृष्ठेऽपि च क्रमात् ।। ४२ ।।**

तारनत्यन्वितमिति चतुर्थ्या अप्युपलक्षणम्। अष्टस्थानेषु पूर्वोक्तेषु न्यासः कार्यः। श्रियो द्वादशनामान्याह श्चीश्चेति। द्विषट् द्वादादशनामन्यासस्थानमाह - न्यस्येदिति। वैष्णवोक्तकेशवादिन्यासस्थानोष्वित्यर्थः। पृष्ठेऽपि चेति। पृष्ठे ककुदि चेत्यर्थः।

**उमादेवी च गौरी च सती तुर्या शिवा भवेत्।**
**रुद्राणी पार्वती चाथ भवानी विश्वसम्भवा ।। ४३ ।।**

**शिवशक्तिः स्कन्दमाता गौर्यां नामानि वै दश।**
**एभिर्होमोऽधिवासेऽस्याः स्तुतिपूजाद्यपि स्मृतम् ।। ४४ ।।**

गौर्यां द्वादश नामान्याह उमादेवीति। तदेकमेव नाम, तुर्या चतुर्थी शिवा भवेत्। एभिरधिवासहोमादिः स्यात्।

**ज्येष्ठी कलिपत्नी कलिहृदया मूलादिकेश्यथ च कुम्भी।**
**कृष्णा ज्येष्ठाख्याः कृष्णपिङ्गलाथ क्रिया ह्रीया च नव ।।**
**४५ ।।**

ज्येष्ठायां नव नामान्याह – ज्येष्ठीति। ज्येष्ठाख्याः ज्येष्ठाया आख्याः नामानीत्यर्थः।



**तारः शक्तिरथ प्लीं फें नामविद्येथ जुंनतिः।**

**मातॄणां मनवः सप्त द्विठान्ता बलिहोमयोः ।। ४६ ।।**

बलिहोमार्थं मातॄणां सप्तमन्त्रानाह – तार इति। तारः शक्तिः प्लीं फेमिति बीजानामन्ते स्वस्वनाम पुनर्विद्ये जुमिति नतिश्च सप्त मनवः। 'ओं ह्रीं प्लीं फें ब्रह्माणी विद्येजुं नम' इत्याद्या इत्यर्थः।

**स्वनाम्नैव बलिर्देयो वीरभद्रगणेशयोः।**
**मालामन्त्रं तु वक्ष्यामि बलिपूजादिषूचितम् ।। ४७ ।।**

वीरभद्रगणेशयोः स्वस्वनाम्नैव बलिर्देयः। मालामन्त्रं लिखति – 'ओम् आकाशमातृभ्य' इत्यादि।

**ओमाकाशमातृभ्यः सर्वकामार्थसाधनीभ्योऽजरामरीभ्यः सर्वोपरिवर्तिनीभ्यः सर्वसत्त्ववशङ्करीभ्यः सर्वकर्मप्रवर्तनीभ्यः सर्वमातृभ्यः सर्वमातृगणेभ्यः स्वाहा।**

**मोदप्रमोदहंसाः सामगसत्यौ च पञ्च विश्वसृजि।**
**परमसुखसप्रभूतविमलसारा दिनकरे समाराध्यः ।। ४८ ।।**

**वैश्रवणकुबेरधनदमहाबला राजपदयुगाधिराजः।**
**यक्षपतावथ कृष्णे विष्णूक्ता वासुदेवाद्याः ।। ४९ ।।**

**सरस्वत्यथ वागीश्वर्यथ वाग्वादिनी क्रमात्।**
**वाग्देवी च सरस्वत्यां पञ्चमी सर्वमातृका ।। ५० ।।**

**श्रीरथजया सविजया स्यादजिता चापराजिता लक्ष्म्याम्।**
**ज्येष्ठायां परमेशा ततः क्रमात् सर्वलोकहृदयाद्याः ।। ५१ ।।**

**हृल्लेखा गगना रक्ता गिरिजायां करालिका।**
**महोच्छुष्मा च ता एव भद्रकाल्यां च कीर्तिताः ।। ५२ ।।**



ब्रह्मादिकाल्यन्तदेवतासु पञ्चमन्त्रान् क्रमात् पठति मोदप्रमोदेति।

राजपदयुगधिराज इति। राजाधिराजः। ज्येष्ठायां परमेशायां अन्ते सर्वलोकहृदयाद्याः तासु रत्नन्यासे लिखिताः।

**ब्रह्मतपनादिषु कलातत्त्वभुवनवर्णपदमन्त्राः।**
**गुर्वीरितया रीत्या प्रायो ज्ञेयाः षडध्वानः ॥ ५३॥**

षडध्वन आह ब्रह्मतपनादिष्विति। गुर्वीरितया तन्त्रसमुच्चयोक्तया रीत्या कलातत्त्वभुवनवर्णपदमन्त्राः प्रायः षडध्वानो ज्ञेयाः।

**हौमादिबीजयोगिन्यः शान्त्यतीतादिकाः कलाः।**
**पञ्च कादिषु विन्यस्येत् कलाध्वा सकलेष्वयम् ॥ ५४॥**

हौमादिबीजैः सह शान्त्यतीताद्याः पञ्च कलाः कादिषु विन्यस्येत्। अयं कलाध्वा।

**स्वपञ्चमूर्तियोगिन्यो ब्रह्मादिष्वन्ततः क्रमात्।**
**हौमादीनि निजैर्बीजैः कखाद्यैर्मिलितानि वा ॥ ५५॥**

ब्रह्मादिषु शान्त्यतीतादीनामन्ततः क्रमात् स्वपञ्चमूर्तियोगिन्यः हौमादीनि बीजानि निजैर्निजैः कलाद्यैः पञ्चवर्णैर्युक्तानि वा स्युः। 'ओं हौं ओं शान्त्यतीतकलात्मने मोदाय नमः' इत्याद्या मन्त्रा इत्यर्थः।

**जीवप्राणादीनि तत्त्वानि सर्वे-**
**ष्वादित्ये शैवानि वा वाङ्मृडान्योः।**
**काल्यादिष्वप्यासु वा शक्तिमाये**
**विद्या पश्चात् पुंप्रकृत्यादिशेषम् ॥ ५६॥**

सर्वेषु जीवप्राणादीनि पञ्चविंशतितत्त्वानि आदित्ये शैवानि षड्त्रिंशत्तत्त्वानि बाङ्मृडान्योः काळ्यादिष्वपि षड्त्रिंशद् वा। आसु सरस्वतीगौरीकाळीषु शक्तिमाये विद्या च पश्चात् पुंस्प्रकृत्यादिशेषश्चेत्यष्टाविंशतिस्तत्त्वानि वा।

**जीवादिष्विह मादीनि हृत्क्षादीनि शिवादिषु।**
**बीजान्यैं कामसौस्पर्शाः शक्त्यादिषु यथाक्रमम् ।। ५७।।**

जीवादिषु पञ्चविंशतितत्त्वेषु मादीनि मभादिकान्तानि बीजानि। शिवादिषु षट्त्रिंशत्तत्वेषु हृत्क्षादीनि हृत् प्रासादः। पुनः क्षादिकान्तानि। शक्त्यादिष्वष्टाविंशतितत्त्वेषु ऐं कामसौस्पर्शा ऐं क्लीं सौः मादिकान्ताः स्पर्शाश्च बीजानि।

**न्यस्येद् हृत्पुण्डरीकादि तत्त्वान्तेषु चतुष्टयम्।**
**पञ्चतत्त्वान्यपि लिपितत्त्वाणुन्याससम्भवे ।। ५८।।**

तत्त्वान्तेषु हृत्पुण्डरीकादि चतुष्टयं पञ्चतत्त्वान्यपि न्यस्येत्। लिपितत्त्वाणुन्याससम्भवेऽपि लिपितत्त्वमन्त्रन्याससम्भवेऽप्येवं तत्त्वानि न्यसेत्।

**कृष्णे हराविव निसुम्भजितीव लक्ष्म्यां**
**तत्त्वानि मन्मथजितीव परेषु पञ्च।**
**क्षेत्रज्ञखादिपदमेव षडर्णवर्ण-**
**संयोजितं शतघृताविति षड् तु तस्मिन् ।। ५९।।**

पञ्चतत्त्वान्याह – कृष्ण इति। कृष्णे हराविव विष्णाविव पञ्चतत्त्वानि। लक्ष्म्यां निसुम्भजितीव मन्मथजितीव शतधृतौ ब्रह्मणि षडर्णः वर्णकलासंयोजितं षडक्षरमन्त्रस्य षड्भिरक्षरैर्योजितं क्षेत्रज्ञखादिपदमेव क्षेत्रज्ञपदमाकाशादिपदानि च इति तस्मिन् षट् तत्त्वानि।

**स्वबीजान्यसमैरञ्भिः श्रीदार्काग्र्यादिवाक्षु तु।**
**बीजानि पञ्चतत्त्वानां वा ग्राह्याणि बुधैरिह ।। ६०।।**

श्रीदार्काग्र्यादिवाक्षु वैश्रवणे सूर्ये ज्येष्ठाकाल्यादिषु सरस्वत्यां च पञ्चतत्त्वानामसमैरञ्भिः सहितानि स्वस्वबीजानि बुधैर्ग्राह्याणि वा।

**दिवाकरादिषु त्रीणि ब्रह्मादिषु चतुर्दश।**
**भुवनानि गुरूद्दिष्टो न्यासोऽयं भुवनाह्वयः ।। ६१ ।।**

दिवाकरादिषु शिवपक्षीयेषु त्रीणि भुवनानि ब्रह्मादिषु विष्णुपक्षीयेषु चतुर्दशभुवनानि। अयं भुवनाध्वन्यासो गुरूद्दिष्टस्तन्त्रसमुच्चयोक्त एव।

**न्यस्येत् काननवृत्तादौ केवलामेव मातृकाम्।**
**वर्णाध्वऽयं समुद्दिष्टो विरिञ्चमिहिरादिषु ।। ६२ ।।**

विरिञ्चमिहिरादिषु सर्वेषु काननवृत्तादौ स्थाने यथोक्तप्रकारेण केवलामेव मातृकां न्यस्येत्। अयं वर्णाध्वा समुद्दिष्टः।

**के फालदेशे चिवुकण्ठनाभावूरुद्वये जानुपदद्वये च।**
**क्रमान्न्यसेत् स्वस्वजिनार्णजानि पदानि विद्वानुदितः पदाध्वा।। ६३ ।।**

**गायत्र्या मुखमध्याङ्घ्रिष्वङ्घ्रीन् मूर्तीस्तु कादिषु।**
**न्यस्येन्मूलाक्षराङ्गदीन्येषोऽध्वा मन्त्रसंज्ञितः ।। ६४ ।।**

**कास्यहृदन्धुपदेष्विह पञ्च सदृङ्नाभिजानुषु त्वष्ट।**
**सभ्रूमध्यगलेषु च दशमूर्तीरिति षडध्वक्लृप्तिरियम् ।। ६५ ।।**

सर्वेषु पदाध्वनि स्वस्वगायत्र्याः अष्टौ पदानि मूर्धफलादिषु न्यसेदिति। मन्त्राध्वनि मुखमध्याङ्घ्रिषु गायत्र्यङ्घ्रीन् कादिषु मूलाक्षराङ्गादीनि च न्यसेत्। एष मन्त्राध्वा। मूर्तिन्यासे पञ्च मूर्तीः कास्यहृदन्धुपदेषु अष्टौ मूर्तीः सदृङ्नाभिजानुषु दश मूर्तीः सभ्रूमध्यगलेषु च न्यसेत्। इयं षडध्वक्लृप्तिः।

**गुर्वादिवन्दनकरास्त्रविशुद्धिताल-**
**त्रय्यादिकृद् ध्रुवयतासुरुदाहितात्मा।**
**लीनक्षमादिकृतशोषणपूर्विकानी-**

**तात्मा क्षमाद्युदयवृद्धिविभेदकृच्च ।। ६६ ।।**

**न्यस्येल्लिपीः कृतमनूदयतत्समीरा-**
**यामासनन्यसनमूर्त्यभिवाहनोऽथ।**
**दोर्न्यासदेहलिपितत्त्वनिजाणुवर्णा-**
**दिन्यासकृद् धिषणयार्च्य जपादि कुर्यात् ।। ६७ ।।**

इति मन्त्रोद्धारं षडध्वन्यासक्लृप्तिं चोक्त्वा पूजाङ्गतया स्वस्य मन्त्रदेवतायाः सकलीकरणं संक्षिपति गुर्वादीति। गुर्वादिवन्दनकरास्त्रविशुद्धितालत्रय्यादिकृद्भूत्वा गुर्वादिवन्दनं करयोरस्त्रेण विशुद्धिं तालत्रयादिकं च कृत्वेत्यर्थः। ध्रुवयतासुः प्रणवप्राणायामं च कृत्वोदाहितात्मा जीवात्मानमूर्ध्वतः परमात्मनि योजयित्वा लीनक्षमादिकृतशोषणपूर्वकानीतात्मा तत्त्वसंहारं शोषणादिकं जीवानुप्रवेशं च कृत्वा क्षमाद्युदयवृद्धिविभेदकृच्च भूत्वा क्षमादीनां तत्त्वानामुदयं संवत्सर-परिपाकवृद्धिमण्डभेदं च कृत्वा लिपिप्राणायामानन्तरं लिपीर्न्यस्येत्। पुनः कृतमनूदयतत्समीरायामासनन्यसनः मूर्त्यभिवाहनो भूत्वा मन्त्रोदयं मन्त्रप्राणायामं पीठन्यसनमूर्त्यावाहनं च कृत्वा दोर्न्यासदेहलिपितत्त्वनिजाणुवर्णादिन्यासकृत् करन्यासकृत् लिपितत्त्वानि निजमन्त्राक्षरन्यासादिकं षडध्वन्यासादिकं वा कृत्वा धिषणया आर्च्य मानसपूजां कृत्वा जपादि कुर्यात्।

**व्यापय्य मूलेन तलादि बाह्वो-**
**स्तदक्षराण्यङ्गुलिषु स्वक्लृप्त्या।**
**द्व्यङ्गुष्ठपूर्वासु तदङ्गकानि**
**न्यसेत् करन्यासदिगीरितैवम् ।। ६८ ।।**

तत्र करन्यासं विवृणोति – व्यापय्येति। बाह्वोस्तलादि तलपृष्ठपार्श्वेषु मूलेन व्यापय्य मूलाक्षराणि स्वक्लृप्त्याङ्गुलीषु न्यसेत्। द्व्यङ्गुष्ठपूर्वासु तत्तदङ्गकानि च न्यसेदिति करन्यासा ईरिताः।

**तत्त्वन्यासे कृते कुर्याद् यथाकामं समाहितः।**
**षडध्वन्यासविस्तारं मन्त्रन्यासं ततः परम् ॥ ६९॥**

देहन्यासे नियममाह – तत्त्वन्यासे इति। लिपितत्त्वन्यासे कृते सति यथाक्रमं षडध्वन्यासविस्तारं ततो मन्त्रन्यासं च समाहितमनाः कुर्यात्।

**शङ्खपूरणमाधाय गुरूदीरितरीतितः।**
**तथात्माराधनं पश्चादिज्यामारभतां विभोः ॥ ७०॥**

तन्त्रसमुच्चयोक्तविधिना शङ्खपूरणमात्माराधनं च कृत्वा देवस्य पूजामारभतामित्याह, शङ्खपूरणमिति।

**गुरुगणपतिपूजापूर्वमाधारशक्त्या-**
**द्युपरि यजतु धर्माधर्मसत्त्वादिपूर्वम्।**
**द्रुहिणतरणिकृष्णश्रीषु सूर्यादि चात्मा-**
**दि च निजनवशक्तीस्तत्समष्टिं च मन्त्री ॥ ७१॥**

पीठपूजामाह, गुर्विति। मन्त्रीति। तन्त्रसमुच्चयोक्तपूजामन्त्रज्ञ इत्यर्थः। द्रुहिणतरणिकृष्णश्रीषु गुरुगणपतिपूजाया अनन्तरमाधारशत्यदीनामुपरि धर्माधर्मसत्त्वादिपूर्वकं धर्मादिकमधर्मादिकं सत्त्वादिकं च पुनः सूर्यमण्डलादि पुनरात्मादि च ततो निजनिजनवशक्तीश्च तत्समष्टिं च यजतु।

**प्राङ्मण्डलेभ्यो नव शक्तयोऽन्ये-**
**षूर्ध्वं गुणाः शक्तित एव काळ्याम्।**
**प्राक्छक्तितोऽस्यां नवयोनिचक्र-**
**मूर्ध्वं समष्टेर्नव पीठयोगः ॥ ७२॥**

**पृथिव्यूर्ध्वं तु विद्याब्धिं रत्नद्वीपं सुमङ्गलम्।**
**मणिमण्डपमभ्यर्हेत् काल्यां कल्पद्रुमं पुनः॥**
**वाण्यादिष्वपि विद्याब्ध्यादियोगः कैश्चिदिष्यते ॥ ७३॥**

अन्येषु सूर्यादिमण्डलेभ्यः प्राक् नव शक्तयः स्युः। कास्यां नवशक्तित ऊर्ध्वमेव सत्त्वादिगुणाः मण्डलत्रयादिकं च, अस्यां काळ्यां शक्तितः प्राङ्नवयोनिचक्रं समष्टेरूर्ध्वं नवपीठयोगः नवानां पीठानां योगश्च स्यात् तत्समष्टिश्च। मन्त्रीति, पीठपूजायां केचन विशेषाः सूचिताः। यथा भद्रपदेः

"स्वगुरुं वामतोऽभ्यर्च्य दक्षिणे गणनायकम्।
बह्वौ कात्यायनीमीशे क्षेत्रपालमथार्चयेत्॥

आधारशक्तिं विद्याब्धिं रत्नद्वीपं सुमङ्गलम्।
मणिमण्डपसंयुक्तं कल्पद्रुममनन्तरम्॥

पश्चाद् यजेत धर्मादीन्नञ्पूर्वान् विदिशासु च।
दिशासु मध्येऽनन्तं च तन्मध्ये पङ्कजं यजेत्"॥

इत्यादि।

**विरक्तिः शान्तिरुत्प्रेक्षा संस्मृतिश्च महाद्युतिः।**
**संसृतिर्विरतिः सिद्धिरन्त्या ब्रह्मण्यनुग्रहा ॥ ७४॥**

**प्रभूतां विमलां सारां समाराध्यां यजेद् रवौ।**
**परमादिसुखां पीठक्लृप्तेः प्राक् कोणमध्यगाः ॥ ७५॥**

ब्रह्मादीनां नवशक्तीः क्रमेणाह – विरक्तिरित्यादि। रवौ पीठक्लृप्तेः धर्मादेः प्राक् प्रभूताद्याः पञ्चशक्तीः कोणमध्यगाश्च यजेत्। एतत् सामान्यपीठदधिकमवगन्तव्यम्।

**दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला रवौ।**
**अमोघा विद्युता चेति नवमी सर्वसिद्धिदा ॥ ७६॥**

**लक्ष्मीः शब्दनिधिः सर्वकामदा प्रीतिवर्धनी।**
**यशस्करी शान्तिदा श्रीदे पुष्टिस्तुष्टिरिष्टदा ॥ ७७॥**

पुनः स्वकाले दीप्ताद्या नव शक्तयः स्यु। श्रीदे लक्ष्म्याद्यः।

**विमलोत्कर्षिणी ज्ञाना क्रिया योगा च पञ्चमी।**
**देवकीनन्दने प्रह्वी सत्येशानुग्रहा क्रमात् ।। ७८ ।।**

कृष्णे विमलाद्याः।

**मेधा प्रज्ञा प्रभा विद्या धीर्धृतिस्मृतिबुद्धयः।**
**विश्वेश्वरी सरस्वत्यां समुक्ता नव शक्तयः ।। ७९ ।।**

सरस्वत्यां मेधाद्याः।

**विभूतिरुन्नतिः कान्तिर्हृष्टिः कीर्तिश्च सन्नतिः।**
**जुष्टिरुकृष्टिर्ऋद्धिश्च क्षीरोददुहितर्यपि ।। ८० ।।**

क्षीरोददुहितरि श्रियि विभूत्याद्याः।

**जया च विजयोमायामजिता चापराजिता।**
**नित्या विलासिनी दोग्ध्री ततोऽघोरा च मङ्गला ।। ८१ ।।**

उमायां जयाद्याः।

**कृष्णा विघ्ना मूकाऽथ जम्भनी स्तम्भनी महामन्दा।**
**अथ मलिनी भूतिघ्नी ज्येष्ठायां दुर्मुखी नवमी ।। ८२ ।।**

ज्येष्ठायां कृष्णाद्याः।

**"स्वगुरून् वामतेऽभ्यर्च्य दक्षिणे गणनायकम्।**
**वह्नौ कात्यायनीमीशे क्षेत्रपालमथार्चयेत्।।**

**आधारशक्तिं विद्याब्धिं रत्नद्वीपं सुमङ्गलम्।**
**मणिमण्डपमप्यर्हेत् कल्पद्रुममनन्तरम्।।**



**धर्मादीनप्यधर्मादीन् विदिशासुदिशासु च।**

**मध्येऽनन्तं च तन्मध्ये पङ्कजं प्रयजेदिति।।"**

**इच्छा ज्ञाना क्रिया काळ्यां कामिनी कामदायिनी।**
**रती रतिप्रियाऽनन्ता नवमी च मनोन्मनी ।। ८३।।**

काळ्यामिच्छाद्याः।

**प्रागादिदिक्षु मध्ये च सर्वेषु नव शक्तयः।**
**दिग्वदिक्षु च मध्ये च संपूज्या दारुकद्विषि ।। ८४।।**

तत्र सर्वत्र प्रागादिदिक्षु मध्ये च क्रमान्नव शक्तयः स्युः। दारुकद्विषि काळ्यां दिग्विदिक्षु मध्ये च संपूज्याः।

**शैव्यो वा वीरजननीषूमायां क्षेत्रपेऽपि च।**
**वीरादिषु तु गौर्या वा तीव्राद्यास्तु गणेश्वरे ।। ८५।।**

वीरजननीषूमायां क्षेत्रपेऽपि शैव्यो वा नव शक्तयः। वीरादिषु तु गौर्या गौर्यामुक्ता वा; गणेश्वरे तीव्राद्या एव।

**नतिं सर्वात्मसंयोगयोगपद्मेति चोच्चरन्।**
**पीठात्मने नम इति के ध्रुवादिः समष्ट्यणुः ।। ८६।।**

अथ ब्रह्मादिषु समष्टिमन्त्रान् क्रमेणाहः – नतिमित्यादि। कृष्णश्रियोर्ब्राह्मः समष्टिमन्त्रः। अथेति विकल्पार्थः वैष्णवो वेत्यर्थः।

**दिवाकरे चतुर्थ्यन्तं ब्रह्मविष्णुशिवात्मकम्।**
**सौरं चोक्त्वा वदेद् भूयो योगपीठात्मने नमः ।। ८७।।**

गौर्यां यदा शैव्यो नवशक्तयो गृह्यन्ते, तदा शैव एव समष्टिमन्त्रः।

**ओं सर्वशक्तिकमलासनाय नम इत्ययम्।**
**मन्त्रो वैश्रवणे कृष्णश्रियोर्ब्राह्मोऽथ वैष्णवः ।। ८८।।**

**ऐंवर्णाब्जासनायेति सरस्वत्यां नमोऽन्वितम्।**
**शैवो गौर्यां यदा शैव्यो गृह्यन्ते नव शक्तयः ।। ८९।।**

**कुबेरोक्तो जयाद्यश्चेदग्रजायामपि त्वयम्।**
**प्रेतासनाय नम इत्ययं काल्यां यथागमम् ।। ९०।।**

अग्रजायां अजया शक्त्या उपलक्षित आद्यः प्रणवः प्रणवानन्तरं भुवनेश्वर्या वियोज्यते चेत् कुबेरोक्त एव समष्टिमन्त्र इत्यर्थः। काळ्यां यथागममिति। "ओं सर्वशक्तिमयाय ब्रह्मविष्णुशिवात्मकाय प्रेतासनाय नमः" इति समष्टिमन्त्र इत्यर्थः।

**कारञ्जरकोल्हारकचोहारौड्याणमालेयम्।**
**सकुलान्धकजालन्धरदेवीकोट्टं च पूर्णगिरिम् ।। ९१।।**

**दिग्विदिक्ष्वष्ट पीठानि भैरव्यामन्तरन्तिमम्।**
**तस्मिन् पीठे स्वयं देवीं परितोऽष्टसु मातरः ।। ९२।।**

भैरव्यां दिग्विदिक्षु कारञ्जराद्यष्टपीठानि। पुनरन्तरन्तिमं पूर्णगिरिपीठं तस्मिन् पीठे स्वयं देवी स्यात्। परितोऽष्टसु पीठेषु मातरः स्युः।

**कुलपद्मासनायेति नत्यन्तो मातृषु स्मृतः।**
**क्षेत्रपालेप्ययं प्रायः पीठमन्त्रा इतीरिताः ।। ९३।।**

मातृषु क्षेत्रपालेऽपि नत्यन्तः कुलपद्मासनायेति समष्टिमन्त्रः स्मृतः। इति प्रायः पीठमन्त्रा ईरिताः।

**जलगन्धादिभिः पीठमिष्ट्वाऽर्घ्यं प्राप्य शक्तये।**
**तारोपचारमूलोक्त्याऽऽवाह्य[१] मुद्राश्च दर्शयेत् ।। ९४।।**



१. 'बाह्यमुद्राश्च' ग.

क्रियारीतिमाह – जलगन्धादिभिरिति। इति जलगन्धादिभिः पीठमिष्ट्वा पीठशक्तयेऽर्ध्यं प्राप्यं तारेपचारमूलोक्त्या सह तां तां मूर्तिमावाह्य मुद्राश्च दर्शयेत्।

**तारादिव्याहृतीर्व्यस्ताः समस्ताश्च पृथग्वदन्[1]।**
**ज्येष्ठीमावाहयामीति ज्येष्ठायां योजयेत् बुधः ॥ ९५॥**

ज्येष्ठायामावाहने तारादि यथा भवति तथा व्यस्ताः समस्ताश्च व्याहृतीः पृथग्वदन् ज्येष्ठीमावाहयामीति योजयेत्। बुध इति 'ओं भूः ज्येष्ठीमोमावाहयामि' इति मन्त्रज्ञ इत्यर्थः।

**लिपित्तत्त्वाणुविन्यासैः सकलीकृत्य तं प्रभुम्।**
**षडध्वादियुतैर्वाऽपि पुनस्तं चिन्तयेत् सुधीः ॥ ९६॥**

पुनः सकलीकृत्य ध्यायेदित्याह – लिपीति।

**जटामकुटमण्डितो जयति दण्डकुण्डीस्त्रुव-**
**स्त्रुचं च करपङ्कजैररुणपङ्कजाभो वहन्।**
**द्विलोचनचतुर्मुखोऽरुणसरोजबद्धासनो**
**लसत्सकलभूषणः सकल[2]दिव्यवन्द्यो विधिः ॥ ९७॥**

**अरुणसरोरुहसंस्थस्त्रिदृगरुणोऽरुणसरोजयुगळधरः।**
**कलिताभयवरदो[3] द्युतिबिम्बोऽमितभूषणोऽवतु न इनः ॥ ९८॥**

**नानारत्नलसिद्विचित्रमकुटो दोर्भ्यां गदाम्भोरुहौ**
**विभ्राणोऽद्भुतकुण्डलोर्मिवलयग्रैवेयकाद्युज्ज्वलः।**
**किञ्चिद्ध्रस्वभुजाङ्घ्रियुग् धृतदुकूलाग्र्योऽधिरा[4]जोचिते**

१. 'वदेत्' च. २. 'लोक' घ. ३. 'वरदधरो द्युति' ङ. ४. 'अधिराजार्चिते' क

पीठे वैश्रवणः स्थितो जयति पीनात्माऽऽवृतः स्वानुगैः ।।
९९।।

कृष्णो नः शिखिपिञ्छ[1]संयतकचो बालाकृतिः कर्णयो-
स्तन्मुद्रामकरोज्ज्वलो लकुटकं वक्रं वहन् दक्षिणे।
दोर्वामं सदरं कटौ विनिदधल्लम्बाग्रमर्धोरुकं
बिभ्रद्दीप्तविभूषणः सुललितो रक्षेत् स्थितो गोव्रजे ।। १००।।

हंसारूढा दरहसितहारेन्दुकुन्दावदाता
वाणी मन्दस्मितयुतमुखी मौलिबद्धेन्दुरेखा।
विद्यावीणामृतमयघटाक्षस्रगादीप्तहस्ता
शुभ्राब्जस्था भवदभिमतप्राप्तये भारती स्यात् ।। १०१।।

भूयाद् भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपना[2]भ्याम्।
नानाकल्पाभिरामा स्मितमधुरमुखी सर्वगीर्वाणवन्द्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा [3]श्रीः श्रिये [4]वः ।।
१०२।।

उद्यद्भास्वत्समाभां विजितनवजपामिन्दुखण्डावनद्ध-
द्योतन्मौलिं त्रिनेत्रां विविधमणिलसत्कुण्डलां पद्मगां च।
हारग्रैवेयकाञ्चीगुणमणिवलयाद्यैर्विचित्राम्बराढ्या-
मम्बां पाशाङ्कुशेष्टाभयकरकमलामम्बिकां तां नमामि ।।
१०३।।

भुजगयमितकेशा पाटलीमालयाऽऽढ्या

१. 'संयुत' च पाठः। २. 'द्या' ख. घ, च. छ. ३. 'श्रीर्भवेन्नः' घ. ४. 'नः' ख.ग. च. छ.

कुमुदकुसुमचूडा कुण्टलोद्दीप्तकर्णा।
नवजलधरवर्णाऽऽजङ्घवस्त्रा कराभ्या-
मभयकटिनिधानोल्लासिनी काळ[1]कर्णी ॥ १०४॥

अञ्जनाचलनिभा त्रिलोचना
सेन्दुखण्डविलसत्कपर्दिका।
रक्तपट्टपरिधायिनी चतु-
श्चारुदंष्ट्रपरिशोभितानना ॥ १०५॥

हारनूपुरमहार्हकुण्डला-
द्युज्ज्वला घुसृणरञ्जितस्तना।
प्रेतरूढगुणसत्क[2]पालिनी
खड्गचर्म धृ[3]दिहास्तु भैरवी ॥ १०६॥

मृगटङ्कवराभीतिकरो वीरास्त्रिलोचनः।
नागोपवीताभरणः श्वेतचर्माम्बरो भवेत् ॥ १०७॥

गजास्यमेकदन्तं च त्रिनेत्रं नागभूषणम्।
कनकाभं करासक्तपाशाङ्कुशवरं तथा ॥१०८॥

भक्ष्यं च विभ्रतं देवं ह्रस्वपादकरद्वयम्।
शुण्डाग्रन्यस्तचषकं महाकायं विचिन्तयेत् ॥ १०९॥

दण्डं कमण्डलुं बिभ्रत्यक्षसूत्रमथाङ्कुशम्।
सुवर्णवर्णा ब्रह्माणी कृष्णाजिनधरा भवेत् ॥ ११०॥

शूलं परश्वधं क्षु[4]द्रदुन्दुभिं नृकरोटिकाम्।

१ 'कण्ठी' च. २ 'कलापिनी' ङ. ३. 'कृदि' च. पाठः
४. 'क्षुद्रं दु' घ.

बिभ्रतीमभ्रशुभ्राभां स्मरेन्माहेश्वरीमपि ।। १११।।

अङ्कुशं दण्डखट्वाङ्गपाशांश्च दधतीं भुजैः।
ध्यायेत् सिन्दूरसङ्काशां कौमारीं शक्तिमालिकाम् ।। ११२।।

चक्र[1]घण्टापताकाख्यशङ्खराजच्चतुर्भुजाम्।
कळा[2]यश्यामळां ध्यायेद् वैष्णवीं पीतवाससम् ।। ११३।।

मुसलासिलसद्घण्डाहलोद्यत्करपङ्कजाम्।
गदावरदसंयुक्तां वाराहीं नीरदप्रभाम् ।। ११४।।

अङ्कुशं तोमरं वज्रं चक्रं च दधतीं शुभाम्।
इन्द्रोपलाभामिन्द्राणीं स्मरेदुज्ज्वलभूषणाम् ।। ११५।।

शूलासिनृशिरोराजत्कपालविलसद्भुजाम्।
मुण्डस्रङ्मण्डितां चण्डां[3] चामुण्डा[4]मपि चिन्तयेत् ।। ११६।।

पद्मस्था वीरभद्राद्या ध्यातव्या नव धीमता।
प्रकारान्तमेतेषां मृग्यं तन्त्रान्तरेष्वपि ।। ११७।।

कपालं च त्रिशूलं च पाशं डमरु[5]कं दधत्।
क्षेत्रपोऽञ्जनसङ्काशो ज्वलितोर्ध्वशिरोरुहः ।। ११८।।

स्पष्ट[6]दंष्ट्रो महाकायो रक्ताकल्पो दिगम्बरः।
सौवर्णकिङ्किणीदीप्तो हेम[7]पीठाम्बुजे[8] स्थितः ।। ११९।।

एवं ध्यात्वाऽर्चितं पीठमासनं विनिवेदयेत्।
साञ्जलिः स्वागतं ब्रूयात् प्रदद्याच्चोप[9]चारकान् ।। १२०।।

---

१ 'चक्रं घण्डा' घ. २ 'कालाय' ङ.च. ३. 'चण्डी' ख.ग.घ.ङ.च.छ.
४. 'चामुण्डी' घ. ५. 'दमरुकं' च. ६. 'स्वेष्ट' च. ७. 'हैम' घ.
८. 'जीस्थतः छ. ९. 'हार' घ. पाठः

ब्रह्मादीनां ध्यानं पृथक् पृथगाह – जटामकुटेति। ध्यानश्लोकानामर्थं ग्रन्थगौरवभयाद् वयं न ब्रूमः ।

**दद्यादिहार्घ्यादि विरिञ्चलक्ष्म्योः**
**शेषेषु पाद्याद्युपचार[1]जातम्।**
**कृष्णाग्रजावाक्षु तथाऽन्यथा वा**
**ततः प्रकुर्वीत च विग्रहेज्याम् ।। १२१।।**

क्रियाशेषमाह – एवमिति। एवमुक्तप्रकारेण ध्यात्वा प्रागर्चितं पीठमासनत्वेन विनिवेदयेत्। पुनः साञ्जलिः स्वागतमिति ब्रूयात्। उपचारकान् प्रदद्याच्च।

**तारोपचारमूलाद्या न्यस्तमन्त्रा यथाक्रमम्।**
**भूषणायुधपर्यन्ता मनवो विग्रहार्चने ।। १२२।।**

इह विरिञ्चलक्ष्म्योरुपचारजातमर्घ्यादि दद्यात्। शेषेषु पाद्यादि कृष्णाग्रजावाक्षु तथा वान्यथा अर्घ्यादि वा दद्यात्। ततो विग्रहेज्यां देवस्य विग्रहगतां पूजां प्रकुर्वीत।

**परिवारप्रसरणं स्नानारम्भे विधीयते।**
**स्नानाद्यप्यङ्गमूर्तिभ्यः सर्वे पूज्या जलादिभिः ।। १२३।।**

परिवारप्रसरणं स्नानारम्भे स्नानात् प्राक् कुर्यात्। अङ्गमूर्तिभ्यः अङ्गेभ्यो मूर्तिभ्यश्च स्नानाद्यपि दद्यात्। पुनः सर्वे परिवारा जलादिभिः पूज्याः।

**स्यादङ्गमूर्तिलोके शास्त्राण्यावरणमखिलदेवेषु।**
**काळ्यां तु मूर्त्यनन्तरमङ्गान्येवं क्रमः प्रोक्तः ।। १२४।।**

अखिलदेवेषु अङ्गमूर्तिलोकेशास्त्राणि स्वाङ्गानि स्वमूर्तयः इन्द्राद्या वज्राद्या आवरणं स्यात्। काळ्यां तु मूर्त्यनन्तरमेवाङ्गानि। एवं सर्वत्र क्रमः प्रोक्तः।



१.‘हार’ घ. पाठः

**प्रागादिदिक्षु हृदयाद्यनलादिकोणे-**
**ष्वस्त्रं पुरोऽक्षि च पितामहकृष्णमासु।**
**अग्नीशनैर्ऋत[1]तमरुत्सु हृदादि शेषे-**
**ष्वग्रेऽक्षि पूजयतु दिक्षु ततः स्वम[2]न्त्रम् ।। १२५।।**

तत्राङ्गपरिवारे दिग्भागमाह – प्रागादीति। पितामहकृष्णमासु प्रागादिदिक्षु हृदयादिचतुष्कं अनलादिकोणेष्वस्त्रं पुरोभागेऽक्षि च पूजयतु। शेषेषु अग्नीशनैर्ऋततमरुत्सु हृदयादिचतुष्कम्; अग्रे अक्षि, ततो दिक्षु स्वमन्त्रं च पूजयतु।

**वासुदेवः सङ्कर्षणः प्रद्युम्नश्चानिरुद्धकः।**
**दिक्षु कोणेषु शान्तिः श्रीः सरस्वत्यप्यजे रतिः ।। १२६।।**

मूर्तिपरिवारान् क्रमेणाह – वासुदेव इति। अजे दिक्षु वासुदेवादयः कोणेषु शान्त्यादयः।

**प्रागादिषु ग्रहाः सूर्ये स्युः सोमाङ्गारकादयः।**
**सौम्या वा दिक्षु चत्वारो विदिक्षूग्रा यथाक्रमम् ।। १२७।।**

सूर्ये सोमाङ्गारकबुधगुरुशुक्रमन्दराहुकेतवो दिक्षु स्युः। पूर्वादिचतुर्दिक्षु सोमबुधगुरुशुक्राः सौम्याः, विदिक्षु कुजमन्दराहुकेतव उग्रा इति वा क्रमः।

**भद्रौ च मणिपूर्णादिकौ ततश्चेलिमालिचिबिकुण्डलिनौ।**
**दिक्षु विदिक्षु नरेन्द्रच[3]रेन्द्रहय[4]ग्रीवकधृतराष्ट्रा धनदे।। १२८।।**

धनदे दिक्षु मणिपूर्णादिकौ भद्रौ माणिभद्रः पूर्णभद्रश्च चेलिमाली चिबिकुण्डली च। विदिक्षु नरेन्द्रादय श्चत्वारः।

---

१. 'नैर्ऋति' च. २. 'स्वमस्त्रम्' घ. ङ. च. छ. ३. 'वरेन्द्र' ख. 'हयग्रीवक' ग. ४. 'ग्रीव' ङ.

**स्युर्वासुदेवबलभद्रौ प्रद्युम्नोऽनिरुद्ध आशासु हरौ।**
**व्याशासु रुक्मिणी स्युरथ सत्यभामा च लक्षणा जाम्बवती ।। १२९।।**

**योगा सत्याऽथ विमला ज्ञाना बुद्धिः स्मृतिः क्रमात्।**
**मेधा प्रज्ञां च भारत्यां प्रागाद्या अष्ट शक्तयः ।। १३०।।**

हरौ कृष्णे आशासु वासुदेवादयः, व्याशासु विदिक्षु रुक्मिण्यादयः भारत्यां योगाद्याः प्रागाद्या अष्टशक्तयः।

**रमायां वासुदेवाद्या दिक्षु कोणेषु वारणाः[१]।**
**दमकः शमक[२]श्चैव गुग्गुलु[३]श्च कुरण्डकः ।। २३१।।**

रमायां दिक्षु वासुदेवाद्याः कोणेषु दमकाद्या वारणा गजाः स्युः।

**अनङ्गरूपा मदनाऽनङ्गपूर्वा तथाऽऽतुरा।**
**तथा मदनवेगा च ततो भुवनपालिका ।। १३२।।**

**स्यात् सर्वाशिशिराऽनङ्गवेदनाऽनङ्गमेखला।**
**दूत्यः प्रागादिदिक्षु स्युरुमायां मातरोऽथवा ।। २३३।।**

उमायां प्रागादिदिक्षु अनङ्गरूपाद्या मातरो वा स्युः।

**ज्येष्ठायां शक्तयः पञ्च चतुर्दिक्षूपरीश्वरे।**
**[४]वशिनीमपि कामेशीं मोदिनीं विमलां क्रमात्।। १३४।।**

**अरुणां च महायक्षीं तथा सर्वेश्वरीमपि।**
**[५]कौलिनीमर्चयेत् काल्यामादिवर्गैः सहादितः ।। २३५।।**

१. 'वारुणाः' घ. २. 'शलक' ग.च.छ. 'शलल' घ. ३. 'गुल्गुलु' ग.ङ. पाठः। ४. 'वाशिनीमपि' च. ५. 'कालिनी' ग.च.छ.

ज्येष्ठायां सर्वलोकाद्याः पञ्च शक्तयः चतुर्दिक्षु; उपरिगताः ईश्वरे ईशाने च। काळ्यां वशिन्याद्या अष्टशक्तयः आदिवर्गैः स्वराद्यष्टवर्गैः सहादिता-ऽङ्गावरणात् पूर्वमर्चयेत्।

**ब्रह्माण्याद्या वीरभद्रस्य दिक्षु ब्रह्माण्याः स्युर्वीरभद्रोऽथ सप्त।**
**माहेश्याद्याश्चैवमन्येषु षट्सु ग्राह्यास्त्वष्टौ स्वेतरा मूर्तयश्च[१] ।।२३६।।**

वीरभद्रस्याष्टदिक्षु ब्रह्माण्याद्या अष्टौ स्युः; ब्रह्माण्यास्तु वीरभद्र पूर्वम्। अथ माहेश्याद्याः सप्त च। अन्येषु षट्स्वेवमेव। स्वेतराः स्वस्मादितरा अष्टौ मूर्तयो ग्राह्याः स्युः।

**हेतुकास्त्रिपुरान्तश्चाप्याग्निवेताल एव[२] च।**
**[३]अग्निजिह्वोऽग्निकल्पश्च कराळश्चैकपादकः।**
**भीमरूपोऽष्टदिक्ष्वेते क्षेत्रपालेऽष्ट मूर्तयः ।। २३७।।**

क्षेत्रपाले हेतुकादयोऽष्टमूर्तयः स्युः।

**सूर्यवाग्भैरवीगौरीष्वस्ति मातृभिरावृतिः।**
**तृतीया स्यान्महालक्ष्मीरष्टमी मिहिरेऽरुणः ।। १३८।।**

सूर्यवाग् भैरवीगौरीषु मातृभिस्तृतीया आवृतिरस्ति। अस्यामावृतौ महालक्ष्मीरष्टमी स्यात्।

मिहिरेऽरुणश्च।

**वलाकी विमला लक्ष्म्यां कमला वनमालिका।**

१. 'स्यु' घ.ग.घ.च.छ. २. 'जिह्वकौ' ग.च.छ. ३. 'कालाक्षोऽथ' कराळश्चाप्येकपादस्तु सप्तमः। 'भी' च.छ. 'अर्धमिदं' 'घ' पाठे न दृश्यते।

**विभीषिकां मालिका च शाङ्करी वसुमालिका।। १३९।।**

**गौर्यामावृतिरन्या वा हृल्लेखाद्यास्तु शक्तयः।**
**मूर्ध्न्यैन्द्रयाम्यवरुणसौम्येष्वर्च्याः[1] क्रमादथ।। २४०।।**

लक्ष्म्यां वलाकाद्यावृतिस्तृतीया स्यात्। गौर्यां पूर्वोक्तादन्या वा आवृतिः स्यात्। तत्र हृल्लेखाद्याः शक्तयो मूर्धादिपञ्चस्थानेषु अर्च्याः। एषा प्रथमावृतिः।

**इष्ट्वाङ्गान्यथ गायत्रीं[2] सावित्रीं च सरस्वतीम्।**
**प्राग्रक्षोवायुकोणेषु षट्कोणस्य तदावृतौ ।। १४१।।**

**ब्रह्मा विष्णुश्च रुद्रोऽग्निवरुणेशाश्रिषु[3] क्रमात्।**
**चतुर्थी त्वावृतिरियं[4] मातृभिः स्यादुदीरिता ।। १४२।।**

अथाङ्गानि द्वितीयावृतिः स्यात् तेन षट्कोणस्य प्राग्रक्षोवायुकोणेषु गायत्र्याद्यास्तिस्रः तदावृतावेव अग्निवारुणैशाश्रीषु ब्रह्माद्यास्त्रिमूर्तयश्च स्युः। मातृभिश्चतुर्थ्यावृतिश्च स्यात्।

**शङ्खपद्मनिधी श्रीदे क्रमाद्दक्षिणवामयोः।**
**मायाग्नी तु तयोर्बीजं वैनतेयोऽग्रतो हरौ ।। १४३।।**

श्रीदे मूर्त्यावारणानन्तरं दक्षिणवामयोः शङ्खपुष्प[5]निधी स्याताम्। तयोस्तु मायाग्नी शक्तिरग्निबीजं च।

**काल्यां तु मातरः स्वस्वभैरवैः सह पीठगाः।**
**असिताङ्गो रुरुश्चण्डः क्रोधीशोन्मत्तकौ[6] परः।। १४४।।**
**कपाली भीषणश्चैव संहारश्चाष्टभैरवः[7]।**

---

१. 'र्घ्याः' ग.। २. 'गायत्री सावत्री च सरस्वती' ख.ग.च.छ. ३. 'वारुणैशा' ग.घ.च.छ.। ४. 'रिह' घ.च.छ. पाठः। ५. मूले 'पद्म' इति पाठः। ६. 'त्तयोः परः' ख.ग.घ.च.छ.। ७. 'भैरवाः' ख.ग.घ.ङ.च.छ.

**तेषां ह्लस्वाष्टकं बीजं मातृणामितराष्टकम्।। १४५।।**

काळ्यां तु मातरः स्वस्वभैरवैः सह पीठगाः पूर्वोक्तपीठेषु स्थिताम् असिताङ्गादयो भैरवाः तेषां ह्रस्वाष्टकं बीजं मातृणामिताराष्टकं च बीजं स्यात्।

**विष्वक्सेनो विधियदुपयो राजराजे च शुभ्र-**
**स्तेजश्चण्डोऽर्यमणि सुभगा पुष्पधारिण्युत स्यात्।**
**गौर्यां लक्ष्म्यां धृतिरथ मतिर्वाचि चण्डादिदासी**
**ज्येष्ठायां दारुकजिति पुनः शेषिका शेषभुक्[1] स्यात्।। १४६।।**

निर्माल्यधारिणमाह विष्वक्सेन इति – विधियदुपयोर्ब्रह्मकृष्णयोर्विष्वक्सेनो निर्माल्यभुक् स्यात्। राजराजे वैश्रवणे शुभ्रः, अर्यमणि तेजश्चण्डः गौर्यां सुभगा वा पुष्पधारिणी वा लक्ष्म्यां धृतिः, वाचि सरस्वत्यां मतिः ज्येष्ठायां चण्डदासी, दारुकजिति शेषिका च।

**मातृषु च चण्डसेना क्षेत्रपतौ क्षेत्रचण्डश्च।**
**परिवारशेषभुक्ष्विह तन्त्रविदां सन्ति मतभेदाः।। १४७।।**

मातृषु चण्डसेना, क्षेत्रपतौ क्षेत्रचण्डश्च शेषभुक् स्यात्। इह परिवारशेषभुक्षु तन्त्रविदां मतभेदाः सन्ति।

**विग्रहावरणपूजनान्ततः केवलं तमभिपूज्य किञ्चन।**
**पाद्यकाद्यपि समर्प्य तत्पुरः स्वानयेद् वहु निवेद्यमुज्ज्वलम्।।**
**१४८।।**

क्रियाशेषमाह – विग्रहेति। विग्रहावरणपूजान्ते प्रणवेन देवे परिवारान् योजयित्वा केवलं तं किञ्चनाभिपूज्य पाद्यार्घ्याचमनीयानि समर्प्य तत्पुरोभागे कदलीफलोपदंशादिभिः उज्ज्वलं बहु निवेद्यं स्थापयेत्।

१. 'शेषभाक्' च.।

**निवेद्य गुरुनिर्दिष्टदिशा द्वारं पिधाय च।**
**कृत्वा होमं बलिं चापि समाचम्यान्तराविशेत्।। १४९**

गुरुनिर्द्दिष्टदिशा तन्त्रसमुच्चयोक्तमार्गेण निवेद्य द्वारं पिधाय पूजाहोमं बलिं च कृत्वा समाचम्यान्तराविशेत्।

**विसृज्य तन्निबेद्यान्नं दत्त्वा निर्माल्यधारिणे।**
**गण्डूषादि समर्प्याथ विधिवत्परिपूजयेत्।। १५०।।**

तन्निवेद्यान्नं विसृज्य निर्माल्यधारिणे निबेद्यम्; अथ गण्डूषादि समर्प्य विधिवत् परिपूजयेत्।

**पुष्पाञ्जलिजपादीनि कृत्वा ब्रह्मार्पणं चरेत्।**
**प्रसन्नार्घ्यं प्रदायाथ प्रोक्षेत् तीर्थजलैः क्रमात्।। १५१।।**

अथ पुष्पाञ्जलिजपादीनि कृत्वा ब्रह्मार्पणं चरेत्। पुनः प्रसन्नार्घ्यं प्रदाय सर्वेषां प्रोक्षेच्य।

**दत्त्वार्घ्यमवसानीयं लयाङ्गादि विधाय[1] च।**
**तालत्रयादिनाऽऽरक्ष्य प्राणायामादिकं चरेत्।। १५२।।**

अवसानीयार्घ्यं दत्त्वा लयाङ्गादीनि विधाय तमारक्ष्य प्राणायामादि चरेत्।

**पृथिव्यूर्ध्वं तु विद्याब्धिं रत्नद्वीपं सुमङ्गलम्।**
**मणिमण्डपमप्यर्हेत् काल्यां कल्पद्रुमं पुनः।। १५३।।**
**वाण्यादिष्वपि विद्या[2]ब्ध्यादियोगः कैश्चिदिष्यते।**
**सूर्ये प्रसन्नपूजायां केचिदर्घ्यं प्रचक्षते।। १५४।।**

काळ्यां प्राङ् मन्त्रिपदेन सूचितं विशेषं सांप्रतमाह – पृथिव्यूर्ध्वमिति।

१. 'विधाय तम्' ग.घ. १. 'विद्याब्धियोगः कैश्चिदिहेष्यते' घ. पाठः।

वाण्यादिष्वपि कैश्चिद् विद्याब्धियोग इष्यते। सूर्ये प्रसन्नपूजायां केचिदर्घ्यं च कर्तव्यमिति प्रचक्षते।

इति शेषसमुच्चये तृतीय पटलः

# अथ चतुर्थः पटलः।

**अथ कृतबीजवापकृतनिष्कृतितत्वहुतो**
**विहितदिशा विशोध्य निजमण्डपमत्र गुरुः।**
**द्रविणवशाद् वि[1]धाय च पदानि विचित्रतया**
**कलशच[2]यं प्रपूजयतु कर्मविदागमवित् ।। १ ।।**

एवं प्रतिष्ठां तदनन्तरप्राप्तां पूजां चोक्त्वा चतुर्थदिवसस्नानविधिमाह - - अथेति। कृतबीजवापकृतनिष्कृतितत्त्वहुतो विहितदिशा यथाकालं बीजावापं प्रायश्चित्तहोमांस्तत्तहोमं च कृत्वा निजनिजस्य योग्यं मण्डपमपि विशोध्यात्र द्रविणवशाद् विचित्रतया पदानि विधाय कर्मवित् क्रियाविशेषज्ञः आगमवित् क्रियाया मूलभूतानागमांश्च जानन् गुरुः कलशानां चयं समूहं पूजयतु।

**स्नात्वाऽऽचान्तो[3] द्रुहिणकलशस्योपविष्टः समीपे**
**स्विष्टात्मा स्विष्टगुरुगणपो विष्टरं [4]पीठ इष्ट्वा।**
**कुम्भेऽस्त्रोक्षादिकृदथ कला न्यस्य कुम्भाभिवाहं**
**कुर्यात् [5]कूर्चं द्रविणनिहि[6]तं मानसं पूरणं च ।। २ ।।**

ब्रह्मकलशपूजां संक्षिपति – स्नात्वेति। स्नात्वाचान्तो ब्रह्मकलशस्य समीप उपविष्टः स्विष्टात्मा स्विष्टगुरुगणपो गुरुः पीठे विष्टरमिष्ट्वा प्रकृतिमावाह्य संपूज्य कुम्भेऽस्त्रोक्षणादिकं कृत्वा स्थानत्रये वह्निसूर्यसोमकलाः न्यस्य

१. 'विनिधाय' छ., २. पषः श., ३. 'स्नाताचान्तो' च.छ., ४. 'पीठमिष्ट्वा' ख.ङ.च., ५. 'कूर्चद्रविण' ग.ङ.छ., ६. 'निहितं' ङ.च.छ.

कुम्भाभिवाहं कुर्यात्। कूर्चं द्रविणविनिहितं कूर्चविन्यासं द्रविणविन्यासं मानसं पूरणं च कुर्यात्।

**सम्पूर्या[१]र्णाम्बुरुहमभिपूज्याभिवाह्यात्र मूर्तिं**
**विद्यादेहं क्रमविदुभयोस्तत्कलातत्त्वजातम्।**
**मन्त्रावाहन्यसनकृदथाभ्यर्च्य साङ्गावृतिं तं**
**नैवेद्यान्ते मुदितमपि कृत्वाऽभिमन्त्र्याथ रक्षेत् ।। ३।।**

अथ यथोक्तक्रमेण जलैः संपूर्य लिपि पङ्कजं चाभिपूज्यात्र मूर्तिं विद्यामूर्तिं च क्रमविदभिवाह्य उभयोः मूर्तिविद्यामूर्त्योः क्रमेण तत् कलातत्त्वजातं मूर्तौ कलासमूहं विद्यामूर्तौ तत्त्वसमूहं चाभिवाह्येत्यर्थः। अथ मन्त्रावाहनं तद्योग्यन्यासजातं च कृत्वाथ साङ्गं सावरणं तमभ्यर्च्य नैवेद्यान्ते प्रसन्नपूजां कृत्वा सञ्जप्य रक्षेत्।

**पीठेष्टिकुम्भपरिशुद्धित[२]दीयकूर्च-**
**द्रव्यार्पणद्विविधपूरणकृत् प्रकल्प्य।**
**मूर्तिद्वयीं मनुचितिं परिखण्डमध्य-**
**कुम्भेषु तद्विदभिवाह्य समर्च्य रक्षेत् ।। ४।।**

परिकलशपूजारीतिमाह – पीठेष्टीति। तद्वित् तत्तद्द्रव्यदेवतामन्त्रान् जानन् परिखण्डानां मध्यकुम्भेषु पीठेष्टिं कुम्भपरिशुद्धिं तत्पूजां कूर्चार्पणं द्रव्यार्पणं मानसपूरणं जलपूरणं च कृत्वा मूर्तिद्वयीं मूर्तिद्वितयं स्थूलमूर्तिं सूक्ष्ममूर्तिं च प्रकल्प्य मनुचैतन्यमभिवाह्य समर्च्य रक्षेत्।

**द्रव्याणि सप्तदश विश्वसृगादिषु स्युः**
**प्रायो नवैव जननीषु नवापि कृष्णे।**
**काल्यां तु पञ्चकृतिरप्यजकृष्णवाक्सू-**

१. ‘सम्पूज्यार्णाम्बु’ घ.ङ., २. ‘तदिष्टि’ ख.च.छ.

**र्योमासु वा श्रियि तु सप्तदशापि वा स्युः ।। ५ ।।**

द्रव्यक्लृप्तिमाह द्रव्याणीति – विश्वसृगादिषु ब्रह्मादिषु सर्वेषु प्रायः सप्तदश द्रव्याणि स्युः। जननीषु नवैव। कृष्णे नवापि सप्तदश च वक्ष्यमाणपञ्च-विंशतिश्च। काळयां तु पञ्चकृतिः पञ्चविंशतिः सप्तदशापि। अजकृष्णवाक्सूर्योमासु वा विकल्पेन पञ्चविंशतिश्च। श्रीयां तु पञ्चविंशतिः विकल्पेन सप्तदश च स्युः। वैश्रवणज्येष्ठाक्षेत्रपालेषु पारिशेष्यात् सप्तदश द्रव्याणि च स्युः।

**वैष्णवी पदक्लृप्तिः स्याद् ब्रह्मश्रीनरकारिषु।**
**शैवी सप्तदशद्रव्यविधावन्येषु कीर्तिता ।। ६ ।।**

एवं सप्तदशद्रव्यविधौ वैष्णवी पदक्लृप्तिः स्यात्। ब्रह्मश्रीनरकारिषु अन्येषु शैवी पदक्लृप्तिः कीर्तिता। तत्र ब्रह्मणि स्वोक्तं विष्णूक्तञ्च।

**ब्राह्मे ब्रह्मणि रत्नतोयमथ पाद्याचाममर्घ्यं दधि**
**क्षीरं मध्वपि दिग्विदिक्ष्वपि घृतं न्यस्येत् तिलोदं ततः।**
**तद्वित्[१] कौशजलं सशार्करमथो केर्यम्बु बाह्यावृतौ**
**तन्मन्त्रेण फलारविन्दयवशाल्यम्भांसि गन्धाम्बु च ।। ७ ।।**

**आपो हि तिस्रः स्युर्ऋतं च तिस्रो हिरण्यगर्भो दश षोडशेमाः।**
**क्रमेण पाद्याद्यभिषेकमन्त्रा[२] ब्राह्मे तु ते षोडश मूलयुक्तम् ।। ८ ।।**

सप्तदशद्रव्यविधिं वदन् प्रथमं स्वोक्तमाह – ब्राह्म इति। ब्रह्मणिब्राह्मे कलशे स्वमन्त्रतो रत्नतोयम्। अथ दैविके दिग्विदिक्षु पाद्याद्यष्टद्रव्याणि ततो बाह्यावृतौ तद्वदेव। दिग्विदिक्षु कौशजलाद्यष्टद्रव्याणि च न्यस्येत्। तत्रापोहिष्ठेति

१. 'तद्वत्' छ. पाठः, २. 'मन्त्रान्' ख. पाठः

तिस्रः, ऋतं च सत्यं चेति तिस्रः, हिरण्यगर्भः समवर्ततेति दश। इमाः षोडश ऋचः क्रमेण पाद्याद्यभिषेकमन्त्राः, अन्ते ब्राह्मे तु ते षोडश मूलयुक्तमन्त्रः स्यात्।

**आज्योष्णोदकरत्नकानि फललोहं मार्जनं गन्धकं**
**प्रादक्षिण्यविधानतोऽक्षतयवौ ब्राह्मे सदैवे न्यसेत्।**
**पाद्यार्घ्याचमनीयगव्यदधिदुग्धं माक्षिकं क्वाथकं**
**दिक्कोणेषु बहिस्तदीशमनुभिस्तारेण शेषेष्वपः ॥ ९॥**

**ब्रह्मोष्णरश्म्यजकुबेरबसूंश्च वि[1]श्वान्**
**गन्धर्वकान् नि[2]र्ऋतिसुम्भजितौ पितॄंश्च।**
**श्रीवाक्सदक्षकविसोमसुरेश्वरार्की-**
**नाज्यादिभाज्ज्यभिदधत्यधिदैवतानि ॥ १०॥**

**ऋचः षोडश पुंसूक्तस्येदं विष्णुरपि क्रमात्।**
**स्नानमन्त्रास्तदीशान्ताः प्रोक्ताः स्नानक्रमं ब्रुवे ॥ ११॥**

**मानुषदिक्खण्डघ[3]टैर्ब्रह्मघटेनाथ मानुषविदिक्स्थैः।**
**दैविकदिक्कोणगतैः स्नपयेत् पर[4]मेष्ठिनः क्रमतः ॥ १२॥**

ब्रह्मण्यपरं सप्तदशद्रव्याभिषेकं तन्त्रसमुच्चये वैष्णवोक्तैः श्लोकैराह – आज्योष्णोदकेत्यादि।

**वज्रं[5] मौक्तिकवैडूर्यपद्मरागप्रवालकम्।**
**रत्नं दूर्वा च श्यामकं पद्मं क्रान्तिश्च पाद्यकम् ॥ १३॥**

**सिद्धार्थमक्षतं चैव कुशाग्रं तिलमेव च।**
**यवं गन्धं फलं पुष्पमर्घ्यमष्टाङ्गमुच्यते ॥ १४॥**

---

१. 'विद्वान्' ख., २. 'निकृतिसुम्भ' घ., ३. 'गतैः' च., ४. 'परमेष्ठिनं' घ.च., ५. 'वज्रमौक्तिक' ख.ग.च.छ., पाठः।

**कदलीनालिकेराम्रपनसामलकानि च।**
**डाडिमं च फलं प्रोक्तं भव्यबिल्वसमन्वितम् ।। १६।।**

**लोहं हिरण्यं रजतं ताम्रमप्यायसं त्रपु।**
**सहा निशा सदाभद्रा शिरीषं सूर्यवर्तिनी ।। १७।।**

**कुशाग्रं मार्जनं बोधिन्यग्रोधौदुम्बरद्विजैः।**
**बिल्ववैकङ्कतशमीखदिरैः क्वाथ ईरितः ।। १८।।**

तत्र रत्नादिसङ्घातद्रव्याण्याह – वज्रमौक्तिकेत्यादि।

**अन्तः शान्त्युदकं प्रदक्षिणतयेन्द्रात् पञ्चगव्यं पयो**
**दध्याज्यं मधुरत्नकं कुशजलं गन्धाम्बु बाह्यावृतौ।**
**तद्वत् क्षारगुलासवाज्यदधिदुग्धाच्छोदगर्भाभिधान्**
**सङ्कल्प्य द्युमणेर्दलस्थितघटेष्वापूरयेद् वार्यपि ।। १९।।**

**सावित्री शीतांशुरुद्रौ हुताशः**
**स्कन्दो वित्तेशश्च सप्तर्षयश्च।**
**इन्द्रश्च स्युर्देवता बाह्यसंस्थाः**
**ब्राह्मे सूर्यस्त्वम्बुधीष्वम्बुधीशः ।। २०।।**

द्युमणौ सूर्ये शैवोक्तं सप्तदशद्रव्याभिषेकं तन्त्रसमुच्चयोक्तश्लोकैरेवाह अन्तः शान्त्युदकमित्यादि।

**गव्ये स्वे पञ्चमन्त्रा निजनिजमनवो दुग्धदध्याज्यमाध्वी-**
**ष्वासत्येनाश्मतोये कुशमयसलिले स्याच्च देवस्य मन्त्रः।**
**गन्धद्वारेति गव्याम्बुनि सलिलनिधिष्वष्टसु स्युः समुद्र-**
**ज्येष्ठाद्या ब्रह्मकुम्भे मनुरथ दशताराह्वयः स्वो जिनार्णः ।।**
**२१।।**

ब्रह्मकुम्भे दशताराह्वो यः स्वो जिनार्णः दशप्रणवगायत्रीति प्रसिद्धो मनुः।

**मणिर्मुक्तामरतकमिन्द्रनीलं सवज्रकम्।**
**वैदुर्यं पुष्यगोमेदं रत्नं गन्धस्त्वजोदितः ॥ २२॥**

तत्र रत्नोदमाह – मणिर्मुक्तेति। तत्र गन्धोदकंब्रह्मोक्तमेव।

**हेम रत्नं सगन्धोदं शान्तिद्रव्यमुदीरितम् ॥ २३॥**

तत्र ब्रह्मकलशं सगन्धोदं हेमरत्नं च शान्तिद्रव्यमुदीरितम्।

**हेमरत्नाक्षतैः श्रीदे सगन्धैर्मध्यतः पुनः।**
**मूलेनान्तर्बहिश्चैतैर्दिग्विदिक्षु प्रपूरयेत् ॥ २४॥**

श्रीदे सप्तदशद्रव्यवीधिमाह – हेमेति। तत्र मध्यतः सगन्धैर्हेमरत्नाक्षतैर्मूलेन प्रपूरयेत्। पुनरेतैः पाद्याद्यैरन्तर्बहिश्च दिग्विदिक्षु प्रपूरयेत्।

**पाद्याचामावर्घ्यं**
**गव्यपयोदधिघृतानि मध्वन्तम्।**
**स्वर्णकुशतिलसकेरी-**
**क्षुफलनिशारत्नवारि बहिरपि च ॥ २५॥**

**अपनः शोशुचदष्टावापोहिष्ठ च नवेति सप्तदश।**
**मूलान्ता मन्त्राः स्युः पाद्यादिब्रह्मकलशनिष्ठानाम् ॥ २६॥**

पाद्यादिब्रह्मकलशनिष्ठानाम् अपनःशोशुचदित्यष्टावृचः आपोहिष्ठेत्यादिनव च ऋचः। एते सप्तदश प्रत्येकं मूलान्ता मन्त्राः स्युः।

**तिलं सिद्धार्थकं दूर्वा गिरिमृत् पाद्यमुच्यते।**
**लवङ्कजातीतक्कोलमाचामद्रव्यमीरितम् ॥ २७॥**

**अक्षतं तिलसिद्धार्थौ यवं तोयं पयो दधि।**
**कुशाग्रं चार्घ्यमुद्दिष्टं फलगन्धावजोदितौ ॥ २८॥**

**कदलीनालिकेराम्रपनसामलकानि च।**
**डाडिमं च फलं प्रोक्तं भव्यबिल्वसमन्वितम् ॥ २९॥**

**सेव्यर्त्यम्बुजटास्त्रायोमुरशीतैस्तु गन्धकम्।**
**ब्रह्मवत् स्नपनं कृष्णे स्वयं ब्राह्मे तु देवता ॥ ३०॥**

तदीयं सङ्घातद्रव्यमाह – तिलमित्यादि। फलगन्धौ ब्रह्मोदिता एवा कृष्णे सप्तदशद्रव्यस्नानं ब्रह्मवद् आज्योष्णोदकरत्नानीत्याद्युक्तब्रह्मवत्। तत्र ब्राह्मे कृष्णः स्वयमेव देवता, तत्र मन्त्राः स्वमूलान्ताः स्युः। अथान्यत् पञ्चविंशतिद्रव्यस्नानं ब्रुवे।

**स्वमूलान्ताश्च मन्त्राः स्युरथान्यत् स्नपनं ब्रुवे।**
**ब्राह्मे स्याच्चन्दनेन्द्वम्भश्चतुर्विंशतिका बहिः ॥ ३१॥**

तदाह – ब्राह्मे स्यादिति। ब्राह्मे घटे चन्दनेन्द्वम्भः चन्दनकर्पूरसहितं जलं, बहिश्चतुर्विंशतिकं द्रव्यं ब्राह्मादारभ्य दैविकान्तं दिग्विदिक्ष्वेकैकं प्रपूरयेत्।

**बाह्यादारभ्य दैवान्तं दिग्विदिक्षु प्रपूरयेत्।**
**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ ३२॥**

**न्यग्रोधौदुम्बुराश्वत्थप्लक्षाणां त्वग्रसं पृथक्।**
**वेद्या नद्या मृदः क्षेत्रात् पर्वतात् सूकरेभतः ॥ ३३॥**

**सिद्धार्थयवगोधूमशाली माणिक्यमेव च।**
**रव्यर्णेनेन्द्रनीलं च वज्रं मरतकं क्रमात् ॥ ३४॥**

**मानुषे पौरुषस्यर्ग्भिर्द्वाभ्यां द्वाभ्यां तु दैविके।**
**कृत्स्नेन ब्रह्मकलशे स्नपनं मूलसंयुतम् ॥ ३५॥**

**सूर्यवत् स्नपनं ब्राह्मे देवता तु सरस्वती।**
**नापरोऽस्ति विशेषोऽत्र सरस्वत्यां विधीयते ।। ३६ ।।**

गोमूत्रादिपञ्चगव्यानि पुनः कुशोदकं पुनः कषायचतुष्टयं पुनः षण्मृदः, पुनश्चत्वारि बीजानि, पुनश्चत्वारि रत्नानि एतानीं चतुर्विंशतिद्रव्याणि द्वादशाक्षरेण पूरयेत्। मानुषे पौरुषसूक्तस्य षोडशग्भिर्दैविके तस्य द्वाभ्यां द्वाभ्यामृग्भ्यां ब्राह्मे मूलसहितेन कृत्स्नेन सूक्तेन स्नपनं स्यात्। सरस्वत्यां सप्तदशद्रव्यस्नाने सूर्यवदेव स्नपनम्। ब्राह्मे तु कलशे सरस्वती स्वयमेव देवता अपरो विशेषो नास्ति।

**ब्राह्मे लक्ष्म्यम्बु लक्ष्म्यामथ सुरविषये पाद्यमाचाममर्घ्यं**
**क्षीरं दध्याज्यमाध्वीमणिमपि मतिमान् पूरयेद् दिग्विदिक्षु।**
**बाह्येऽपि क्वाथगव्ये फलकुशकनकं केरयावे तिलाम्भो-**
**थेक्षूदं शालि पद्मोत्पलसरजनिमुक्तामृदः सक्तुकं च ।। ३७ ।।**

लक्ष्म्यां पञ्चविंशतिद्रव्यविधिमाह – ब्राह्मे लक्ष्म्याम्बिति ब्राह्मे कलशे लक्ष्मीसहितमम्बु। लक्ष्मीः श्रीताली। अथ सुरविषये पाद्याद्यष्ट, ब्राह्मे क्वाथादि षोडश च दिग्विदिक्ष्वन्तरालेषु पूरयेत्।

**अपनः शोशुचदष्टौ हिरण्यवर्णां च पञ्चदशा सुमित्रा नः।**
**मूलान्वितास्तु पाद्या-**
**द्यणवो ब्राह्मे मनुश्च सप्तदशकमिदम् ।। ३८ ।।**

स्नानमन्त्रानाह – अपन इति। तस्य सूक्तस्याष्टावृचः श्रीसूक्तस्य पञ्चदश च सुमित्रा न इति। एते मूलान्वितास्तु पाद्याद्यणवः ब्राह्मे इदं सप्तदशकं हिरण्यवर्णामित्यादि सप्तदशकमित्यर्थः।

**पाद्यार्घ्याद्यखिलं द्रव्यं रमायां वैष्णवं भवेत्।**
**गौर्यां मध्वादिपाद्याद्यैः पूरणं स्नपनं तथा ।। ३९ ।।**

रमायां पाद्यार्घ्याद्यखिलं सङ्घातद्रव्यं वैष्णवोक्तमेव भवेत्। गौर्यां पाद्याद्यैः सप्तदशद्रव्यैर्मध्यादिपूरणं तथा स्नपनं च प्रादक्षिण्येन भवेत्।

**पाद्यमाचमनं चार्घ्यं यवोदं गव्यसर्पिषी।**
**दधि क्षीरं तथोष्णोदं मध्यादीशावधि क्रमात् ।। ४० ।।**

**फलं सक्तु तिलं गन्धं हिरण्यं रत्नवारि च।**
**प्रागादीशानपर्यन्तं मार्जनं परिमार्जनम् ।। ४१ ।।**

**मन्त्रास्त्वेषामिदं विष्णुर्ब्रह्मजज्ञानमित्यपि।**
**त्रियम्बकं च कद्रुद्रायाग्निमीले पुरोहितम् ।। ४२ ।।**

तानि द्रव्याणि क्रमादाह – पाद्यमिति।

**घृतं मिमि दधिक्राव्ण आप्यायस्व समेतु ते।**
**उपत्वाग्ने मानस्तोके तथा तत्सवितुः पुनः ।। ४३ ।।**

**यत्ते यमं गन्धद्वारां हिरण्यादिद्वयं क्रमात्।**
**स्वमूलान्ता इमे योज्या अग्निर्मूर्धा कनिक्रदत् ।। ४४ ।।**

तत्र स्नानमन्त्रानाह – मन्त्रास्त्वेषामिति। घृतं मिमि दधिक्राव्ण इति। घृतं मिमि दधिक्राव्ण इति च। एते स्वमूलान्ता योज्याः।

**दूर्वाश्यामाकसिद्धार्थं पाद्यं तक्कोलजातियुक्।**
**कर्पूरमाचमं प्रोक्तं गन्धपुष्पाक्षतोदकैः ।। ४५ ।।**

**कुशाग्रतिलसिद्धार्थक्षीरैरष्टाङ्गमर्घ्यकम्।**
**कविमांसीन्दुचोरास्रचन्दनागरुरोचनैः ।। ४६ ।।**

**गन्धोदकमथो रत्नं सूर्योक्तं फलमुच्यते।**
**कदली पनसं चाम्रं बिल्वमामलकं ततः ।। ४७ ।।**

**बीजपूरं च भव्यं च नालिकेरं फलोदकम्।**
**स्थलाब्जं गोक्षुरा भद्रा वरीव्याघ्रपदी निशा ॥ ४८॥**

**षडङ्गं मार्जनं प्रोक्तं वल्मीकाद्रितटाकमृत्।**
**वृषकूलद्वयोत्था च परिमार्जनमीरितम् ॥ ४९॥**

सङ्घातद्रव्याण्याह – दूर्वेत्यादि। रत्नोदकं सूर्योक्तमेव। कदल्यादिफलोदकं, स्थलाब्जादिमार्जनं स्थलाब्जं (കരത്താമര), गोक्षुरा (ഞെരിഞ്ഞിൽ), भद्रा (ചെറൂള), वरी (ശതാവരി), व्याघ्रपदी (പുലിയടി), निशा (മഞ്ഞൾ), एतन्मार्जनं वल्मीकादितटाकोत्था वृषश्रृङ्गोत्था नदीकूल द्वयोत्था च मृदः परिमार्जनमीरितम्।

**ज्येष्ठायां तैलाज्यतिलदुग्धानि दधि सक्तुकम्।**
**लाजगुग्गुलुधान्यानि ब्राह्मे दिक्षु विदिक्ष्वपि ॥ ५०॥**

**पाद्यार्घ्याचमनीयानि मार्जनं च गुलं तथा।**
**मधु गन्धं फलं चैव मानुषे दिग्विदिक्ष्वपि ॥ ५१॥**

**ब्राह्मे स्यान्मूलमन्येषु द्व्यष्ट कृष्णादयोऽभिधाः।**
**अधिवासोदिताः पाद्याद्यमखिलं गिरिजोदितम् ॥ ५२॥**

ज्येष्ठायां सप्तदशद्रव्यविधिमाह – ज्येष्ठायां तैलाज्येति। तत्र ब्राह्मे दिग्विदिक्षु च तैलादि नव। मानुषे दिग्विदिक्षु पाद्यादीन्यष्टौ। ब्राह्मे पूरणे स्थाने च मूलमन्त्रः। अन्येषु कृष्णादयः षोडश। नाममन्त्राः। पाद्यादिसंघात-द्रव्यमखिलं गिरिजाया उदीरितमेव।

**कृष्णा विघ्ना च मूका च जम्भनी स्तम्भनी क्रमात्।**
**महाधिया महाधोरा काली च परमाङ्कुशा ॥ ५३॥**



**महामन्दी च मलिनी भूतिघ्ना दुर्मुखी पुनः।**

**मन्दा शुभाऽशुभा चेमा ज्येष्ठायाः पूर्वतः क्रमात् ।। ५४।।**

**पाद्यादीनीह चत्वारि तैलं दैविकमष्टकम्।**
**चत्वारि च गुलादीनि कथितः स्नपनक्रमः ।। ५५।।**

पूर्वादि पाद्यादि चत्वारि द्रव्याणि, पुनर्ब्रह्मकलशगततैलं, पुनर्दैविकमष्टकं, पुनर्गुलादीनि चत्वारीति स्नपनक्रमः कथितः।

**ब्राह्मेऽष्टगन्धमणिवार्यथ दैव एषा-**
**मेकैकमर्पयतु दिग्विदिशासु युग्मम्।**
**मृत्क्वाथकौषधिसुमानि सतैलगव्या-**
**ज्यान्यैक्षवं च बहिरुक्तदिशासु काल्याम् ।। ५६।।**

काळ्यां सप्तदशद्रव्यं पञ्चविंशतिद्रव्यं च क्रमेणाह – ब्राह्मेऽष्टगन्धेत्यादि। तत्र सप्तदशद्रव्ये ब्राह्मेऽष्टगान्धमणिवारि। अथ दैवे दिग्विदिशासु एषां गन्धानां रत्नानां चैकैकमिति द्विविधानां युग्ममर्पयतु। बहिरुक्तदिशासु दिग्विदिक्षु मृत्क्वाथकौषधिसुमानि सुमं कुसुमोदकं सतैलगव्यान्यानि ऐक्षवञ्चार्पयतु।

**पाद्यार्घ्यामाचमनगव्यघृतानि माध्वीं**
**गौलं सतैलमथ मृत्क्वथितौषधींश्च।**
**पुष्पं फलं मनुजदिग्विदिगन्तरेषु**
**तीर्थं सकेर्युदकलोहजलं न्यसेद् वा ।। ५७।।**

पञ्चविंशतिद्रव्ये दैविकमुक्तवदष्टगन्धैरष्टरत्नैश्च पूरयित्वा मनुज दिग्विदिगन्तरेषु पाद्यार्घ्यादीनि षोडशद्रव्याणि न्यसेत्। वेदिद्रव्यपञ्चत्रिंशत चेदेवमित्यर्थः।

**ब्राह्मे मूलं जनन्यः स्युः दैविके मानुषेऽष्टसु।**
**भैरवा अन्तरालेषु वशिन्याद्यास्तदन्वये ।। ५८।।**

ब्राह्मे मूलमन्त्रः, दैविकं मातरः, मानुषे असिताङ्कादिभैरवाः। ततन्वयेऽन्तरालयोगे वशिन्याद्याश्च मन्त्राः।

**तैरेव मन्त्रैः स्नपनं कर्तव्यं पूरणक्रमात्।**
**सर्वान्ते ब्रह्मकलशेनाभिषिञ्चेत् स्वमूलतः ।। ५९ ।।**

तैरेव मन्त्रैः पूरणक्रमात् स्नपनं कर्तव्यम् ब्रह्मकलशेन तु सर्वकलशान्ते स्वमूलतोऽभिषिञ्चेत्।

**इन्दुचन्दनकाश्मीररोचनाकविमांसिकाः।**
**कच्चूरागरुसंयुक्ताः काल्यां गन्धाष्टकं भवेत् ।। ६० ।।**

सङ्घातद्रव्याणि क्रमेण पठति – इन्दुचन्दनमित्यादि।

**वज्रं मौक्तिकमाणिक्यपुष्यवैदुर्यनीलकम्।**
**गोमेदकं मरतकमेतद् रत्नाष्टकं भवेत् ।। ६१ ।।**
**वल्मीकोक्षापगासिन्ध्वाखुपोत्रिखलवेदिजाः।**
**मृदः क्वाथः शिरीषाम्रशमीपर्णपयोद्रुमैः ।। ६२ ।।**

शिरीषाम्रशमीपर्णेत्यत्र पर्ण इति पलाशत्वक्।

**सहा च सहदेवी च सदाभद्रा कृताञ्जलिः।**
**श्रीदेवी विष्णुपर्णी च दूर्व्यैन्द्र्यौषधयः स्मृताः ।। ६३ ।।**
**जातिस्त्रिमल्लिकाकुन्दनन्द्यावर्त्याब्जचम्पकैः।**
**यूथिकासहितं पुष्पमथवा बकुलान्वितम् ।। ६४ ।।**
**पाद्यं दूर्वा विष्णुपर्णी श्यामाकं पद्ममित्यदः।**
**सिद्धार्थमक्षतं चैव कुशाग्रं तिलमेव च ।। ६५ ।।**
**यवं गन्धं फलं पुष्पमर्घ्यमष्टाङ्गमुच्यते।**
**लवङ्कजातितक्कोलं भवेदाचमनीयकम् ।। ६६ ।।**

**पनसं डाडिमं भव्यं बीजपूरं च कादलम्।**
**बिल्वाम्रपूगजातानि यथालाभं फलोदकम् ॥ ६७॥**

**नदीसेतुतटाकाब्धिकूपजं तीर्थवारि च।**
**सुवर्णं रजतं ताम्रमायसं त्रपुसीसकम् ॥ ६८॥**

**कांस्यं च पित्तलं चैव लोहोदकमुदीरितम्।**
**मध्ये गन्धजलं व्यस्तपञ्चगव्यानि मृञ्जलम् ॥ ६९॥**

**मातृष्वक्षतकं क्वाथं दिग्विदिक्षु प्रपूरयेत्।**
**ब्राह्मे निजनिजं मूलं दैविके यजनक्रमात् ॥ ७०॥**

**स्युः स्वेतराणवस्तासां स्नपनं पूरणक्रमात्।**
**मधूकाश्वत्थपनसशिरीषाम्रवटोद्भवैः ॥ ७१॥**

**पलाशोदुम्बरयुतैः मातृषु स्यात् कषायकम्।**
**वल्मीकचत्वरगिरिनदीतीर्थाग्निवेश्मजाः ॥ ७२॥**

**वृषकुञ्जरशृङ्गोत्था मृदो गन्धास्त्वजोदिताः।**
**क्षेत्रपालेऽभिषेकस्तु सूर्यवत् कथितो बुधैः ॥ ७३॥**

**मालेयागरुकर्पूरकुष्ठकुङ्कुमवारिभिः।**
**मुरोशीरेन्दुभिः कृष्णे दिग्विदिक्षु प्रपूरयेत् ॥ ७४॥**

मातृषु नवद्रव्यविधिमाह – मध्ये गन्धजलमिति। तासां ब्राह्मो कलशे निजनिजं मूलमेव मन्त्रः। बाह्ये यजनक्रमात् स्वेतराणवः, स्वस्मादितरा एव मन्त्राः स्युः। पूरणक्रमादेव स्नपनं च स्यात्। क्षेत्रपाले बुधैः सप्तदशद्रव्यैः सूर्यवदेवाभिषेकः कथितः। कृष्णे नव द्रव्यपक्षे मध्ये दिग्विदिक्षु च मालेयादिभिः प्रपूरयेत् ॥ ६९–७४ ॥



**लक्ष्म्यां प्रागुक्तलक्ष्म्याद्यैर्नवभिर्वाभिषेचनम्।**

**ब्रह्मादिष्वपि रत्नाद्यैर्नवकं क्वचिदीरितम् ।। ७५ ।।**

लक्ष्म्यां ब्रह्मादिषु च नवद्रव्यपक्षं स्मारयति – लक्ष्म्यामित्यादि। सूर्ये चण्ड्यामित्यादि।

**पाद्यं मध्येऽथाचमनीयार्घ्यपयोद-**
**ध्याज्यक्षौद्रं रत्नकषायं सुरदिक्षु।**
**स्युर्वादित्ये तिलकुशगव्यं फलशालि**
**मनुजाशास्वथ यवकेऽर्यम्बैक्षवमपि च ।। ७६ ।।**

सूर्ये पूर्वोक्तसप्तदशद्रव्याद्विकल्पेन सप्तदशद्रव्यान्तरमाह – पाद्यं मध्ये इति। पाद्यं मध्ये सुरदिक्ष्वाचमनीया(दि)। मनुजाशासु तिलादि च। इत्यादित्ये द्रव्याणि स्युर्वा।

**स्यात् पञ्चविंशतिर्द्रव्यं वैष्णवं द्रुहिणादिषु।**
**शैवं सूर्यादिषु हरेः स्यात् सप्तदशकं श्रियि ।। ७७ ।।**

**कर्तव्यमन्तरास्नानं धनदे पञ्चवारुणैः।**
**रमायां ब्रह्मसूक्तेनाप्यन्तरास्नानमाचरेत् ।। ७८ ।।**

द्रुहिणादिषु पञ्चविंशातिद्रव्यं चेद् वैष्णवमेव। पदक्लृप्तिश्च स्यात्। सूर्यादिषु शैवमेव। श्रियि सप्तदशद्रव्यपक्षे हरेरुक्तमेव स्यात्।

अन्तरा स्नानमन्त्रानाह — कर्तव्यमिति।

**गौर्यो शुद्धोदकलशैः श्रीसूक्तेनाभिषिञ्चतु।**
**पावमानाणुना चापि स्नानमन्त्रा इतीरिताः ।। ७९ ।।**

गौर्यां शुद्धोदकलशस्नाने मन्त्रमाह – गौर्यामिति।

**कृत्वाधिवासहोमं सम्पातस्पर्शनं विधाय गुरुः।**
**प्रागुक्तवदधिवासं कृत्वा विज्ञापनं ततः कुर्यात् ।। ८० ।।**

पुनरधिवासहोमं यथोक्तक्रमेण कृत्वा संपातपातादिकं कुर्यादित्याह- कृत्वाधिवासेति।

**प्रातस्तुर्यदिने स्वसाम्प्रतिककृत् सम्पूज्य सर्वात्मकं**
**तारेणाथ पृथक् स्वतत्त्ववपुषं कृत्वार्घ्यहस्तोऽग्रतः।**
**कृत्वा मूलमनुं प्रजप्य मरुता द्वारं विदार्याभिग-**
**म्यान्तर्दर्शितमङ्गलोऽर्घ्यसलिलं देवाय दद्याद् गुरुः ।। ८१।।**

प्रतिष्ठायाश्चतुर्थदिवसे करणीयं कर्माह – प्रातरिति। (लक्ष्म्यामित्यादि) तुर्यदिने स्वसाम्प्रतिककृत् स्वस्य सन्ध्योपासनादिकं सकलीकरणादिकं च कृत्वाथ तारेण सर्वात्मकं कलशेष्वेकरूपं तं सम्पूज्य पुनः पृथक् स्वतत्त्ववपुषं तत्त्वमन्त्रैः पृथक्करणं कृत्वा प्रासादस्याग्रतः स्वयमर्घ्यकर स्थित्वा मूलमनुं प्रजप्य मरुता वायुबीजेन द्वारं विदार्य अन्तराभिगम्य दर्शितमङ्गलो भूत्वा गुरुरर्घ्यसलिलं देवाय दद्यात्।

**दीपिका दर्पणं हेम धान्यपात्रं घृतं दधि।**
**पुस्ता मङ्गलपात्री च लौकिकं मङ्गलाष्टकम् ।। ८२।।**

**निर्माल्यमस्त्रेणापास्य तैलेनाङ्क्त्वा विशोध्य च।**
**शिरीषचूर्णैरभिषिच्यार्चयेत् पायसान्वितम् ।। ८३।।**

**पीठमिष्ट्वा समावाह्य पाद्यमर्घ्यं समर्प्य च।**
**अस्त्रेण कौतुकं च्छित्त्वा चाचामाद्यपि दीयताम् ।। ८४।।**

**तत्त्वान्तकलशैः सिक्त्वा प्रत्येकं पूजयेद् विभुम्।**
**पीठमिष्ट्वा समावाह्य स्नापयेत् सकलीकृतम् ।। ८५।।**

**यथोक्तरीत्या स्नपनं नीराज्य प्रतिखण्डतः।**
**निवेदनं च कार्यं स्यादन्ते सम्यक् प्रपूजयेत् ।। ८६।।**

ततस्तत्कर्मशेषं क्रमेणाह – निर्माल्यमस्त्रेणेति। ततो निष्कृतौ वक्ष्यमाणक्रमेण तत्त्वहोमान्तैर्होमकलशैः सिक्त्वा प्रत्येकं विभुं पूजयेत्। पुनर्यथोक्तरीत्या कलशस्नानं कुर्यादित्याह – पीठमिष्टेति।

इति शेषसमुच्चये चतुर्थः पटलः।

# अथ पञ्चमः पटलः।

**अथ निशि गुरुस्तस्यां धीमान् कृताङ्कुररोपणो**
**ध्वजमपि निजं सम्पूज्योत्थाप्य वा यदि नास्ति सः।**
**पुनरपचितैर्वाद्यैः पाणीन् प्रवर्तयतां क्रमा-**
**दयमजसवित्रादिष्वारम्भ उत्सवकर्मणः ।। १ ।।**

अथोत्सवविधानमाह - अथ निशीति। अथ गुरुस्तस्यामभिषेकदिवसनिश्येव प्राग्वत् कृताङ्कुररोपणो भूत्वा निजं ध्वजं सम्पूज्य स ध्वजो नास्ति यदि चतुर्थदिवसादर्वाङ् न स्थापितश्चेत् तदैवोत्थाप्य सम्पूज्य पुनरपचितैः पूजितैर्वाद्यैः पाणीन् शब्दविशेषान् प्रवर्तयताम्। अजसवित्रादिषु देवेषूत्सवकर्मणोऽयमेवारम्भः स्यात्। उत्थाप्य वेति। वाशब्द उत्सवारम्भस्य पक्षबहुत्वद्योतकः।

**तस्यां निशायां परिपूज्य देवं**
**तं तन्त्रविद् भूतबलिं करोतु।**
**दिवा च नक्तं च परेष्वहस्सु**
**देवस्य पूजां सवनत्रयेऽपि ।। २ ।।**

तद्रात्रिमेवारभ्य पूजाबल्यादि कुर्यादित्याहः – तस्यामिति। तत्तन्त्रवित् तस्य तस्य देवस्य तन्त्रागमज्ञो गुरुः सायंप्रातर्बलिं सवनत्रये पूजां च कुर्यादित्यर्थः।

**द्वारि चण्डं प्रचण्डं च हंसं ब्रह्मणि मण्डपे।**
**पृष्ठेऽनन्तं च विघ्नेशौ दक्षिणद्वारि पूजयेत् ।। ३ ।।**



अथ ब्रह्मणि वैष्णवोक्तमेव भूतबलिं सूत्रयति – द्वारि चण्डमित्यादि।

**दिक्पान् दश ततो मातॄः शास्तारं महिषद्विषम्।**
**स्कन्दं च विष्वक्सेनं चेत्येवमन्तर्बलिः स्मृतः ।। ४।।**

**चक्रपाणिं शङ्खपाणिं गोपुरद्वार्यथो बहिः।**
**कुमुदादींश्च पञ्चाशद्गणांश्च परिपूजयेत् ।। ५।।**

**कुमुदादीन् महापीठेऽष्टदिक्षु बलमूर्ध्वतः।**
**देवग्रहादीन् सर्वाणि भूतानि क्षेत्रपालकम् ।। ६।।**

**बहिर्बलिरिति प्रोक्तः सर्वं तन्त्रसमुच्चये।**
**बलिक्लृप्तिः समुद्दिष्टो ब्रह्मण्येवं बलिक्रमः ।। ७।।**

सर्वाणि भूतानीति क्षेत्रपालबलेः पूर्वम् "ओं सर्वेभ्योदकेभ्यो नम" इत्यनेन प्रदक्षिणबलिं कुर्यादित्यर्थः। सर्वा बलिक्लृप्तिस्तन्त्रसमुच्चये समुद्दिष्टैव। एवं ब्रह्मणि बलिक्रमः स्यात्।

**दण्डी च पिङ्गलो द्वारि दक्षिणे विघ्नशङ्करौ।**
**लोकेशस्थानगास्त्वष्टौ ग्रहाः सोमादयः क्रमात् ।। ८।।**

अथ सूर्ये भूतबलिक्रममाह – दण्डी चेत्यादि। लोकेशस्थानगाः लोकपालानां स्थानेऽष्टौ ग्रहाः सोमादयः पूजाक्रमादित्यर्थः।

**मात्रार्यदुर्गाग्निभूवस्तेजश्चण्डोऽथ मण्डपे।**
**अरुणः सप्त तुरगा गायत्र्याद्या दिवाकरे ।। ९।।**

अथ मात्रादयः। तेजश्चण्डो निर्माल्यधारी। अथ मण्डपेऽरुणः गायत्र्याद्याः सप्त तुरगाश्च।

**गायत्र्युष्णिगनुष्टुप् बृहती पङ्क्तिरेव च।**
**त्रिष्टुप् च जगती चैव सप्त च्छन्दांस्यनुक्रमात् ।। १०।।**



गायत्र्युष्णिगानुष्टुब्बृहतीपङ्क्तिस्त्रिष्टुब्जगतस्तत्रैव पूज्या इत्यर्थः। सर्वाणि

भूतानीति क्षेत्रपालबलेः पूर्वं सर्वेभ्यो भूतेभ्यो नम इत्यनेन क्षिप्रप्रदक्षिणबलिं कुर्यादित्यर्थः।

**गोपुरान्तः पूर्वपक्षापरपक्षौ बहिः पुनः।**
**स्तो दक्षिणायनं द्वास्थावुत्तरायणमेव च ॥ ११ ॥**

गोपुरान्तः पूर्वपक्षापरपक्षौ द्वाःस्थौ बहिः पुनर्दक्षिणायनमुत्तरायणं च।

**मेषाद्या द्वादश स्वस्थानेषु मध्वादिभिः सह।**
**मधुमाधवाशुक्लाश्च शुचिर्मासा नभस्तथा ॥ १२ ॥**

पुनः स्वस्वस्थानेषु मध्वादिभिः सह मेषाद्या द्वादश राशयः स्यु। मध्वादिमासान् पठति – मधुमाधवेति।

**नभस्येषोर्जाश्च सहतपौ स्यातां स्यसंयुतौ।**
**बहिरिन्द्रादयो दिक्षु स्युस्तत्पारिषदास्ततः ॥ १३ ॥**

सहतपौ स्यान्तसंयुतौ स्यान्तेन स्वस्वशब्देन संयुतौ सहः सहस्यस्तपस्तपस्यश्चेत्यर्थः। ओं मेषाय मध्वात्मने सूर्यपार्षदे नम इत्यादयो मन्त्राः। तद्बहिर्दशदिक्ष्विन्द्रादयः ततस्तत्पार्षदाः।

**गन्धर्वासुरपितरो रक्षो मरुतोऽथ यक्षभूतानि।**
**ऋषयस्त्वष्टगणा बलिपीठस्याष्टसु च दिक्षु यष्टव्याः ॥ १४ ॥**

अथ बलिपीठस्याष्टदिक्षु गणान्ता गन्धर्वादयो यष्टव्याः। गन्धर्वगणेभ्यो नम इत्यादयो मन्त्राः।

**बलिपीठोपरि रविसेनो देवाग्रहादयः।**
**यथोक्तं क्षेत्रपालान्ता इति सूर्ये बलिक्रमः ॥ १५ ॥**

बलिपीठोपरि रविसेनः पुनर्यथोक्तं देवग्रहादय इति सूर्ये बलिक्रमः स्यात्।

**धनदादिषु यो भेदः स इदानीं निगद्यते।**
**हिरण्याक्षविरूपाक्षौ द्वार्यथो मण्डपे गजः ॥ १६॥**

ततो धनदादीनां भेदमाह – धनदादिष्विति। द्वारि द्वाःस्थवित्यर्थः। अथो मण्डपे गजः स्यात्।

**विघ्नाद्याः शुभ्रपर्यन्ता धनदेऽन्तर्बलिः क्रमात्।**
**शङ्खपुष्पनिधी पश्चात् गोपुरद्वारि पूजयेत् ॥ १७॥**

पुनर्विघ्नदक्षिणामूर्त्याद्याः शुभ्रो निर्माल्यधारी गोपुराद् बहिरष्टौ निधयः तद्बहिस्तत्पार्षदाश्च।

**निधयोऽष्टौ बहिस्तत्पारिषदाश्च ततो बहिः।**
**निधिः शङ्खो महापद्मः कुन्दश्च कुमुदस्ततः ॥ १८॥**

निध्यष्टकं पठति – निधिरिति। निधिः शङ्खः शङ्खनिधिरित्यर्थः। तथा महापद्मादिषु प्रत्येकं निधिशब्दः प्रयोज्यः।

**मकरः कच्छपो नीलः पद्मोऽष्टनिधयः क्रमात्।**
**महापीठेऽष्टदिक्ष्वष्टौ माणिभद्रादयोऽथ च ॥ १९॥**

महापीठस्य परितो माणिभद्रादयः पूजायामुक्ताः स्युः।

**महायक्ष उपर्यर्च्यः समं देवग्रहादिकम्।**
**कृष्णेऽपि ब्रह्मवत् सर्वं गरुडस्त्विह मण्डपे ॥ २०॥**

पीठोपरि महायक्षोऽर्च्यः देवग्रहादिकमत्रापि समानम्। कृष्णे सर्वमपि ब्रह्मवत्। इह मण्डपे गरुड एवेति विशेषः।

**मेधाप्रज्ञे प्रभाविद्ये धीधृति गिरि च क्रमात्।**
**स्मृतिबुद्धी च यष्टव्ये द्वाःस्थे द्वारि चतुष्टये ॥ २१॥**

गिरि सरस्वत्यां क्रमाद् मेधाप्रज्ञाद्ये द्वे द्वे द्वाःस्थे चतसृषु दिक्षु। द्वारि चतुष्टये स्युः।

**दिक्पा हंसोऽथ मात्राद्या मतिरित्यान्तरो बलिः।**
**कृतिश्च प्रतिभा च द्वे गोपुरद्वार्यथो बहिः ।। २२।।**

**दिग्गजास्तत्पारिषदाश्चावृतिद्वितयं क्रमात्।**
**ऐरावतः पुण्डरीकः कुमुदोऽञ्जनवामनौ ।। २३।।**

**पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः।**
**क्रत्वाद्यष्टौ महापीठे रोचमानस्तदूर्ध्वतः ।। २४।।**

**क्रतुर्दक्षः सुवः स्तव्यः कालः कामो धृतिस्तथा।**
**कुरुमानष्ट दिक्ष्वेते मधुमान् कुमुदे स्थितः।। २५।।**

पुनर्विघ्नशिवौ पुनर्दिक्पाः पुनर्मण्डपे हंसः। अथ मन्त्राद्याः मतिर्निर्माल्य-धारिणी कृतिः प्रतिभा च गोपुरद्वाःस्थे बहिरष्टौ दिग्गजाः। तद्बहिस्तत्पार्षदाश्च। दिग्गजान् पठति – ऐरावत इति। महापीठे परितः क्रत्वादयोऽष्टौ कुमुदे मधुमान् बलिपीठोर्ध्वभागे रोचमानश्च।

**देवग्रहादि तुल्यं स्यादिति सारस्वतो बलिः।**
**लक्ष्म्यां गङ्गायमुने**
**द्वारि ततश्चाग्रमण्डपे गरुडः।**
**विघ्नाद्या धृत्यन्ताः**
**शङ्खनिधिर्गोपुरेऽथ पद्मनिधिः ।। २६।।**

**पद्मा च पद्महस्ता च पद्माक्षी कमलालया।**
**इन्दिरा विष्णुदयिता रमा सागरसम्भवा ।। २७।।**

लक्ष्म्यां गङ्गायमुने द्वाःस्थे घृत्यन्ता इति। घृतिर्निर्माल्यधारिणी बहिः

पद्माद्या अष्टौ।

**तद्बहिस्तत्पारिषदाः महापीठे बलिस्ततः।**
**रतिः प्रीतिस्तथा कीर्तिः शान्तिः पुष्टिः क्रमादधः ।। २८।।**

**सन्तुष्टिरुन्नतिः कान्तिर्महालक्ष्मीरुपर्यपि।**
**ततो देवग्रहादिः स्यादिति लक्ष्म्यां बलिक्रमः ।। २९।।**

तद्बहिस्तत्पारिषदाः। महापीठेऽधः परितो रत्याद्याः महालक्ष्मीरुपरि ततो देवग्रहादिः स्यात्।

**द्वारि प्लावनिमोदिन्यो पार्वत्यामृषभोऽग्रतः।**
**विघ्नाद्याः सुभगान्ताश्च जया च विजया पुरः ।। ३०।।**

पार्वत्यां प्लाविनी मोदिनी द्वाःस्थे। मण्डपे ऋषभः विघ्न शिवाद्याः सुभगान्ताः सुभगा निर्माल्यधारिणी। पुरः पुरोगतगोपुरे जयाविजये।

**कुन्दी कुमुदिनी बाह्ये विद्यामाली विभूषणी।**
**कलुषी घोषणी चैव करवीराक्षिरेवती ।। ३१।।**

बाह्ये कुन्द्याद्यास्तद्बाह्ये तत्पारिषदाः।

**स्युस्तत्परिषदा बाह्ये कुन्द्याद्या एव पीठगाः।**
**मध्ये सर्वेश्वरी तुल्या गौर्यां देवग्रहादयः ।। ३२।।**

पीठगा अपि कुन्द्याद्या एव। पीठमध्ये सर्वेश्वरी। देवग्रहादयः तुल्याः।

**चण्डिनीं चण्डनादां च गोपुरद्वारि पूजयेत्।**
**उलूखलं मण्डपेऽथ विघ्नाद्याश्चण्डदास्यपि ।। ३३।।**

**चण्डनादां चण्डघोषां गोपुरद्वार्यथो बहिः।**
**ज्येष्ठी कली च तत्पत्नी मूलादिहृदया ततः ।। ३४।।**

**कुम्भी च मूलकेशी च कृष्णाऽथो कृष्णपिङ्गला।**
**ततश्च तत्पारिषदा ज्येष्ठ्याद्या एव पीठगाः ।। ३५।।**

ज्येष्ठाया द्वारी चण्डिनीचण्डनादे। मण्डप उलूखलं चण्डदासी निर्माल्यधारिणी। गोपुरद्वारी चण्डनादां चण्डघोषां च पूजयेत्। तद्बहिर्ज्येष्ठ-द्यास्तत्पत्नी कलिपत्नी मूलादिहृदया मूलहृदया ततस्तत्पारिषदाः। पीठगा अपि ज्येष्ठाद्या एवं।

**मध्ये कलिस्ततः प्रोक्तः समोऽग्र्यायामिति क्रमः।**
**सुन्दरी सुमुखी काल्यां विरूपा विमला द्विशः ।। ३६।।**

मध्ये कलिश्च। ततो देवग्रहादिः सम एव। काळ्यां चतुर्द्वारेषु द्विशः सुन्दरीसुमुख्यादयः एता द्वारपालिका मूलाद्यष्टार्णसंयुक्ताः मुलमन्त्रस्यादिभुता-नामष्टाक्षराणामेकैकेन युक्ताः।

**अन्तकी वन्दनी द्वार्षु पुरन्दरी पुष्पमर्दिनी।**
**मूलाद्यष्टार्णसंयुक्ता एताः स्युर्द्वारपालिकाः ।। ३७।।**

**मण्डपे वाहनं त्वग्रे पृष्ठे स्यादासनं ततः।**
**हुं सर्वशक्तिरूपिण्यै वैताल्यै नम इत्यपि ।। ३८।।**

**प्रेतासनाय हुं फट् स्वाहेति ब्रह्मादिपूर्वकः।**
**विघ्नाद्याः शेषिकाथाग्रे जया च विजया पुरे ।। ३९।।**

**क्षेत्रपाला बहिस्तत्पारिषदा दशदिक्ष्वपि।**
**हेतुकस्त्रिपुरान्तश्च साग्निवेतालजिह्वकौ ।। ४०।।**

**कालाक्षश्च करालश्चाथैकपाद् भीमरूपकः।**
**अलोहश्चाष्टकोशश्च क्षेत्रपाला दश क्रमात् ।। ४१।।**

**जयाद्या बलिपीठेऽधः सर्वेश्वर्युपरि क्रमात्।**

**जया च विजया पश्चादजिता चापराजिता ।। ४२ ।।**

**नित्या विलासिनी दोग्ध्री चाघोरा मङ्गला क्रमात्।**
**मङ्गला स्यात् कुमुदके समा देवग्रहादयः ।। ४३ ।।**

**सुन्दर्याद्या द्विशो द्वाःस्था विघ्नेशो लोकपा दश।**
**वाहनानि नवाग्रे स्युर्मात्राद्याश्चणण्डसैनिकाः ।। ४४ ।।**

**ऋषभो मूषिको हंसो बाडवेयो मयूरकः।**
**गरुडो महिषश्चेति गजोऽप्यथ तु कौशिकः ।। ४५ ।।**

**गोपुरद्वारि मातॄणां कुम्भिनी च निकुम्भिनी।**
**बाह्ये त्वष्ट गणा एव महापीठेऽपि ते स्मृताः ।। ४६ ।।**

अग्रे मण्डपे हुं सर्वशक्तिरूपिण्यै वैताल्यै नमः इति वाहनम्, ततः पृष्ठे ओं ब्रह्मविष्णुमहेश्वराय प्रेतासनाय हुं फट् स्वाहा इत्यासनं च। पुनर्विघ्नाद्याः। शेषिका निर्माल्याधारिणां। पुरे गोपुरद्वारे जया विजया च। पुनरसिताङ्गद्यष्टभैरवान् प्रथमावरणे तद्बहिर्दशदिक्षु दशक्षेत्रपालस्तथा तद्बहिर्दशदिक्षु तत्पार्षदाः। क्षेत्रपालान् पठति – हेतुक् इति। हेतुकक्षेत्रपालाय नम इत्यादयो मन्त्राः बलिपीठे, परितो जयाद्याः, उपरि सर्वेश्वरी। जयाद्याः पठति – जया चेति। तत्र नवमी मङ्गला त्वधिष्ठानस्य कुमुदभागे। देवग्रहादयः समाः। एवं मातॄणां सुन्दर्याद्या भद्रकाल्यामुक्ता द्वाःस्थास्तद्वदेव चतुसृषु दिक्षु पुनर्विघ्नेशौ पुनश्चण्डसेनिका पुनर्लोकपाला दश पुनरग्रे नव वाहनानि।

"ऋषभो मूषिको हंसो बाडवेयो मयूरकः।
गरुडो माहिषश्चापि गजोऽप्यथ तु कौशिकः।"

इति नव वाहनानि स्युः। पुनर्मात्राद्याः। निर्माल्यधारिणी गोपुरद्वारि। कुम्भिनीनिकुम्भिन्यौ बाह्ये तत्पार्षदाः महापीठपरितोऽपि ते गणा एव।

**योगिन्यश्चैव शाकिन्यो गणाः प्रेताश्च पूतनाः।**
**डाकिन्योऽष्टौ पिशाचाश्च वेताला भूतसंज्ञिताः ।। ४७।।**

**उग्रसेनो महापीठोपरि शेषः समो भवेत्।**
**द्वारि शूली कपाली च द्वाःस्थौ च द्वारपाः क्रमात् ।। ४८।।**

तान् गणान् पठति – योगिन्य इति। योगिनीगणेभ्यो नम इत्यादयो मन्त्राः महापीठोपरि उग्रसेनः। शेषः सम एव। क्षेत्रपाले द्वारि शूली कपाली च द्वास्थो।

**चतुर्दिक्षु जयो राजा कपाली च महामनाः।**
**लोकपाः सारमेयोऽग्रे मात्राद्याः क्षेत्रचण्डकः ।। ४९।।**

**गोपुरद्वारि सौम्याय चोग्राय च बलिं हरेत्।**
**बाह्यतो हेतुकाद्यष्टौ तेषां पारिषदास्ततः ।। ५०।।**

**अपरावमरेन्द्रमूर्तीशानोग्रा ऊर्ध्वबाहुऋषभश्च।**
**पीठं परितोऽधस्तात् स्युरष्टमः सोमपश्चापि ।। ५१।।**

**असम्भवोऽथ आजन्मा एकदंष्ट्रस्ततः परः।**
**ऐरावतोऽप्योघबलः औषधेयोऽञ्जनप्रभः ।। ५२।।**

**असम्भवश्च क्रमतः पीठपद्मलेष्वपि।**
**पीठोपरि क्षेत्रपालसेनः शेषः समः स्मृतः ।। ५३।।**

पुनश्चतुर्दिक्षु जयः राजा कपाली महामना इति द्वारपा एकैक एव। ततो लोकपालास्ततोऽग्रे सारमेयः। पुनर्मन्त्राद्याः क्षेत्रचण्डो निर्माल्य धारी गोपुरद्वारि सौम्योग्रौ। बाह्यतो हेतुकाद्या अष्टौ पुनस्तत्पार्षदाः, ततः पीठं परितः पीठस्य परितोऽष्टदिक्षु अवरः[1] अवमः इन्द्रमूर्तिः ईशानः उग्रः ऊर्ध्वबाहुः ऋषभः

१. 'अपर' इति मूले पाठः।

अष्टमः सोमपश्च स्युः। पुनर्लोकपाला दश। पुनरग्रे पीठपद्मदलेष्वसम्भवाद्या अष्टौ। पीठोपरि क्षेत्रपालसेनश्च। शेषः देवग्रहादयः सम एव इति।

**अथैतेषूत्सवबलिरेककाले क्रियेत वा।**
**द्विकाले वैकदिवसे तत्र भेदोऽधुनोच्यते ॥ ५४॥**

**उपस्थाय स्तोत्रैः प्रविकिरतु मन्त्रैर्निजनिजै-**
**र्यथान्यायं द्वाःस्थप्रभृति दिगधीशान्तिमबलिम्।**
**दशस्वाशास्वाशाधिपपरिषदंतेऽत्र मनुनो-**
**न्नमो भूतेत्याद्येन च सकलदेवोत्सवबलौ ॥ ५५॥**

**दिक्पालानामुपस्थानं स्तोत्रैः सर्वेष्वपीष्यते।**
**द्वास्थयोर्वाहनस्यापि कार्यं तद् ब्रह्मकृष्णयोः ॥ ५६॥**

**नमस्ते द्वारि युक्ताय चण्डायामिततेजसे।**
**नरसिंहतनुजाय चक्रेणाङ्किकतमौल्ये ॥ ५७॥**

**नमस्ते द्वारि युक्ताय प्रचण्डायामितौजसे।**
**नरसिंहतनूजाय शङ्खेनाङ्किकतमौलये ॥ ५८॥**

**वाहनाय विरिञ्चस्य हंसायामिततेजसे।**
**वेदात्मने नमस्तुभ्यं सर्वद्विजकुलाधिप! ॥ ५९॥**

**ओं हंसाय नमः तत्पार्षदेभ्यो नमः (मूलम्)।**
**वाहनाय महाविष्णोस्तार्क्ष्यायामिततेजसे।**
**गरुडाय नमस्तेऽस्तु दुष्टसर्पेन्द्रमृत्यवे ॥ ६०॥**

**नमस्ते सर्वभूतेश सर्वसम्पत्प्रदायिने।**
**सर्वविघ्नविनाशाय विघ्नेशाय शिवात्मने ॥ ६१॥**



**नमस्तेऽस्तु महायोगिन् व्याख्यामुद्रालसत्कर! ।**

दक्षिणामूर्तिरूपाय रुद्राय परमात्मने ।। ६२।।

शय्या यो जगतां धातुर्विष्णोर्विधमायिनः।
अनन्ताय नमस्तुभ्यमहीन्द्रनमिताङ्घ्रये ।। ६३।।

दैत्यदर्पविनाशाय सहस्राक्षाय धीमते।
कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो! ।। ६४।।

मुखं यः सर्वदेवानां येन हव्यं च नीयते।
येन प्रवर्तते सर्वं नमस्तस्मै हविर्भुजे ।। ६५।।

येन संह्रियते सर्वं येन धर्मश्च रक्ष्यते।
यस्माद् विभेति लोकोऽयं प्रेतनाथ! नमोऽस्तु ते ।। ६६।।

राक्षसा यातुधानाश्च पिशाचाश्चाश्रयन्ति यम्।
तस्मै निर्ऋतिरूपाय रक्षसां पतये नमः ।। ६७।।

येन प्रवर्तते सर्वं यस्मिन् सर्वं प्रलीयते।
अमोघपाशहस्ताय तस्मै वार्पतये नमः ।। ६८।।

पूर्यन्ते च ह्रियन्ते च येन प्राणादयः क्रमात्।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते! ।। ६९।।

यं प्राश्यामरतां यान्ति देवा यज्ञशरीरिणः।
सोमाय गदिने तस्मै ज्योतिषां पतये नमः ।। ७०।।

यत्प्रसादाज्जगत्सर्वं घनेन परिपूर्यते।
यक्षगुह्यकनाथाय धननाथ! नमोऽस्तु ते ।। ७१।।

येन कालाग्निना लोको युगान्तेष्ववदह्यते।
तस्मै ते ब्रह्मणः पुत्र विरूपाक्ष! नमोऽस्तु ते ।। ७२।।

**येन सृष्टं जगत्सर्वं सर्गादौ विष्णुशासनात्।**
**पितामह! नमस्तुभ्यं सर्वलोकेश! पद्मज! ।। ७३ ।।**

**पन्नगाधिपतिर्देव अनन्तो नाम नामतः।**
**पातालवासिने नित्यं नागराजाय वै नमः ।। ७४ ।।**

**पूर्वस्यामिति पूर्वकेण च नमो भूतादिमन्त्रान्ततो**
**दिग्दिक्ष्वर्थपवागुमादिषु तु ये भूतादिना चाणुना।**
**ओजाशासु बलिं करोत्वविधिकृष्णां सर्वतो वा तथा**
**श्रीदादौ पुर इन्दुपूजनविधेरर्च्यश्च वित्ताधिपः ।। ७५ ।।**

भूतबल्यनन्तरमुत्सवबलिं प्रस्तौति – अथैतेष्विति। अथैतेषु देवेष्वेककाले द्विकाले एकदिवसेऽप्येककाले एव वा उत्सवबलिः क्रियेत। अधूना अत्र भेद उच्यते – तत्रोपस्थाय स्तोत्रैरित्यादि। तन्त्रसमुच्चयोक्तश्लोकैरुत्सवबलिं सूत्रयति। तेषां श्लोकानां व्याख्यानमस्माभिरपि तद्व्याख्याने दर्शितम्। अथात्र ग्रन्थकृत्तच्छ्लोकार्थान् विवृणोति – दिक्पालानामित्यादि। तत्र दिक्पालानां स्तोत्रैरुत्थापनं सर्वेषु देवष्वपीष्यते। ब्रह्मकृष्णामुपस्थानमन्त्रा बलिमन्त्राश्च लिख्यन्ते। तैरन्येषामप्यतिदेशः कार्यः। तत्र तेषु तन्त्रसमुच्चयश्लोकेष्वेव पदान्तरप्रक्षेपं कृत्वा क्रियाक्रमस्य भेदोऽप्युच्यते। अर्थपवागुमादिष्विति। वैश्रवणादिशिवप्रकृतिषु शिवोक्तप्रकारेण ब्रह्मादिषु विष्णुप्रकृतिषु विष्णूक्तप्रकारेण बलिं दद्यादित्यर्थः। अविधिकृष्णां सर्वतो वा तथेति। ब्रह्माणं कृष्णं च वर्जयित्वा तथा शिवोक्तक्रमेण सर्वतो दद्याद्वा। तत्र श्रीदादौ इन्दुयजनिविधेः पुरः पुरत एव वित्ताधिपोऽर्च्यः।

**पूर्वस्यां दिशि धनदस्य भगमतो ये गणा वज्रपाणयः**
**श्वेताः श्वेताक्षाः श्वेतलोहिताः**
**दिव्यन्तरिक्षभौमाः पातालनिवासिनश्च**
**तेभ्यो वै नमो नमः स्वाहा ।।**

**यथान्यायं मातृप्रभृतिगुहनिष्ठावृतिमथो**
**यजेद् गायत्र्याद्यैर्मनुभिरपि सर्वेषु विधिवत्।**
**इमां प्रागाद्याशापरिगतकुमारादिसहितां**
**कशौर्योरेवं वा दुहितरि समुद्रस्य मनुवित् ।। ७६।।**

कशौर्योर्ब्रह्मकृष्णयोरिमां गुहाद्यावृतिमपि यजेत्। समुद्रस्य दुहितरि लक्ष्म्यामप्येवं वेत्यर्थः।

**प्राचि स्कन्दं प्रभेशं शिखिनि पितृपतौ धर्ममातॄस्तथार्यं**
**भृङ्गे भानुं पितृस्थं द्रुहिणमुदुकराजीरणे सूकरार्ये।**
**स्कन्दं मुख्येऽन्यमातॄरपि तुहिनरुचौ चाम्बिकां त्र्यम्बकं स्वे**
**कोणे चार्हेत् परीत्यार्चयतु पुनरुदित्यां च निर्माल्यभाजम्**
**।। ७७।।**

**ओं नमः षण्मुखायेति स्कन्दमैन्द्र्यां स्थितं यजेत्।**
**शास्तारमग्नौ भां बीजं भूताधिपतये नमः ।। ७८।।**

**वीरभद्र! नमस्तेऽस्तु नमो विघ्नेश्वराय च।**
**ब्राह्म्यादिभ्यश्च मातृभ्यः सर्वाभ्यो वै नमो नमः ।। ७९।।**

**मातृभ्यो लोकमातृभ्यः सर्वमातृभ्य इत्यपि।**
**सर्वमातृगणेभ्यश्च क्रमाद्दिक्ष्वूर्ध्वतोऽमुना ।। ८०।।**

**“नानारूपा मातरः प्रतिदिशं व्यवस्थिताः**
**दिव्यन्तरिक्षभौमाः पातालनिवासिन्यश्चे-**
**हायान्तु धात्राज्ञया मामनुगृह्णन्तु प्रतिगृह्णन्तु**
**पूजां सौम्यरूपधारिण्यस्ताभ्यो देवीभ्यो नमो नमः स्वाहा”।**

**साधारणमनौ धातुः पदे स्वस्वाक्षरं पठेत्।**

**सर्वत्राकाशमातृभ्यस्तद्गणेभ्योऽपि चाहरेत् ।। ८१ ।।**

**निजमन्त्रशास्तृशम्बरकुमारहस्त्यश्वनीलकालाश्च ।**
**आर्यार्चने कपर्द्युग्रौ रुद्रसुतश्च भूतनाथश्च ।। ८२ ।।**

**चाम्बाद्याः पश्चिमे शास्तुः स्वनाम्नाऽर्च्यो दिवाकरः ।**
**खषोत्कायेति मन्त्रो वा हुतान्तस्तद्विधौ स्मृतः ।। ८३ ।।**

**चाम्बादीनां गणाः सर्वे कोटिकोटिगणाधिपाः ।**
**भवन्तु सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः ।। ७४ ।।**

**ओं तदादिद्विषट्केण ब्रह्मा हूमिति सूकरः ।**
**दुर्गा स्वमूलतः स्कन्दो मूलनामजिनाक्षरैः ।। ८५ ।।**

**श्रीधाराय नमस्तेऽस्तु नमस्तेऽश्चमुखाय च ।**
**वागीश्वर्यादिमातृभ्यः सर्वाभ्यो वै नमो नमः ।। ८६ ।।**

**श्रीधराश्वमुखौ पार्श्वद्वये वागीश्वरी क्रिया ।**
**कीर्तिर्लक्ष्मीस्तथा सृष्टिर्विद्या शान्तिश्च मातरः ।। ८७ ।।**

**तद्बीजं तुर्यषष्ठौ च द्वादशश्च त्रयोदशः ।**
**आद्याश्चैकादशश्चैव द्वितीयश्चेन्द्रगाः स्वराः ।। ८८ ।।**

**गायत्रीरहितं सर्वं योज्यमत्रापि पूर्ववत् ।**
**शिवं यजेत् षडर्णेन नाम्ना निर्माल्यधारिणम् ।। ८९ ।।**

**इष्ट्वाऽथ गोपुरद्वास्थौ वहिर्निष्क्रम्य देशिकः ।**
**ये समस्तं जगदिति सकृदेवोपतिष्ठताम् ।। ९० ।।**

अथ देशिक एवमन्तर्बलिं कृत्वा गोपुरद्वाःस्थबलिं च कृत्वा वहिर्निर्गत्य बहिस्थितान् परिवारान् ये समस्तमित्यादिना सकृदेवोपतिष्टताम् ।

**ये समस्तं जगद् व्याप्य तिष्टन्ति बलिकाङ्क्षिणः।**
**ते ब्रह्मपार्षदाः सर्वे गृह्णन्तु बलिमुत्तमम् ।। ९१।।**

**आराध्य ध्वजदेवतादि वहिरावारद्वयं पूर्ववद्**
**दद्याद्दिग्गणमन्त्रतश्च दशदिक्ष्वत्राजशौर्योर्बलिम्।**
**येभूतादिपुरःप्रभृत्युपरिनिष्ठैः सर्वदिक्षु क्रमात्**
**पीठस्याधिपतिं निजावृतिवृतं मध्ये समभ्यर्चयेत् ।। ९२।।**

अथाजशौर्योर्ध्वजदेवतादिबहिरावारद्वयमाराध्य पूर्वस्यां दिशीत्यादिभिर्दिग्गणमन्त्रैर्दश दिक्षु पूर्ववदेवात्र बलिं दद्यात्। पुनः पीठस्य सर्वदिक्षु नवसु दिक्षु ये भूतानि पुरः प्रभृत्युपरिनिष्ठैर्दशभिर्मन्त्रैः समभ्यर्चयेत्। पुनर्निजावृतिवृतं भूतबलौ प्रोक्तनिजाबृतिभिः सहितमधिपतिं मध्ये च समभ्यर्चयेत्।

**स्वनाममन्त्रगायत्रीतत्तन्मूर्त्यादिमन्त्रकैः।**
**सासंख्यदेवतामूलैर्बलिपीठे बलिं हरेत् ।। ९३।।**

सर्वत्र बलिपीठे स्वस्वनाममन्त्रैर्गायत्रीभिस्तत्तन्मूर्त्यादिमन्त्रकैरष्टमूर्तिपार्षदेभ्य इति वा दशमूर्तिपार्षदेभ्यः सद्भ्योऽसद्भ्य इत्यादिभिर्वा। पुनरसङ्ख्याता गणा इत्यादिना देवताभ्यः पितृभ्य इत्यादिना मूलेन च बलिं हरेत्।

**यत्रान्तर्वैश्रवणवत् तत्र तद्वद् बहिर्बलिः।**
**ध्वजबाह्यावृतावेके गणमन्त्रान् क्रमाद् विदुः ।। ९४।।**

यत्रान्तर्वैश्रवणवत्। बहिस्तत्र बहिरपि तद्वदेव। तत्राप्येके ध्वजबाह्यावृतौ ध्वजाद्यावरणान्ते पूर्वस्यां दिशीत्यादिगणमन्त्रान् क्रमाद् विदुः।

**सर्वत्रैकपरिक्रमात् त्रिविधमन्त्रैर्येसमस्तं नमो**
**गृह्णन्त्वादिभिराहरेत् प्रथमतो वैतैर्ध्वजावारतः।**
**श्रीदोमादिषु तुल्यमेव तु पुनर्देवग्रहाद्याखिलं**
**सूर्यादौ त्वपरोऽस्ति भेद इह तं सङ्कीर्तयामि क्रमात् ।। ९५।।**

सर्वत्र देवेषु महाबलिपीठानन्तरं ये समस्तमित्यादिना ओं नमो भूतेभ्य इत्यदिना गृह्णन्तु देवता इत्यादिना च त्रिविधमन्त्रैबलिमाहरेत्। श्रीदोमादिषु शिवप्रकृतिषु एतैस्त्रिविधमन्त्रैर्ध्वजावारतः प्रथमतो वा बलिं हरेत्। पुनर्देवग्रहाद्यखिलं सर्वबलिपर्यन्तं तुल्यमेव। भूतबलिना इह सूर्यादौ त्वपरो भेदोऽस्ति। तं क्रमात् सङ्कीर्तयामि।

**नमो भूतेभ्य इत्येव सूर्ये सोमाद्यनन्तरम्।**
**बहिस्तु दिक्पावरणानन्तरं त्र्यावृतिर्बलिः ।। ९६।।**

**"ओं नमो भूतपूर्वस्यां ये भूता इति चाणुभिः।"**
**महापीठबलेरन्ते दिक्ष्वष्टासु यथाक्रमम्।**
**ये भूता इत्यादिमन्त्रैर्दद्याद् वैश्रवणे बलिम् ।। ९७।।**

सूर्ये सोमाद्यनन्तरम् अन्तर्मण्डलस्थानगतसोमादिग्रहणामनन्तरं नमो भूतेभ्य इत्येव मन्त्रेण बलिः स्यात्। तत्र बहिस्तु दिक्पावरणानन्तरम् ओं नमो भूतेभ्यः पूर्वस्यां दिशि ये पूर्वस्यां दिशि ये भूता इति त्रिभिरणुभिस्त्र्यावृतिर्बलिः स्यात्। वैश्रवणे महापीठे बलिं दत्त्वा तदनन्तरं ये भूता घननाथस्येत्याद्यैरत्रैव वक्ष्यमाणैर्मन्त्रौर्दिक्ष्वष्टासु यथाक्रमं बलिं दद्यात्।

**ये भूता घननाथस्य पूर्वस्यां दिशि संस्थिताः ।।**
**तेषां सर्वेषां बलिं हरामि नमः।**
**ये भूता घननाथस्य आग्नेय्यां दिशि संस्थिताः ।। ९८।।**
**तेषां सर्वेषां बलिं हरामि नमः।**
**दिक्पालानन्तरं काल्यां नमो भूतेभ्य एव च।**
**बहिर्भैरवयोगिन्यः प्राग् ध्वजावरणात् स्मृताः ।। ९९।।**

काल्यां दिक्पालानन्तरमों नमो भूतेभ्य इत्येव। तत्र बहिर्ध्वजावरणात् प्राग् भैरवो योगिन्यश्च। असिताङ्गभैरवाय नमः तद्योगिनीभ्यो नमः इत्यादि।

**ध्वजावरणतत्पारिषादावृत्त्योरनन्तरम्।**
**पूर्वस्यां दिशि काळ्या इत्यादिभिस्त्वपरावृतिः ।। १०० ।।**

पुनर्ध्वजावरणतत्पार्षदावृत्योरनन्तरं पूर्वस्यां दिशि काळ्याः शक्तेरित्यादिभिर-परावृतिः स्यात्।

**महापीठबलेरन्ते ये भूताः पुर आदिभिः।**
**पञ्चभिः पञ्चदिक्ष्वस्य बलिं दद्याद्यथाक्रमम् ।। १०१ ।।**

महापीठबलेरन्ते ये भूताः पुरस्सद इत्यादिभिः पञ्चभिर्मन्त्रैरस्य बलिपीठस्य पञ्चदिक्षु यथाक्रमं बलिं दद्यात्।

**भिन्नस्तु मध्यमो मन्त्र एकावृतिबलाविह।**

**"ओं नमो भूतेभ्यो भूतिकृद्भ्योऽरिष्टेभ्योऽरिष्टकृद्भ्यश्चरकृद्भ्यः अचरकृद्भ्यो व्याप्तेभ्योऽव्याप्तेभ्यस्त्रीपुंनपुंसकेभ्यः सर्वरूपधरेभ्यो विरूपेभ्यः सद्भ्योऽसद्भ्यः सर्वरूपेभ्यस्तेभ्यस्ताभ्यः शक्तिपार्षदी-भ्योनमो नमः स्वाहा"**

**बलिं विधायेति परीत्य सन्नतः स्वाचम्य गर्भालयमभ्युपेत्य।**
**आयोज्य देवं बलिबिम्बसंस्थितं स्वमूलबिम्बे तमथ क्षमापयेत्**
**।। १०२ ।।**

**तीर्थस्नानदिनाधरेद्युरभिसायं सोऽयमाचार्यको**
**ग्रामे चैत्यचतुष्पथादिषु बलिं कुर्वन् परीत्याखिले।**
**ग्रामान्ते मृगयाप्रचारविहृतिं कृत्वा सुयोधैः समं**
**प्रत्यापत्य ततः स्वकौतुकगतं देवे समायोजयेत् ।। १०३ ।।**

इह काळ्यामेकावृतिबलौ त्रिषु मन्त्रेषु मध्ये मध्यस्थो मन्त्रो भिन्नः। अत्रैव वक्ष्यमाणेन भेदेन युक्तः। ततो ग्रामबल्यादिकं तन्त्रसमुच्चयश्लोकेनाह

– तीर्थस्नानदिनाधरेद्युरिति। ग्रामबलौ ये समस्तं ओं नमो भूतेभ्य इति द्वौ मन्त्रौ स्याताम्। स्वस्वागमेष्वन्योऽपि दृश्यत चेत् सोऽपि ग्राह्य इत्यर्थः।

**ये समस्तं जगद् व्याप्य नमो भूतेभ्य इत्यपि।**
**मन्त्रो ग्रामबलौ ज्ञेयो यश्च स्यात् स्वागमोदितः ।। १०४।।**

**स्नात्वाङ्कुराद्युज्ज्वलमण्डपेष्ट-**
**शय्योऽन्तरेत्यार्चितपीठसंस्थम्।**
**देवं प्रपूज्यार्थ्य च तीर्थयात्रा-**
**णुना घृतारोपणमादधीत ।। १०५।।**

स्वापनं कर्म संक्षिप्याह – स्नात्वेति। मन्त्री स्नात्वा अङ्कुराद्युज्ज्वलमण्ड-पेष्टशय्यः अङ्कुरादिसर्वमङ्गलैरुज्ज्वले मण्डपे शय्यामिष्टान्तरेत्य अर्चित-पीठसंस्थ देवं प्रपूज्य तीर्थयात्रा त्वयेति मन्त्रेण प्रार्थ्य कृतारोपणमादधीत।

**संक्षाल्य तत् कौतुकमत्र मन्त्री**
**पुण्याहकृत् कौतुकमाकलय्य।**
**संशोध्य तस्मिन्नभिवाह्य बिम्बात्**
**साकल्यकृत् बिम्बगतं सुरक्षेत् ।। १०६।।**

ततस्तत्कौतुकं संक्षाल्यात्र कौतुके पुण्याहकृद् भूत्वा यथोक्तप्रकारेण कौतुकं बद्ध्वा वारणादिभिः संशोध्य तत्र पीठं चेष्ट्वा बिम्बात्तस्मिन्नभिवाह्य साकल्यकृद् भूत्वा बिम्बगतं देवं सुरक्षेत्।

**तन्मण्डपे पीठगमर्चयित्वा**
**संवेश्य तस्मिन् शयनीय एवम्।**
**व्याप्येषुतत्त्वस्वमनुघ्नुवैस्तै-**
**स्तुर्यां दशां प्राप्य सुवृत्य रक्षेत् ।। १०७।।**

पुनस्तत्कौतुकं मण्डपमानीय तत्र पीठगतं तमर्चयित्वा तस्मिन् शयनीय एव संवेश्य शाययित्वा इषुतत्त्वमूलप्रणवैस्तं देवं तुर्यां दशां प्रापय्य सुवृत्य वस्त्रैराच्छाद्य रक्षेत्।

**प्रातर्बहिः प्रार्चितपीठ एत्य**
**तन्मण्डपे सम्प्रतिबोध्य देवम्।**
**उत्थाप्य सन्दर्शितमङ्गलो ह्यो-**
**ऽर्चनं समाप्य न्यसतूक्तपीठे ।। १०८।।**

पुनः प्रातःकाले बहिरन्यन्त्र प्रदेशे कस्मिंश्चित्पीठे प्रार्चितपीठो भूत्वा तन्मण्डप एत्य गत्वा देवं यथोक्तरीत्या संप्रतिबोध्य उत्थाप्य सन्दर्शितमङ्गलो भूत्वा ह्योऽर्चनं पूर्वदिवसगतमर्चनाशेषं समाप्य पूर्वं प्रार्चिते पीठे न्यसतु।

**आवाहनादि पुनराचमनावसानं**
**कृत्वा सदन्तरसनापवनं विधाय।**
**गण्डूषसंस्नपितमुक्षितमापआद्यैः**
**संस्नाप्य यच्छतु ततोऽम्बरपूर्वकाणि ।। १०९।।**

तत आवाहनादि पुनराचमनावसानं कर्म कृत्वा सदन्तरसनापवनदन्तधावन-जिह्वाशोधनं च विधाय गण्डूषं दत्त्वा ततः स्नापितमापोहिष्ठादिभिरुक्षितं पुनः संस्नाप्य ततोऽम्बूरपूर्वकानि वस्त्रादीनि यच्छतु ददातु।

**दूर्वा प्रसूनमथ चन्दनमञ्जनानु-**
**लेपावलङ्करणदर्पणमप्यथेष्ट्वा।**
**विघ्नं गवे यवसदोऽथ कृतेतिहास-**
**संश्रावणो द्विजवितीर्णसुवर्णधेनुः ।। ११०।।**

**देवं सम्पूज्य नीराज्य शय्याद्युद्वास्य तं गुरुः।**
**नीत्वाऽन्तर्मूलबिम्बे तु प्रत्यर्प्यावाह्य पूजयेत् ।। १११।।**

अथ दूर्वाप्रसूनं चन्दनमञ्जनानुलेपम् अलङ्करणं दर्पणं च यच्छतु। अथ विघ्नमिष्ट्वा गवे यवसं च दत्त्वा इतिहाससंश्रवणं च कृत्वा द्विजवितीर्णसुवर्णधेनुः द्विजेभ्यः सुवर्णं धेनूश्च दत्त्वा देवं संपूज्य नीराज्य शय्यादिकमुद्वास्य तं देवमन्तर्नीत्वा मूलबिम्बे प्रत्यर्प्य संयोज्यावाह्य सकलीकृत्य पूजयेत्।

**यात्राहोममथादधीत विनिधायाग्निं यथोक्तक्रमात्**
**कृत्वास्मिन् परिवारहोमचरमं सर्पिर्हुनेदेकशः**
**षण्मन्त्रैश्च कनिक्रदत्प्रभृतिभिः स्वस्त्यादिपञ्चाणुभि-**
**श्चाथ स्वेन जुहोतु मूलमनुना द्रव्याणि चत्वार्यपि ।। ११२।।**

**गत्वा गर्भगृहं समिष्टनिजपीठे देवमास्थापितं**
**संस्नाप्याचमनीयकावधि समर्प्य प्रोक्ष्य चाप्यादिभिः।**
**चूर्णैस्तण्डूलमुद्गमाषयवहेमादिक्षपागन्धजै**
**रूद्वर्त्त्य द्रुपदादिवेति मनुविद् ब्रह्मादिषूद्वर्तयेत् ।। ११३।।**

**संस्नाप्य सम्पूज्य तथैव वा तं**
**कृत्वा तदग्रे शुचि कर्मबिम्बे।**
**कर्मेति सम्प्रार्थ्य ततोऽभिवाह्य**
**सम्पातसंस्पर्शपुरःसरं तु ।। ११४।।**

अथ किञ्चिद्भेदयुक्तैस्तन्त्रसमुच्चयोक्तश्लोकैस्तीर्थस्नानविधिमाह – यात्राहोममित्यादि। ब्रह्मादिषु द्रुपदादिवेत्यादिनोद्वर्तयेत्। संपातसंस्पर्शपूर्वकमभिवाह्येत्यर्थः।

**साकल्यमापाद्य सुरक्ष्य मूल-**
**बिम्बं ततो मङ्गलवादपूर्वम्।**
**गृहीततत्कौतुकमूर्तिपाढ्यो**
**निर्यात्वसौ द्वारपिधानपूर्वम् ।। ११५।।**

साकल्यमापाद्य मूलबिम्बं सुरक्ष्य ततो मङ्गलवादपूर्वं गृहीततत्कौतुकमूर्तिपाढ्यः गृहीतकौतुकगतेन देवेन युक्तो भूत्वा द्वारपिधानपूर्वं निर्यातु।

**अन्तर्विकीर्य बलिमेकपरिक्रमेण**
**बाह्ये च तद्ध्वजचितीः प्रविलाप्य देवे।**
**क्षेत्रेशगुप्तसदनो ध्वजगुप्तवेश्मा**
**वाऽथ प्रयातु निजयानसुरोहितेशः ।। ११६।।**

पुनः क्षेत्रेशगुप्तसदनो ध्वजगुप्तसदनो वा भूत्वा निजयानसुरोहितेशः निजे याने देवं सुखेनारोहयित्वा प्रयातु।

**द्वाःस्थादियज्वा यजमानयुक्तो**
**दिङ्मन्त्रतः सालबहिः परीत्य।**
**अर्वाग्व्रजेद्योजनतः समेतो**
**विप्रैर्हविर्वारिघटादियुक्तैः ।। ११७।।**

**आसाद्य नद्यादिविशिष्टतीर्थं**
**तत् सम्मुखं न्यस्य समिष्टपीठे।**
**साङ्गीक्रियाद्यं प्रविधाय तस्मै**
**दद्याद् द्वितीयाचमनावसानम् ।। ११८।।**

**विशोधिते तीर्थजले जलेशा-**
**दीज्यातदर्हाहुतिजाज्यसिद्धे।**
**त्रिर्मज्जयेत्तज्जलसम्मुखीनं**
**देवं सुधीः स्वैरथ पञ्चमन्त्रैः ।। ११९।।**

**पीठे निवेश्याचमनीयनिष्ठं**
**दत्त्वाऽथ सम्प्रोक्ष्य यथोक्तनीत्या।**
**चूर्णैः समुद्वर्त्य जलेऽवगाह्**

कुर्यादृतं चेत्यघमर्षणेन ।। १२०

पीठे निवेश्य वसनाद्यमथोपहृत्य
देवं सुपूज्य विनिवेद्य निवेद्यमग्नौ।
हुत्वाभितो बलिमपि प्रविकीर्य पूजा-
शेषं समाप्य मनुविद्विनिवेदयेच्च ।। १२१।।

तीर्थेऽस्मिन् पावने पुण्ये स्नातोऽसि चतुरानन!।
अतस्त्वमनुगृह्णीष्व स्वस्थानोपाश्रयेण नः ।। १२२।।

उद्वास्य तीर्थं निजवाहने त-
मारोप्य मूलालयमागमय्य।
तस्मिन्नहन्येव नियोज्य मूल-
बिम्बेऽभिषिच्य प्रयजेच्च देवम् ।। १२३।।

तस्मिन् परन्मिन्नपि वाह्नि देवं
समुक्तनीत्या कलशैः प्रभूतैः।
संस्नाप्य यात्रोत्थितदोषशान्त्यै
समर्चयेद् भूतबलिं किरेच्च ।। १२४।।

इति शेषसमुच्चये पञ्चमः पटलः।

# अथ षष्ठः पटलः।

**अथ प्रायश्चित्तं पतनमसतां वेशनमसृक्-**
**प्रपातो वेद्यादौ सति सपदि कुर्याद् गुरुवरः।**
**पुरः शोध्यं स्थानं यदि तदुपघातः प्रतिकृतिः**
**पुनः सा शोध्या स्यात्तदुपहतियोगे क्रमविदा ।। १।।**

प्रायश्चित्तविधिमाह – अथेति। अथ गुरुवरो बिम्बस्य पतनं वा असतां चण्डालादीनां गृहप्रवेशनं वा गृहाङ्कणादौ असृक्पातो वा। इत्यादौ निमित्ते सति। सपदि तदैव प्रायश्चित्तं कुर्यात्। तदुपघातस्तन्निमित्तः स्थाना गतः यदि पुरः पूर्वं स्थानं शोध्यं, पुनः प्रतिकृतिः प्रतिमा च शोध्या। तदुपहतियोगे प्रतिमायामुपहतिश्चेत्। क्रमविदा गुरुणा सैव शोध्या स्यात्।

**खननं हरणं दाहः पूरणं गोनिवासनम्।**
**विप्रोच्छिष्टं च गव्यं च सप्तैताः स्थानशुद्धयः ।। २।।**

तन्त्रसमुच्चयोक्तश्लोकेन खननादिकमुपदिशति – खननमिति।

**गुरूदितनयेनैता विदधीत विचक्षणः।**
**दोषानुसारतो लघ्वीरुत गुर्वीर्यथाक्रमम् ।। ३।।**

विचक्षणो गुरुर्दोषानुसारतो लघ्वीरुत गुर्वीर्वा एताः शुद्धीर्यथाक्रमं गुरूक्तेन नयेन तन्त्रसमुच्चयोक्तप्रकारेण विदधीत।

**ततो यथार्हं प्रसमुप्तबीज-**

**स्त्रिसूत्रमालापरिवेष्टनाद्याम्।**
**प्रासादशुद्धिं प्रविधाय पुण्या-**
**हान्तां विदध्यादथ बिम्बशुद्धिम् ।। ४।।**

ततो यथार्हकालं प्रसमुप्तबीजो गुरुस्तन्त्रसुमुच्चयोक्तनयेनैव प्रासाद शुद्धिं प्रविधायाथ बिम्बशुद्धिं विद्ध्यात्।

**क्षालनप्लावनस्नानमार्जनानि यथाक्रमम्।**
**धारावगाहसेकाश्च सप्तैता बिम्बशुद्धयः ।। ५।।**

**गुरूदितक्रमेणैव कुर्यादेता विचक्षणः।**
**धारायां निजसूक्तानि जप्यान्यप्यवगाहने ।। ६।।**

**हिरण्यगर्भः सौरं च जगृम्भातेऽथ वैष्णवम्।**
**सारस्वतं च श्रीसूक्तं गौरीऋक् पूर्वरौद्रकम् ।। ७।।**

**केष्ठानरश्च केश्यग्निं क्राणाशिशुरपि क्रमात्।**
**'क्षेत्रस्य' पतिनासूक्तं जप्यानि द्रुहिणादिषु ।। ८।।**

**स्वपञ्चतत्त्वं दशतारकाद्यं**
**वेदादिमन्त्रान्निजसूक्तमुक्तम्।**
**सपावमानाद्यथ गुह्यमन्त्रान्**
**वेदान्तमन्त्रानपि सञ्जपेयुः ।। ९।।**

तन्त्रसमुच्चयश्लोकेनैव क्षालनादिकमुद्दिशति – क्षालनेति। विचक्षण एता। बिम्बशुद्धीरपि तन्त्रसमुच्चयोक्तक्रमेणैव कुर्यात्। तत्र धारायामवगाहनेऽपि निजनिजसूक्तान्येव जप्यानि। तत्र ब्रह्मणि 'हिरण्यगर्भः सम्' सूर्ये सौ(र्य??र) 'मुदुत्य'मित्यादि। वैश्रवणे 'जगृभ्माते दक्षिणम्'। कृष्णे वैष्णवम्। सरस्वत्यां सारस्वतं सूक्तम्। लक्ष्म्यां श्रीसूक्तम्। गौर्यां 'गौरीर्मिमाये'त्यृ'चं रौद्रं च। ज्येष्ठायां 'केष्ठा नरः'। भद्रकाळ्यां केश्यग्निम्। मातृषु 'क्राणां शिशुः'

क्षेत्रपाले क्षेत्रस्य पतिना द्रुहिणादिषु सर्वेषु स्वस्वपञ्चतत्त्वं दशतारकां दशप्रणवगायत्रिं वेदादिमन्त्रानग्निमीळे इत्यादीन्। उक्तं निजनिजसूक्तं च। अथ स्वस्वचरणगतपावमानादिकम्। अथ गुह्यमन्त्रान् "सहस्रशीर्षादि" वेदान्तमान्त्रान् 'वातआवात्वि'त्याद्यान् संजपेयुः।

**कार्या पुण्याहपर्यन्ता शुद्धिरेवमजादिषु।**
**पारायणं ततः कुर्यात् प्रायश्चित्तहुतादि च ।। १० ।।**

अजादिष्वेवमुक्तप्रकारेण पुण्याहान्ता शुद्धिः कार्या। ततः पारायणं प्रायश्चित्तहुतादि च कुर्यात्।

**देवाग्रतोऽग्निं प्रजनय्य कुण्डे**
**चतुर्षु वाष्टास्वथ वा द्विषट्सु।**
**विहृत्य कुण्डेषु करोतु होमं**
**समूर्त्तिपो दोषभिदोपपत्त्या ।। ११ ।।**

तत्र प्रायश्चित्तहोमे देवाग्रतः कुण्डेऽग्निं प्रजनय्य चतुर्षु वा अष्टासु वा द्वादशसु वा कुण्डेषु दोषभिदोपपत्त्या दोषभेदानामुपपत्तिवशादग्निं विहाय समूर्तिपो गुरुर्होमं करोतु।

**अन्वाधानादिकृत्तत्र कलशं प्राच्र्य दक्षिणे।**
**परिधानादि परिवाराज्यहोमान्तमाचरेत् ।। १२ ।।**

तत्रान्वाधानादिकृद्धोमकर्ता परिधेः प्राग् दक्षिणे कलशं प्राच्र्य परिधानादि परिवाराज्यहोमान्तमाचरेत्।

**मन्त्रैः पञ्चकचोदितैस्त्रिगुणसाहस्रं घृतं साष्टकं**
**साहस्रं समिदाज्यशालितिललाजानां पृथङ्मूलतः।**
**भूराद्यैर्जुहुयात् पलाशसमिधोऽथ द्वादशोर्ध्वं शतं**
**सावित्र्याष्टशतं सदुग्धदधिमध्वाज्यानि चान्ते पृथक्।। १३ ।।**

**मोदादयोऽजे परमसुखाद्याश्चण्डदीधितौ।**
**परेषु पञ्चतत्त्वानि स्युर्मन्त्राः स्नानहोमयोः ।। १४।।**

होमप्रकारं तु तन्त्रसमुच्चयश्लोकेनाह – मन्त्रैः पञ्चकेति। स्नानहोमयोरजे मोदादयः मोदप्रमोदहंससामगसत्याः। चण्डदीधितौ परमसुखप्रभूतविमल-सारसमाराध्याः। परेषु पञ्चतत्त्वानि च मन्त्राः स्युः।

**काळ्यां तु पञ्चदुर्गा वा होमे स्युः पञ्च वा कलाः**
**हृल्लेखाद्यास्तु वोमायामेकहोमास्तु मातरः ।। १५।।**

**न तु काळ्यां समिद्धोमो दुग्धादीनां हुतं पुनः।**
**स्वगायत्र्यैव कार्यं स्याज्जेष्ठादिष्वेवमेव वा ।। १६।।**

काळ्यां प्रासादस्य चतुर्दिक्स्थितेषु कुण्डेषु पञ्चदुर्गा वा निवृत्त्यादि कला वा। उमायां हृल्लेखाद्या वा मन्त्राः। मातर एकैकहोमाः स्युः। तत्र नवसु कुण्डेषु मध्यस्थे वीरभद्रकुण्डेऽग्निं जनयित्वान्येषु कुण्डेष्वग्निं विहृत्य यथोक्तरीत्या होमान् कुर्यादित्यभिप्रायः। काळ्यां व्याहृतिभिः प्राप्तः समिद्धोमो न विहितो वा पुनर्दुग्धादिनां स्वगायत्र्यैव च स्यात्। ज्येष्ठादिष्वप्येवमेव वा स्यात्।

**ततः स्विष्टकृदादीनि कृत्वा होमं समापयेत्।**
**तन्मन्त्रैः कलशैर्देवमभिषिच्याथ पूजयेत् ।। १७।।**

पुनः स्विष्टकृदादिकं हुत्वा समाप्याभिषिच्य पूजयेत्।

**गेहदक्षिणदिशि प्रकल्पिते**
**सूर्यवैश्रवणवागुमादिषु।**
**पूर्णकार्मुकसमाकृतौ गुरुः**
**कुण्ड एकहुतमादधीत वा ।। १८।।**

**तत्राग्निं जनयित्वाथ कलशं दक्षिणेऽर्चयेत्।**

**परिधानादि सकलं पूर्णाहुत्यन्तमाचरेत् ।। १९ ।।**

**उदुम्बरमयूरजा घृतहविः सहस्रं शतं**
**तिला वसुयुतं ससर्षपसमुद्गशालीयबाः ।**
**सहस्रमपि मूलतो गुणमिताश्च दूर्वाङ्कुराः**
**शतं च दधि माक्षिकं घृतमपीह होम्याः क्रमात् ।। २० ।।**

**होमान्ते कलशेनाभिषिच्य देवं प्रपूजयेत् ।**
**अद्भुतेष्वीशकोणेऽग्निं जनयित्वा हुतं चरेत् ।। २१ ।।**

सूर्यवैश्रवणवागुमादिषु शिवप्रकृतिषु प्रायश्चित्तहोमान् पूर्वं गेहदक्षिणदिशि प्रकल्पिते पूर्णकार्मुकसमाकृतौ अर्धचन्द्राभे कुण्डे गुरु स्वयमेकमेव होममादधीत वा । न वा तत्र स्वस्वोक्तक्रमेणाग्निजननादि कृत्वत "शङ्करप्रोक्त" उक्तप्रकारेण स्वस्वमूलमन्त्रत उदुम्बरसमिदादि त्रयोदशद्रव्यैर्होम कृत्वा तं तं देवममिषिञ्चेदिति विवक्षन्नाह – तत्राग्निभित्यादि । अद्भुतेषु निमित्तेषु पुनः प्रायश्चित्तहोमान्ते त्वीशकोणे चतुरश्रकुण्डेऽग्निं जनयित्व शान्तिहोमं कुर्यादित्याह – अद्भुतेष्विति । तत्र कृष्णे वैष्णवोक्तप्रकारेणै होमं कुर्यादिति ।

**सर्पिः स्वोपनिषद्द्विषड्वसुजिनार्णाणूपचारैर्नृसू-**
**त्क्तोत्थाभिर्जिनवारमृग्भिरपि हुत्वाज्यान्तरालेषु तैः ।**
**कृष्णे मार्गभवामृताः सह सहैन्द्रीभद्रिकाः साञ्जली-**
**र्दूर्वाः सर्षपशालिका यवतिलान्नञ्चोक्तसङ्ख्यं हुनेत् ।। २२ ।।**

**मोदाद्या ब्रह्मणि ग्राह्या मूलमष्टार्णगोचरे ।**
**लक्ष्म्यां कृष्णवदेव स्यादष्टार्णे तु स्वमूलकम् ।। २३ ।।**

तन्त्रसमुच्चयश्लोकेनाह – सर्पिः स्वोपनिषदिति । ब्रह्मणि तत्र पञ्च तत्त्वस्थाने मोदाद्या ग्राह्याः । अष्टार्णस्थाने स्वमूलमेव । लक्ष्म्यां कृष्णवदेव तत्राप्यष्टार्णस्थाने स्वमूलकं स्यात् ।

**गायत्र्या निजया पयोद्रुसमिदाज्यान्नानि दूर्वा मधु-**
**क्षीराज्यस्नपिता वसूत्तरशतं लाजाः सराजीतिलाः।**
**होतव्या यवशालिसक्तुघृतयुक्ता श्रीदसूर्यादिषु**
**ग्राह्याः स्युः समिधः स्वतोरणविधावुक्तक्रमादेषु च ।। २४।।**

**इयमेव पञ्चदशभिः सहस्रशीर्षा च षोडशभिराज्यम्।**
**हुत्वा मूलेनैव तु काळ्यां द्रव्याणि नव जुहुयात् ।। २५।।**

श्रीदसूर्यादिषु शिवप्रकृतिषु शिवोक्तप्रकारेण शान्तिहोमं कुर्यादिति विवक्षन्नाह – गायत्र्येति। एषु समिधः स्वस्वतोरणविधावुक्तक्रमादेव। काळ्याम् 'इयमेव सा' इत्यादिपञ्चदशभिः सहस्रशीर्षादिषोडशभिश्च मन्त्रैराज्यं हुत्वा मूलेन वटसमिदादि नवद्रव्याण्यष्टशतं जुहुयात्।

**वटसमिदाज्यहवींषि क्षीराक्ता वा त्रिमधुराक्ता वा।**
**दूर्वाः सलाजराजी यवतिलसर्पींषि चाष्टशतम् ।। २६।।**

**शिवमावाह्य पुंसा वा होमो मातृषु कीर्तितः।**
**वीरभद्रमुतावाह्य तद्गायत्र्यैव वा भवेत् ।। २७।।**

द्रव्यनवकं पठति – वटसमिदिति। मातृषु शैवोक्त एव शान्तिहोमः अग्नौ शिवमावाह्य पुंसा वा होमः कीर्तितः। अथवा तत्र वीरभद्रमावाह्य तद्गायत्र्यैव वा होमो भवेत्।

**होमं समाप्य सम्पातकलशेनाभिषच्य च।**
**देवं सम्पूजयेदेवं शान्तिहोमोऽप्युदीरितः ।। २८।।**

**श्वस्पर्शनादिविषये शान्तिहोमो गुरूदितः।**
**यः स एवाजकृष्णादिष्वपि कार्यो विपश्चिता ।। २९।।**



तत्र नव कलशाः पूज्याः। एवं सर्वत्र होमं समाप्य सम्पातकलशेनाभिषिच्य

पूजयेत्। श्वस्पर्शनादिविषये शान्तिहोमः गुरूदितस्तन्त्रसमुच्चयोक्त एव सर्वदेवेषु कार्यः।

**देवाग्रे प्रजनय्य वह्निमथ तत् पार्श्वेऽष्टपत्रेऽम्बुजे**
**पीठाराधिपुरःसरेण विधिना सम्पूर्य कुम्भं गुरुः।**
**तत्त्वावाहननिष्ठमत्र सुविधायावाह्य मूलाणुना**
**साङ्गीकृत्य यजेत तं हुतवहे कुर्यात् परिध्यादि च ।। ३० ।।**

**पूजामन्त्रहुतान्तमत्र सुविधायापीतिरीत्यैकश-**
**स्तत्त्वैराज्यहुतिं विधाय मनुबिम्बेऽन्तः समायोज्य च।**
**सम्पातं परिकल्प्य विश्वविलयं भूयः सिसृक्षार्थत-**
**पूर्वं प्राप्य बहिः स्वमूलमनुनाष्टाज्याहुतिं चाचरेत् ।। ३१ ।।**

**सृष्टिक्रमात् स्वाखिलतत्त्वमन्त्रैराज्यं यथाशक्ति पृथग् जुहोतु।**
**हुत्वाथ मूलेन समिद्घृतादिद्रव्याणि होमं सुसमापयेच्च**
**।। ३२ ।।**

**सम्पातं प्रसमर्प्य वह्निगतचैतन्यं समुद्वास्य तत्**
**कुम्भे तं प्रतिजप्य साधितसमग्रात्मोदयं भावयेत्।**
**पीठेज्यादिविधानतः स्नपितयेत् संशुद्धतत्त्वोन्मिषत्-**
**स्वाङ्गे तत्कलशेन देवमथ तद्विन्यासपूर्वं यजेत् ।। ३३ ।।**

**नवकुण्डानि जननीष्वधिवासोक्तवत् पुरः।**
**विधाय तेषु कर्त्तव्यस्तत्त्वहोमो यथोचितम्।। ३४ ।।**

अथ यथोक्तप्रकारेण तत्त्वहोमविधिं तन्त्रसमुच्चयश्लोकैरेवाह – देवाग्रे प्रजनय्येत्यादि। जननीषु स्वस्वपुरोभागेऽधिवासोक्तवन्नव कुण्डानि विधाय तेषु यथोचितस्तत्त्वहोमः कर्तव्यः।

**प्रागुक्तक्लृप्त्या कलशान्यथार्हं**
**सम्पूर्य सम्पूज्य ततोऽभिषिच्य।**
**सम्पूजयेद्देवमवस्तुतेन**
**संप्रोक्ष्य कुर्यात् परिषद्बलिं च ।। ३५।।**

**लेपादि दाहादि विशेषदोषे**
**तन्निष्कृतिः साधु विचार्य कार्या।**
**बिम्बस्य धाम्नोऽपि च जीर्तिभङ्गा-**
**दिसम्भवे निष्क्रमणं वदामि ।। ३६।।**

ततो यथोक्तप्रकारेण द्रव्यकलशाभिषेकं कुर्यादिति तन्त्रसमुच्चयश्लोकेनाह – प्रागुक्तक्लृप्त्येति। लेपदाहादिसम्भवे निष्कृतिरपि यथोक्तनीत्या कार्या। बिम्बस्य प्रासादस्य वा जीर्तौ भङ्गादिसम्भवे च निष्क्रमणं वदामि।

**मूलालयाद्दक्षिणभागसंस्थं**
**तत्संमुखं बालगृहं समाप्य।**
**समण्डपं शिल्पिभिरल्पबिम्बं**
**प्रकल्पयेल्लौहिकमाङ्घ्रिपं वा ।। ३७।।**

**सर्वेषु स्वायुधं वा स्यात् काल्यादिषु रुजैव वा।**
**लिङ्गाकारं तु वा कल्प्यं पीठं वा पद्मशोभितम् ।। ३८।।**

अत्र प्रायः तन्त्रसमुच्चयश्लोकेरेव नवीकरणमुच्यते। तद्व्याख्यानमस्माभिरेव तत्र कृतम्। अत्र तदन्येषामेव व्याख्यानं कुर्मः। तत्राल्पबिम्बविधाने विशेषमाह – सर्वेष्विति। सर्वेषु देवेषु स्वस्वायुधं वाऽल्पबिम्बं स्यात्। काळ्यादिषु रुजा शूलमेव वा लिङ्गाकारं वा पद्मशोभितं पीठं वा कल्प्यं स्यात्।

**अत्राप्यङ्कुररोपणं प्रथमतः कृत्वा गृहीत्वा नवं**
**बिम्बं वार्यधिवास्य बालनिलयं संशोध्य तन्मण्डपम्।**

संस्कृत्योदकतोऽल्पबिम्बमुपनीय स्नापयित्वा पुन-
स्तत्तद्बिम्बघटैः प्रणीय शयनीये शाययेद्देशिकः ।। ३९ ।।

ततस्त्रिसूत्राकलनादिमूलप्रासादशुद्धिं विधिवद्विधाय।
प्रक्षालनाद्याश्च यथार्हकालं कुर्वीत मूलप्रतिमाविशुद्धीः ।।
४० ।।

संस्नाप्य देवमथ निष्कृतितत्त्वहोम-
संपातसिद्धकलशैः कलशैः परैश्च।
प्रार्च्य प्रसाद्य परिषत्सु बलिं विकीर्य
प्रार्थ्यारभेत सुसमीहितकर्म सम्यक् ।। ४१ ।।

मूलालयाग्राहितमण्डपस्थे
कुण्डे समुत्पाद्य कृपीडयोनिम्।
तत्पार्श्वदेशे कलशं प्रपूज्य
कुर्याद् गुरुः संहृतितत्त्वहोमम् ।। ४२ ।।

सम्पातमस्मिन् प्रसमर्प्य कुम्भे
पूजामनुद्रव्यहुतिप्रसिद्धम्।
सृष्टिक्रमेणाखिलतत्त्वमन्त्रैः
सकृत् सकृत् सर्पिरथो जुहोतु ।। ४३ ।।

गत्वा गर्भगृहं समिष्टनिजपीठे देवमास्थापितं
तत्त्वन्यासपुरःसरं सकलितं कृत्वा समभ्यर्चयेत्।
तत् सम्पातघृतं समर्प्य परिपूर्णं भावयित्वा पुनः
संहारानुमतिं विकीर्य कुसुमं सम्प्रार्थयेत् साञ्जलिः ।। ४४ ।।

नाडीसन्धानकृद्विद्वान् मूलेनाष्ट घृताहुतीः।
कृत्वा बल्यर्चनावृत्योः संहाराज्याहुतिं चरेत् ।। ४५ ।।

सृष्टितत्त्वसंपातस्पर्शनं संहारप्रार्थनं च कृत्वा नाडीसन्धानादि कुर्यादित्याह – नाडीति। नाडीसन्धानकृन्मूलेनाष्टाहुतीः कृत्वा बल्यर्चनावृत्त्योः क्षेत्रपालादि-बल्यावरणस्य निर्माल्यधार्यादिपूजावरणस्य च संहारक्रमेणाज्याहुतिं चरेत्।

**पुरः कोपतत्त्वेन तद्वत्यशेषे ततः क्ष्मादिकाव्यक्तपर्यन्ततत्त्वैः।**
**कृशान्वादिहृत्पुण्डरीकावसानैर्विशेषान्वितैः स्वैर्हुनेच्चेषुतत्त्वैः ॥ ४६ ॥**

**जुहोतु यक्षादिषु पञ्चतत्त्वैरुद्घातवृत्त्यैकश एव वान्यैः।**
**सर्वेषु वैतैर्न्निजपञ्चतत्त्वैरेवाचरत् तत्त्वहुतं विपश्चित् ॥ ४७ ॥**

यक्षादिषु शिवप्रकृतिषु तत्त्वहोमे पञ्चतत्त्वैरुद्घातावृत्त्याद्यैरेकश एव वा सर्वेष्वपि निजनिजपञ्चतत्त्वैरेव वा तत्त्वहुतमाचरेत्।

**सूत्रच्छिदाकर्मणि हुंफडन्तान्युक्तानि तत्त्वानि न चापरत्र।**
**तथैव निष्क्रामणकर्मवर्जं विशेषवत्त्वं न च पञ्चसूक्तम् ॥ ४८ ॥**

**सर्वत्राप्यन्त्यतत्त्वेन पूर्वसंख्यं हुनेद् घृतम्।**
**पूर्णाहुतिस्तु सर्वत्र प्रतितत्त्वमिहेष्यते ॥ ४९ ॥**

सर्वत्राप्यन्त्यतत्त्वेन पूर्वोक्तसंख्यं घृतं हुनेत्। प्रतितत्त्वं पूर्णाहुतिरपिष्यते।

**कनिक्रदत्स्वस्तिसमुक्तमन्त्रैः**
**सकृत् सकृन्निष्क्रमणे जुहोतु।**
**सूत्रच्छिदायां तु चतुर्गृहीतं**
**वास्तोष्पते प्रत्यगणुद्वयेन ॥ ५० ॥**

**गत्वा गर्भगृहं विधाय परमान्नप्रीणनाद्यं विभो-**
**स्तद्धोमं सुसमाप्य तत्त्वकलशे संपातपातादिकम्।**

कृत्वा स्वस्तिकविष्टरेऽन्तरुपनीयास्थापयेदग्रतो
यात्राद्याहुतिसाधिताज्ययुगलं चास्थाप्य रक्षेत् क्वचित्
।। ५१ ।।

निर्गत्य विप्रान् विदुषः समूह्य प्रसाद्य हेमादिसमर्पणेन।
देवं च तत्त्वन्मनुना प्रणम्य कृताञ्जलिः कर्म निवेदयेत ।।
५२।।

पूजाबिम्बमिदं धातुः स्थापितं पूर्वसूरिभिः।
अनेन दूषणेनाद्य दूषितं चेह वर्तते ।। ५३।।

दुष्टबिम्बस्य चोद्धारः कर्तव्य इति शासनं।
आगमस्य वयं कर्त्तुं व्यवसायमुपास्महे ।। ५४।।

अत्रेदं यदि कर्त्तव्यमागमार्थतया भवेत्।
भवन्तो नोऽनुजानन्तु भवेमाज्ञाकरा वयम् ।। ५५।।

पूजाबिम्बमिदं भानोरित्याद्यूह्यं परेष्विह।
क्रियतामिति तैरुक्ते लोकेभ्यः प्रवदेदिदम् ।। ५६।।

यथैव देवपूजायां विनियुक्तमनिन्दितम्।
द्रव्यं पुष्पादिकं पश्चान्निर्माल्यमिति निन्द्यते ।। ५७।।

एवं बिम्बमदुष्टं यत् पूजायां विनियुज्यते।
तदेव दूषितं पश्चान्निर्माल्यमिति निन्द्यते ।। ५८।।

तस्माद् दुष्टमिदं बिम्बं भवद्भिर्मुक्तसंशयैः।
निर्माल्यबुद्ध्या त्यक्तव्यमिति शास्त्रस्य शासनम् ।। ५९।।

कियन्तं कालमत्रेशः प्रवासवसतिं वसेत्।
मासादूर्ध्वं द्वादशाब्दादर्वाक् कालावधिः स्मृतः ।। ६०।।

**नार्वागूर्ध्वं क्लेशवासं परमेष्ठ्यनुमन्यते।**
**शृण्वन्तु देवताः सर्वाः प्रासादमिममाश्रिताः ।।**
**यदुच्यमानमस्माभिरनुगृह्णन्तु तेन नः ।। ६१ ।।**

**पूर्वैः पूर्वं कृतमिदं देवालयमसारवत्।**
**प्राप्तं कालवशाद् भूयो वयं तत् कर्तुमुद्यताः ।। ६२ ।।**

**कालेनैतावता भूयः प्रासादेऽस्मिन् पुनर्नवे।**
**प्रापयामो वयं सत्यं तदनुज्ञातुमर्हथ ।। ६३ ।।**

**भगवन् वास्त्वभिनवं बिम्बं वा तव शोभनम्।**
**कारयिष्यन्ति ते भक्तास्तदनुज्ञातुमर्हसि ।। ६४ ।।**

**क्लेशवासस्त्वया देव! रोचनीयोऽल्पके गृहे।**
**यावन्नवं शुभं कृत्वा पुनः संस्थापयामहे ।। ६५ ।।**

**जीर्णं बिम्बमिदं देव! सर्वदोषावहं नृणाम्।**
**अस्योद्धारे कृते शान्तिरित्येवं भाषितं त्वया ।। ६६ ।।**

**तत्त्वयाधिष्ठितं देव! उद्धरामि तवाज्ञया।**
**तदुपक्रान्तमस्माभिस्तदनुज्ञातुमर्हसि ।। ६७ ।।**

**देवं समिष्टसरसीरुहमात्रपीठे**
**सङ्कल्प्य सन्निहितमप्ययतत्त्वतारैः।**
**उद्व्याप्य तत्त्वकलशेन ततोऽभिषिच्यो-**
**द्व्याप्य प्रकल्पयतु केवलचिन्मयं तम् ।। ६८ ।।**

**प्रतिध्यानक्रमस्त्वत्र गुरुभिः समुदीरितः।**
**गुरुणाऽम्बासु कृत्स्नं स्याद् ध्येयं बिम्बादि मूर्त्तिपैः ।। ६९ ।।**



ब्रह्मविषयान् मन्त्रान् पठित्वा सूर्यादिविषयानप्येवमूहनीयमित्याह –

पूजाबिम्बमिदं भानोरिति। तत्त्वकलशाभिषेकानन्तरं प्रतिध्यानक्रमः प्रतिलोमेन ध्यानक्रमः ध्यानसङ्कोचनं ध्येयं स्यात्। मूर्तिपैस्तु तत्तद्बिम्बगतव्याप्ति-सङ्कोचनमेव ध्येयम्।

**कृत्वाऽग्रतः पीठममुत्र लौहं**
**संस्कृत्य कुम्भं विधिवत् प्रपूर्य।**
**मूर्त्तिद्वयावाहननिष्ठमत्र**
**कृत्वाऽथ निष्क्रामणमारभेत ॥ ७० ॥**

जीवकलशसम्पादनमाह – कृत्वेति। अथाग्रतो लौहं कुम्भं विधिवत् संपूर्य मूर्तिद्वयावाहननिष्ठं कर्म कृत्वाथ निष्क्रामणमारभेत।

**सम्प्रार्थ्य देवं मनुबिम्बके तत्-**
**सम्पातयुग्मं प्रसमर्प्य भूयः।**
**स्थूलं च सूक्ष्मं च परं च रूप-**
**मावाहयेद्व्युत्क्रमतश्च बिम्बात् ॥ ७१ ॥**

**सर्वत्र गायत्र्यणुमूलतारै-**
**र्वैतैर्जिनार्णांशकृतोपचारैः।**
**पृथक् स्वमूलन्यसनादि कृत्वा-**
**ऽथावाहयेज्जीवमतो दरेण ॥ ७२ ॥**

उद्वासनरीतिमाह – संप्रार्थ्येत्यादि। अथ दरेण शङ्खेनातो बिम्बाज्जीव-मावाहयेत्।

**प्रणवाद्यन्तरुद्‌थैस्तु बिन्दुनादान्तदीपितैः।**
**पञ्चमन्त्रैरजार्कादिष्वावाहनविधिं नयेत् ॥ ७३ ॥**

**प्राणाणुविन्यासविवर्जमत्र**
**कृत्वा हृदो मन्त्रमहोऽभिवाह्य।**

साङ्गीक्रियाद्यं प्रविधाय किञ्चि-
दिष्ट्वा निवेद्य प्रधिनोतु देवम् ।। ७४।।

सुवाससाऽऽच्छाद्य सदर्भदाम्ना
समर्प्य यात्राहुतिजाज्यशेषम्।
उत्थाप्य चोत्तिष्ठमनुप्रजापी
सोष्णीषमूर्धोद्धृतजीवकुम्भः ।। ७५।।
निर्गत्य पर्येत्य च शाकुनाद्यैः
प्रासादमेतल्लघुमण्डपं च।
अन्तर्यथाविध्युपनीय शय्या-
मारोप्य मूलेन समर्च्य रक्षेत् ।। ७६।।

बिम्बोद्धारविधौ सशान्तिकलशं कृत्वाऽग्रतः पावकं
सावित्र्याऽष्टसहस्रमत्र जुहुयाद्दूर्वास्त्रिमध्वाप्लुताः।
भूराद्यैरपि वा पयोद्रुसमिधः सम्पातमेतद्घटे
सिक्त्वा पञ्चभिरष्टशश्च जुहुयात्तत्त्वैः ससम्पातकम् ।। ७७।।

अनेन स्नपयेत् बिम्बं प्राक् पायसनिवेदनात्।
जीवोद्वासनतः पश्चादपि वाऽथोद्धृतिं चरेत् ।। ७८।।

प्रणामः शान्तिवादोऽथ पुण्याहं कौतुकं पुनः।
वासनोद्वासनं बिम्बोद्धारणं पीठशायनम् ।। ७९।।

पुनरुद्वासनं याम्ये शायनं वामपर्ययः।
पुनश्चोद्वासनं तीर्थे नयनं प्रतिपादनम् ।। ८०।।

स्नानं तर्पणमित्येष बिम्बत्यागविधौ क्रमः।
त्यक्त्वा तदीयपीठानि नियुञ्जीत च शिल्पिनः ।। ८१।।

अजार्कादिषु यथोपदेशमावाहनं कुर्यादित्याह – प्रणवेति। क्रियाशेषमाह – प्राणेति। बिम्बोद्धारविषयेऽनेन शान्तिकलशेन पायसनिवेदनात् प्राग् वा जीवोद्वासनात् पश्चाद् वा बिम्बं स्नापयेत्। अथोद्धृतिं चरेत्। बिम्बोद्धारक्रिया-क्रममाह – प्रणाम इति। वामपर्ययो वामतः पर्ययणम्। पुनस्तदॉयपीठादि च त्यक्त्वा शिल्पिनं प्रासादकरणे नियुञ्जीत।

**अथाधिवास्योक्तवदल्पबिम्बं**
**हुत्वा तथाभ्यर्च्य सजीवकुम्भम्।**
**समण्डलं तत् परितो बलिञ्च**
**कृत्वा प्रसन्नापचितिं च कुर्यात् ।। ८२।।**

**अथाल्पगेहे सुविशोधितेऽल्प-**
**पीठं च संशोध्य तथाऽधिवास्य।**
**संरक्ष्य गत्वाऽभिघटं निषद्य**
**तद्रात्रिशेषं गमयेद्विनिद्रः ।। ८३।।**

**कृत्वा विधिं साम्प्रतिकं प्रभाते**
**नान्दीमुखादि क्रमतोऽल्पगेहे।**
**पीठं प्रतिष्ठाप्य ततोऽर्चयित्वा**
**संरक्ष्य तन्मण्डपमभ्युपेत्य ।। ८४।।**

**उद्वास्य बिम्बे महितेऽखिलं तत्**
**नीत्वोक्तवद् बिम्बघटक्रमेण।**
**कृत्वा परावाहनपूजनाद्यं**
**बिम्बं प्रतिष्ठापयतूक्तनीत्या ।। ८५।।**

**निद्राघटस्नपनपश्चिममत्र कृत्वा**
**सम्प्रार्थ्य साधु भगवन्निति सन्नतात्मा।**

**जीवाभिवाहनविधौ कलशेन तेन**
**सिञ्चेत्तदर्हमनुविन्यसनं च कुर्यात् ॥ ८६ ॥**

**भगवन्नल्पगेहेऽस्मिन् वासः क्लेशोऽपि ते विधे।**
**वस्तव्यो भगवंस्तावद्यावद्गेहं समाप्यते ॥ ८७ ॥**

**कारकस्य परामृद्धिमनुजानन्महोदयाम्।**
**भक्तानामनुकम्पार्थमिह त्वं स्थातुंमर्हसि ॥ ८८ ॥**

**स्थूलावाहनपूर्वं यत्पूर्वं कर्माभ्यधायि तत्।**
**सर्वं कुर्याद्गुरुवरस्तुर्याहस्नपनावधि ॥ ८९ ॥**

अथाल्पबिम्बस्थापनरीतिमाह – अथाधिवास्योक्तवदित्यादि। तत्र जीवकलशाभिषेकानन्तरं स्थूलावाहनपूर्वं यत् कर्म पूर्वमभ्यधायि गुरुवरस्तुर्याहस्नापनावधि तत् सर्वं कर्म कुर्यात्।

**बिम्बे गृहे च निष्पन्ने मुहूर्ते चाप्युपागते।**
**बीजावापादि सकलं कुर्यात् पूर्वं यदीरितम् ॥ ९० ॥**

**जलेऽधिवासितं बिम्बं शोधितं चाभिषेकतः।**
**संस्कृते मण्डपे स्विष्टं शयनीयेऽथ शाययेत् ॥ ९१ ॥**

**शोधितेऽल्पालये बिम्बाच्छोधितात् प्रोक्तवर्त्मना।**
**जीवं कलश आदाय तन्न्यसेद् बिम्बपार्श्वतः ॥ ९२ ॥**

**यात्रां कुरुष्व देवेश भक्तानामनुकम्पया।**
**जीर्णमुदधृत्य तद्भक्तैः कल्पितं बिम्बमुज्ज्वलम् ॥**
**तेन गेहं विशाद्येश उत्तिष्ठ चतुरानन॥ ९३ ॥**

**उत्पाट्योक्तवदल्प बिम्बमुल्पीयातो बहिः सन्दहेद्**
**गोसर्पिःस्नपितं तदर्हदहने तद्दारवं चेद् गुरुः।**

**लोहञ्चेद् गुरवे समर्पयतु तद्विद्राव्य यज्वाऽथवा**
**छित्वा नालमिदं विशोध्य सुशुभं तत् कौतुकं कल्पयेत् ।। ९४।।**

अथ मूलप्रासादप्रवेशरीतिमाह – बिम्बे गृहे चेति। एतत्सर्वं सुगममेव। अल्पबिम्बपरित्यागविधिमाह – उत्पाट्योक्तवदिति।

**आधाय प्रतिमाधिवासमधरेद्युस्तत्तदर्हार्हणा**
**होमब्राह्मणतर्पणाद्युपरिषद्पीठाधिवासान्वितम्।**
**अन्येद्युः कृतरत्नकर्मणि समानीय प्रतिष्ठाप्य तत्**
**पीठे बिम्बमथ स्वकीयकलशासेकादिकं चाचरेत् ।। ९५।।**

**इत्थं प्रायः समुद्दिष्टो जीर्णोद्धारक्रमो मया।**
**संकोचादिक्रमः सर्वो ज्ञेयस्तन्त्रसमुच्चयात् ।। ९६।।**

अधिवासितस्य बिम्बस्य प्रतिष्ठाक्रममाह – आधाय प्रतिमाधिवासमिति। मया जीर्णोद्धारक्रम इत्थं तन्त्रसमुच्चयसमुद्दिष्टश्लोकैरेव प्रायः समुद्दिष्टः। सङ्कोचादिक्रमः सङ्कोचप्रकारस्तथा विशीर्णस्याष्टबन्धादेः स्थापनविधिर्महा-बलिपीठमहाध्वजादेश्च जीर्णोद्धारक्रमः सर्वस्तन्त्रसमुच्चयादेव ज्ञेयः।

**स्वतन्त्रकं परनिरपेक्षमादितः**
**प्रतिष्ठितं हरिहरविध्युमादिकम्।**
**समन्वितं स्वपरिषदादि केवलं**
**सुरान्तरान्वितमपि वा यथागमम् ।। ९७।।**

एवं तन्त्रसमुच्चयाख्यग्रन्थशेषतया ब्रह्मादिक्षेत्रपालान्तानां देवानां भूपरिग्रहादिजीर्णोद्धारपर्यन्तां क्रियामभिधाय सामान्येन, विष्णुशिवादिसर्वेषां देवानामप्येकस्मिन्नेव क्षेत्रे देवान्तरस्थापनसम्भवे क्लृप्तिविशेषमाह – स्वतन्त्रकमिति। यदेवम्भूतं हरिहरविध्युमादिकं प्रधानदैवतस्वरूपं मन्त्रिबिम्बमादितः

प्रतिष्ठितं देवान्तरसम्भवेऽपि तत्स्थापनादप्यादित एव प्रतिष्ठितं परनिरपेक्षं न देवान्तरशेषभूतं च भवति तत् स्वतन्त्रकं च ज्ञेयम्। यद्यपि केवलं स्वयमेव वा स्वपरिषदा स्वस्वपरिवारैरेव समन्वितं वा सुरान्तरान्वितमपि वा यथागममागमवशाद् भवति तथापि स्वतन्त्रकमेवेत्यर्थः ।

**तदेकमेवेष्टमभीष्टदिङ्मुखं**
**द्विबह्वपीष्टार्थवशात्तथा यदि।**
**द्वयोर्बहूनामपि वा वृतिर्धरा-**
**परिग्रहादिश्च पृथक् क्रियाक्रमः ।। ९८।।**

तत्तु स्वभीष्टदिङ्मुखमेकमेवेष्टं भवति इष्टार्थवशात्। तथा परनिरपेक्षत्वादियोगेन द्वे बहूनि वा मन्त्रबिम्बानि स्थाप्यन्ते यदि तत्र द्वयोर्बहूनां व यथायोग्यं वृतिराचार्यवरणं स्यात्। धरापरिग्रहादिश्च क्रियाक्रमः सर्वः पृथगेव स्यात्।

**दौवारिकादि सकळाकृति पीठरूपं**
**लिङ्गात्मकं च बहु यन्निलये बहिर्वा।**
**यद्वाहनं स्ववहमूरुगतास्य देवी**
**या पीठगापि तदिदं निखिलं तदङ्गम् ।। ९९।।**

स्वतन्त्रस्य देवस्य तदङ्गभूतानां परिवाराणां नियमं तत्क्रियाक्रमं चाहदौवारिकादीति। अस्य देवस्य तेषु परिवारेषु मध्ये निलये प्रासादे वा बहिर्भागे वा दौवारिकादि सकलाकृति सावयवं रूपं यत् लोकपालादिपीठरूपं च यत् मात्रादिलिङ्गरूपं च यत् बहु भवति यत्तु पुनः स्ववहं वोढव्येन देवेन युक्तं वाहनं गरुडर्षभादि; अस्य देवस्योरुगता पीठगा वा देवी च या तदिदं निखिलं तदङ्गं तदङ्गमिति प्रसिद्धमित्यर्थः।

**बिम्बग्रहे सह तदङ्गमिदं गृहीत्वा**
**तच्छोधनादिसमयेऽस्य च शोधनानि।**

**तन्मण्डपेऽधिवसनं च निजोक्तरीत्या**
**कुर्यात् प्रतिष्ठितिमवस्रुतसेचनं च ।। १०० ।।**

उक्तमिदं तदङ्गं निखिलं देवस्य बिम्बपरिग्रहे तेन सह गृहीत्वा तच्छोधनादिसमये तदा तदास्य तदङ्गस्य च शोधनादि कुर्यात्। तन्मण्डपे तस्य स्वतन्त्रस्य मण्डपे एवाधिवासनं तत्प्रतिष्ठानन्तरं स्वस्वस्थाने निजोक्तनीत्या प्रतिष्ठितिं तत्कलशस्नानानन्तरमवस्रुतसेचनं च कुर्यात्।

**देवाभिषेकसमयेऽस्य तु वाहनस्य**
**स्यात् पीठवत् स्नपनमत्र तु शेषतोयैः।**
**देव्या विधेयमथ पीठगता तु सा चेत्**
**सर्वं पृथग्वितनुयात् तनुभाक् तु कर्म ।। १०१ ।।**

वाहनं स्याद् यदि देवाभिषेकसमयेऽस्य वाहनस्य तु तच्छेषतोयैः पीठवदेव स्नपनं स्यात्। अङ्कगताया देव्याश्च तथैव स्नानं विधेयम्। अथ पीठगता सा देवी चेत् तनुभाक् कर्मबिम्बसम्बन्धिकं सर्वं कर्म पृथग् विधेयमेव।

**देवीवाहनयोः सहैव सकलं केतोस्तदह्नोऽत्यये-**
**ऽप्येवं कर्म दिनान्तरे वितनुयाद् भूतेन्द्रपीठस्य तु।**
**एवं वाऽथ दिशा हुतोक्तविधया वेन्द्रादिपीठादयः**
**स्थाप्याः स्वास्पदशोभिता अपि तुरीयेऽह्णीरितं प्रोक्षणम् ।। १०१ ।।**

देवीवाहनयोस्तत्सकलं कर्म प्रधानेन देवेन सहैव वितनुयात्। केतोस्तदह्नोऽत्यये तद्दिनमतीत्य वा दिनान्तरे चतुर्थदिवसस्नानमतीत्य दिनान्तर मुहूर्ते वा। एवं केतुस्थापनोक्तं कर्म वितनुयात्। भूतेन्द्रपीठस्य तु एवं वा। अथ दिशाहुतोक्तविधया दिशाहोमोक्तविधानेनेन्द्रादिपीठादयः लोकपालमात्रदयः स्वास्पदशोधिताः स्वस्य स्वस्य स्थाने एव यथोक्तप्रकारेण शोधिता अपि

स्थाप्याः स्युः। तुरीयेऽह्नि प्रोक्षणं सर्वेषामपीरितमेव।

**अङ्गाशुद्धौ देवशुद्धौ तु शेषैः**
**शुद्धिः कार्यावस्रुतप्रोक्षणान्ता।**
**केतोः कुर्यात् सप्तशुद्धिर्विशेषाद्**
**भूतेशादेर्गव्यसंप्रोक्षणं वा ।। १०३।।**

अत्राङ्गाशुद्धौ अङ्गानां परिवाराणामशुद्धौ सत्यां देवशुद्धौ देवस्य शुद्धिकाले तु तच्छेषैर्द्रव्यैः शुद्धिः अवस्रुतप्रोक्षणान्ता कार्या। केतोर्भूतेशादेर्महापीठादि-प्रधानपरिवाराणां च देवशुद्धेः पुरैव विशेषाद् दोषानुसारेण सप्तशुद्धीर्गव्यसंप्रोक्षणं वा कुर्यात्।

**रूपाणि स्वानि विष्णोरजहरधनदाद्याश्च तत्संमुखाः स्यु-**
**स्तत्तद्द्वाराविरोधाहितभवनजुषः शास्त्रतः साङ्गमेतत्।**
**तत्कर्मण्येव वास्याखिलमपि तनुयात् कर्म कालान्तरे वा**
**नास्यान्यो मण्डपो नाङ्गमपि न तदशुध्याऽस्ति देवेऽपि दोषः।।**
**१०४।।**

स्वतन्त्रस्यैव देवस्य साङ्गाभिधदेवान्तरयोगे क्लृप्तिमाह – रूपाणीति। विष्णोः क्षेत्रे स्वानि रूपाणि मत्स्यकूर्मवराहादीनि वा, अजहरधनदाद्या मूर्तयो वा तत्सम्मुखास्तस्य विष्णोराभिमुख्येन युक्तास्तद्द्वाराविरोधाहितभवनजुषः। स्वस्वद्वारस्याविरोधेन कल्पितेषु ध्वजयोन्यादिषु प्रासादेषु प्रतिष्ठिता यदि स्युस्तर्हि एतच्छास्त्रतः शास्त्रोक्तत्वात् साङ्गमिति प्रसिद्धं भवति। तस्य साङ्गस्य तत्कर्मण्येवाखिलमपि कर्म तनुयात्। अथवा कालान्तरे तनुयात्। तस्यान्यो र्मण्डपादिर्न भवतीति। अस्याङ्गान्तरं दौवारिकाद्यपि न भवति। तदशुद्ध्या देवे दोषोऽपि न भवति।

**साङ्गं विधीयते त्वेवं शिवाद्यायतनेष्वपि।**

**स्वाग्रतः स्वाधिवासादिरपि वा देवमण्डपे ।। १०५।।**

शिवाद्यायतनेष्वपि एवमुक्तप्रकारेण साङ्गं विधीयत एव। अस्य स्वाग्रतोऽधिवासादिर्भवेत्। अपि वा देवस्य प्रधानस्य मण्डपे स्यात्।

**दौवारिकाद्यङ्गयुतस्य तादृक्**
**स्थाप्येत चेदायतने तदेतत्।**
**साङ्गान्तरं विक्रियते विहाराः**
**स्वे मण्डपे त्वेव तदाधिवासः ।। १०६।।**

दौवारिकादिसकलांगयुतस्यायतने तादृक् दौवारिकाद्यगयुतं देवान्तरं स्थाप्यते चेत् तदेतदपि साङ्गान्तरमेव स्यात्। तत्रहारा अन्तहारा विक्रियते उभयोरपि साधारणत्वेन भवेत्। प्रधानस्यापि तस्य स्वे मण्डप एवाधिवासः।

**वृतिर्गुरोरिहैकस्य प्रधानस्यैव भूग्रहः।**
**कार्यो राक्षोघ्नहोमादिर्न्नाना वा पृथगुत्सवः ।। १०७।।**

इह गुरोर्वृतिरेकस्य प्रधानस्यैव स्यात्। भूमिपरिग्रहोऽपि प्रधानस्यैव कार्यः। राक्षोघ्नहोमादिर्विधिर्नाना पृथग् वा स्यात्। उत्सवस्तु पृथगेव स्यात्।

**यद्येकस्यायतने स्वाङ्गैः सहितः परोऽथ रहितो वा।**
**स्वातन्त्र्येण स्थाप्यस्तदिदमिह निरङ्गमुद्दिष्टम् ।। १०८।।**

निरङ्गलक्षणमाह – यदीति। एकस्यैव देवस्यायतने स्वाङ्गैः सकलैः सहितो वा रहितो वा अपरो देवः स्वातन्त्र्येण स्थाप्यो यदि तदिह निरङ्गमुद्दिष्टं स्यात्।

**नानैवेतीह राक्षोघ्नहोमादिरपि चोदितः।**
**निरङ्गान्तरमेवैतद्यत्प्रागुक्तं स्वतन्त्रकम् ।। १०९।।**



इह तु राक्षोघ्नहोमादिर्नाना पृथगेव चेत् चोदितः स्यात् यत् प्राक् प्रथमं

स्वतन्त्रकं परनिरपेक्षमित्यादिश्लोकोक्तमेतदपि निरङ्गान्तरमेव स्यात्।

**सरस्वती कस्य हरेरळिन्द-**
**धाम्न्येव लक्ष्मीरुपधाम्नि वा स्यात्।**
**शम्भोरुमा चैव तदेतदङ्गं**
**साङ्गं तु वा कर्म भवेद् यथास्वम् ।। ११० ।।**

कस्य ब्रह्मणः सरस्वती अलिन्दभुवि वा उपधाम्नि वा स्यात्। तथा हरेर्लक्ष्मीः, तथा शम्भोरुमा च। तदेतदङ्गं वा साङ्गं वा तत्र यथास्वं कर्म भवेत्।

**यदा बहिर्धाम्नि तदापि साङ्गं**
**तत्सम्मुखं तत्समदिङ्मुखं वा।**
**तदापि देवेन सह प्रतिष्ठां**
**कालान्तरे वा विधिवद् विदध्यात् ।। १११ ।।**

यदा च बहिर्धाम्नि अन्तर्मण्डलाद् बहिः प्रासादे भवति तदपि तत्संमुखं वा तत् समदिङ्मुखं वा भवेत्। तदपि साङ्गमेव। तदपि देवेन सहैव वा कालान्तरे वा विधिवत् स्वोक्तक्रमेणैव प्रतिष्ठां विदध्यात्।

इति शेषसमुच्चये षष्ठः पटलः।

# अथ सप्तमः पटलः।

**अथ स्वतन्त्रस्य यदग्रतः स्यात्**
**साङ्गं निजाङ्गैर्निखिलैरुपेतम्।**
**प्रधानपृष्ठोचितमण्डपं तद्**
**भिन्नं विदुर्नैवमिदं स्वतन्त्रम् ।। १ ।।**

अथ रुरुजिद्गिरिशादिरूपाणीत्यादित एव प्रसक्तानां शिवैकवेरीमातृक्षेत्रपालानां यौगपद्येनैकस्मिन्नायतने स्थापनप्रदर्शनार्थं "मातृसद्भावा" द्यागमोक्तक्रियाक्रमं वदन् स्वतन्त्रादिभेदांश्च योजयन् भिन्नलक्षणमाह – अथ स्वतन्त्रस्येति। अथ स्वतन्त्रस्य देवस्याग्रतो निखिलैर्निजाङ्गैर्दौवारिकादिभिरुपेतं साङ्गं यत् स्यात् प्रधानपृष्ठोचितमण्डपं प्रधानस्य स्वतन्त्रस्य पृष्ठे निजोचितलक्षणयुतमण्डपयुक्तं तद्भिन्नं विदुर्बुधाः। एवम्भूतमिदं सुरान्तरान्वितमित्युक्तं स्वतन्त्रं न स्यात् ।

**स्यात्प्रागास्यः स्वतन्त्रः स्मरजिदिह पुरो**
**दक्षिणे पश्चिमास्या**
**चामुण्डा स्याच्च भिन्ना नमुचिरिपुदिगा-**
**स्या निरंगैव वाऽथ।**
**देवस्यास्यास्तु वा याम्यदिशि शशिदिगा**
**स्या जनन्योऽपि साङ्गा-**
**स्तत्प्राक् सा वेह साङ्गानलदिशि निखिला**
**मातरो वेह भिन्नाः ।। २ ।।**

तेषां स्थापने नियममाह – स्यादिति। इह स्वतन्त्रः स्मरजित् शिवः प्रागास्यः स्यात्। तस्य पुरोऽग्रभागे दक्षिणभागे भिन्ना चामुण्डार पश्चिमास्या च स्यात्। अथवा तत्रैव नमुचिरिपुदिगास्या पूर्वाभिमुखा निराङ्गा स्यात्। देवस्य शिवस्य वा अस्याश्चामुण्डाया वापि याम्यदिशि, शशिदिगास्या उत्तराभिमुखा जनन्यो मातरः साङ्गाः स्युः। इह तत्प्राङ् मातृणां पूर्वभागे सा चामुण्डा साङ्गा वास्य शिवस्यानलदिशि निखिला मातरो भिन्ना वा स्युः। तथोक्तं "मातृसद्भावे" –

"उत्तराभिमुखं साङ्गं निरङ्गं प्राङ्मुखं भवेत्।
पश्चिमाभिमुखं भिन्नमिति त्रेधा निगद्यते"।।

इति।

**वृतो गुरुर्गिरिशकृते गृहीतभूः**
**सुकृष्टतत्तलपृथगाहितावटः।**
**शिवोक्तवत्तदवटशार्ववेदिषु**
**क्रमाद्यजेत् पृथगथ वास्तुदेवताः ।। ३ ।।**

तत्र क्रियाक्रमं दर्शयति – वृत इति। गिरिशकृते शिवोक्तक्रमेण वृतो गृहीतभूस्तथैव कृतभूमिपरिग्रहश्च भवन् गुरुः सुकृष्टतत्तलपृथगाहितावटः सुतरां कर्षणादिकृते भूतले पृथक् पृथक् कृतगर्तो वपेत्। पुनस्तदवटशार्ववेदिषु तेषामवटानां शार्वकोणस्थवेदिषु क्रमाच्छिवचामुण्डादिक्रमेण पृथक् शिवोक्तवदेव वास्तुदेवता यजेत्।

**ब्रह्मा दिश्याश्च भैरव्यां सावित्राद्याश्च कोणगाः।**
**ईशानाद्यास्ततः शर्वस्कन्दाद्याश्चेति वा क्रमः ।। ४ ।।**

क्रमे पक्षभेदमाह – ब्रह्मेति। भैरव्यां पूर्वं मध्ये ब्रह्मा, पुनर्दिश्या आर्यकाद्याः, पुनः कोणगाः सावित्राद्याः, ततः ईशानाद्याः पुनः शर्वस्कन्दाद्या इति वा क्रमः

स्यात्।

**निधिकलशकमलकच्छपविन्यासोऽवटतलेषु शैवोक्तः।**
**कार्यो मातृषु तु पुनश्चामुण्ड्यां नवसु वार्थना तु सकृत् ।। ५ ।।**

ततोऽवटतलेषु तेषु शैवोक्तः शिवोक्तवदेव निधिकलशकमलकच्छपविन्यासः निधिकलशादीनां विन्यासः कार्यः। तत्र मातृषु तु पुनश्चामुण्ड्यां च चामुण्डास्थापनस्थान एव वा नवसु स्थानेष्वपि वा कार्यः। अर्थना तु पक्षद्वयेऽपि प्रार्थना सर्वावसाने सकृदेव स्यात्।

**द्वारामवामे प्रथमेष्टकानां न्यासं विदध्याज्जननीष्ववामा।**
**द्वार्गृह्यतामत्र हुतं विदध्यात् कृतेष्टकातत्कलशाधिवासः ।। ६ ।।**

पुनरन्यस्मिन् मुहूर्ते द्वारां द्वाराणां अवामे दक्षिणे पार्श्वे प्रथमेष्टकानां यथोक्तानामिष्टकानां न्यासं विदध्यात्। जननीषु द्वारत्रये सत्यवामा दक्षिणा द्वाः गृह्यताम् परिगृह्णीयात्। अत्र गुरुः कृतेष्टकातत्कलशाधिवासो भूत्वा हुतं विदध्यात्।

**पक्वाधस्तान्नवलिपितदर्णैर्जुहोत्वाज्यमूर्ध्वे**
**ह्रों ह्रेमाद्यैर्भुवनपतिना पञ्चभिर्ब्रह्मभिश्च।**
**गायत्र्याऽथो हुतयतु चतुर्द्रव्यमाज्यं च देव्यां**
**व्याहृत्यादिद्विनवनमनुभी रुद्रवत् सर्वमन्यत् ।। ७ ।।**

अत्र होमे देव्यामेकवेर्यां पक्वाधस्तात् पक्वहोमात् पूर्वं नवलिपितदर्णैः नवाक्षरमन्त्रेण तदक्षरैश्चाज्यं जुहोतु। पक्वहोमादूर्ध्वं ह्रों ह्रेमाद्यैः ह्रों स्वाहा इत्याद्यैः ह्रस्वैः स्वैः पञ्चभिः भुवनपतिना शक्त्या पञ्चभिर्ब्रह्मभिश्चाज्यं जुहोतु। अथो गायत्र्या चतुर्द्रव्यं हुतयतु हुतं कुर्यात्। पुनर्व्याहृत्यादिद्विनवमनुभिः भूस्स्वाह इत्याद्यष्टादशमन्त्रैराज्यं हुतयतु अन्यत् सर्वं रुद्रवदेव।



**चतुर्व्याहृतयो दिक्पा दशाग्निः सोम एव च।**

**सर्वाश्च देवता विश्वे देवाश्च द्विनवाणवः ।। ८ ।।**

अष्टादशमन्त्रानाह – चतुर्व्याहृतय इति। चतस्रो व्याहृतयः दिक्पा इन्द्राद्या दश, अग्निः अग्नये स्वाहा, सोम एव च, सोमाय स्वाहा, सर्वाश्च देवताः, सर्वाभ्यो देवताभ्यः स्वाहा, विश्वेदेवाश्च, विश्वेभ्यो देवेभ्यः स्वाहा इति। द्विनवाणवः अष्टादशमन्त्राः।

**नवार्णं प्राङ्मुखस्तिष्ठन् जपित्वैकादशावरम्।**
**अग्निमुद्वासयेत् सद्य कलाभिश्चेष्टकां न्यसेत् ।। ९ ।।**

**शिवे स्वोक्तमेवेष्टकागर्भकर्मा-**
**खिलं मातृषु त्वेकवीर्यामिव स्यात्।**
**पराः पर्यगन्तस्तु चामुण्डिकाऽर्च्या**
**जिनार्णेन गाणेन च द्रव्यहोमम् ।। १० ।।**

इष्टकास्थापनरीतिमाह – नवार्णमिति। शिवादिषु विशेषमाह – शिव इति। शिवे इष्टकागर्भकर्म इष्टकान्यासकर्म गर्भन्यासकर्म च स्वोक्तं तन्त्रसमुच्चयोक्तमेव; मातृषु तु तदखिलमेकवीर्यामिव स्यात्। अत्रान्तश्चामुण्डिका परा अन्याः पर्यक् परितश्चार्च्याः। अयमेव सामान्यन्यायः। गाणेन जिनार्णेन गणगायत्र्या द्रव्यहोमः स्यात्।

**गर्भाधान रुद्रवत् तत्र होमः**
**कार्यो देव्यामिष्टकोक्तक्रमेण।**
**स्युर्मृन्मूला धातवो रत्नबीजा-**
**लोहाश्च द्रव्याणि षोढेह गर्भे ।। ११ ।।**

देव्यां गर्भाधानं प्रायो रुद्रवदेव। तत्रेष्टकोक्तक्रमेण द्रव्यहोमः कार्यः। ग्रर्भद्रव्याणि कथयति – इह देव्यां गर्भे मृत् मूलं धातवः रत्नबीजलोहाश्च इति षोडश द्रव्याणि स्युः।

**गिरितीर्थनदीह्लदजा**
**दिशि विदिशि कुलीरनाकुखलजाश्च।**
**द्विरदरजा अपि मृदो**
**मध्येऽर्णववृषविषाणजान् न्यसतु ।। १२।।**

तत्र दिशि दिक्षु गिरितीर्थनदीह्लदजा मृदः, विदिशि विदिक्षु कुलीरनाकुखलजाता द्विरदरदजाश्च मृदः, मध्ये अर्णवविषाणजे समुद्रजाः वृषश्रृङ्गजाश्च द्वे मृदौ न्यसतु।

**कमलस्य तथा नीलोत्पलस्य कुमुदस्य च।**
**रक्तोत्पलस्य च न्यस्येद् दिक्षु मूलान्यपि क्रमात् ।। १३।।**

पुनश्चत्वारि कमलादीनां मूलानि पूर्वादिदिक्षु न्यस्येत्। पुनर्मनः शिलादीनि नव धातूनि दिक्षु मध्यतश्च न्यस्येत्। यथा वज्रादीनि नव रत्नानि तथा शाल्याद्यष्ट बीजानि दिक्षु मध्ये राजीन् वा तिलान् वा न्यस्येत्।

**मनःशिलां हरीतालमञ्जनं श्यामसीसके।**
**सौराष्ट्रीं रोचनां दिक्षु गैरिकं मध्यतो रसम् ।। १४।।**

**वज्रवैडूर्यगोमेदशङ्खपुष्येन्दुकान्तकम्।**
**क्रमाद् दिक्ष्विन्द्रनीलार्ककान्तं मध्येऽब्जरागकम् ।। १५।।**

**शालिनीवारकश्यामकङ्कुमाषकुलस्थकान्।**
**दिक्षु निष्पावमुद्गांश्च मध्ये राजीन् तिलांश्च वा ।। १६।।**

**दिक्षु हिरण्यं रजतं**
**ताम्रायांसि विदिक्ष्वथ त्रपु च।**
**हैमं कूर्माब्जशूलमन्त-**
**वृषखट्वाङ्गार्धचन्द्रपरशुधनुः ।। १७।।**

[1]पुनर्दिक्षु हिरण्यरजतताम्रायांसि चत्वारि। अथ विदिक्षु पूर्वमग्निकोणे त्रपु अन्यकोणेषु हैमं हेममयं कूर्ममब्जं शूलं च। अन्तः वृषं खट्वाङ्गमर्धचन्द्रं परशुं धनुश्च न्यस्येत्।

**नवार्णतो न्यसेत् सर्वं गव्येनोक्षेज्जिनार्णतः।**
**हुत्वा नवार्णसञ्जप्तं तत् पात्रं शिववन्न्यसेत् ।। १८।।**

एतत् सर्वं द्रव्यं नवार्णतो न्यसेत्। गव्येन जिनार्णत उक्षेच्च। पुनर्हुत्वा संपातं संस्पृश्य नवार्णसञ्जप्तं तत् पात्रं शिववत् शिवोक्तक्रमेण न्यसेत्।

**तत्तद्द्रव्यं मातृषु तत्तद्दिङ्मातृमन्त्रतो न्यसतु।**
**तत्तद्दिशि मन्त्रितमस्तत्तच्छस्त्रं च सौवर्णम् ।। १९।।**

मातृषु देव्यां विहितं तत्तद्द्रव्यं तत्तद्दिशि तत्तद्दिङ्मातृमन्त्रतो न्यसतु। तत्तद्दिशि सौवर्णं तत्तच्छस्त्रं च न्यसतु।

**गव्येन गणगायत्र्या प्रोक्षेद्धुत्वा नवाक्षरम् ।**
**मातृवर्णांश्च सञ्जप्य न्यसेद् गर्भं विधानवित् ।। २०।।**

पुनर्गव्येन गणगायत्त्र्या प्रोक्षेत्। पुनर्हुत्वा संपातं संस्पृश्य नवाक्षरं मातृमन्त्रांश्च सञ्जप्य विधानविद् गुरुर्गर्भं न्यसेत्।

**प्रासादबिम्बेषु कृतेषु साङ्गेष्वथ प्रतिष्ठादिवसे च तज्ज्ञैः।**
**प्रकल्पिते मङ्गलबीजवापं पृथग् विदध्याद् गुरुरैशधाम्नि ।। २१।।**

अथ प्रासादेषु बिम्बेषु च साङ्गेषु अङ्गैः परिवारैश्च कृतेषु सत्सु

१. एतन्मूलपाठो भाषाव्याख्याख्यायुते संस्करणे - इत्थम् :–
दिक्षु हिरण्यरजतताम्रायांसि; विदिक्ष्वथ त्रपु च हैमम्।
कूर्माब्जशूलमन्तर्वृषखट्वाङ्गार्धचन्द्रपरशुधनुः ।।

तज्ज्ञैर्मौहूर्तिकैः प्रतिष्ठादिवसे च प्रकल्पिते गुरुः स्वयं ऐशधाम्नि ईशभागस्थिते गुहे मङ्गलबीजवापं विदध्यात्।

**शिवस्याङ्कुरधाम्न्येव शिवस्य च रुरुद्विषः।**
**स्वदिक्क्रमाद् विधेयं स्यान्मातृणां चाङ्कुरार्पणम् ।। २२।।**

तत्र शिवस्याङ्कुरालये एव स्वदिक्क्रमात् स्वस्वस्थाने शिवस्य रुरुद्विषो देव्या मातृणां चाङ्कुरार्पणं विधेयं स्यात्।

**शैवानि बीजानि सराजमाषाण्यश्याममाषाणि नवैव तु स्युः।**
**सप्तार्णतो दुग्धसगन्धतोयैः संक्षालनं स्याद् वपनं च सेकः ।। २३।।**

तत्र तन्त्रसमुच्चये शिवस्योक्तेषु बीजवापद्रव्येषु शिवस्य देव्या मातृणां च सराजमाषाणि राजमाषसहितानि अश्याममाषाणि च श्याममाषाभ्यां रहितानि नवैव तु बीजानि स्युः। शिवे देव्यां मातृषु च सप्तार्णतो दुग्धसगन्धतोयैर्दुग्धेन गन्धतोयैश्च (सं) क्षालनं स्यात्। वपनं सेकः सेचनं च तेन स्यात्।

**सप्तार्णस्य ध्रुवः शक्तिर्हृच्चतुर्थ्यन्विता शिवा।**
**शिववद् बलिकर्मैवं मातृणामपि कीर्तितम् ।। २४।।**

अत्र पालिकाघटिकाशरावेषु क्रमेणैकवीरीवीरभद्रामातरो देवताः। सप्तार्णमन्त्रमाह – सप्तार्ण इति। ध्रुवः शक्तिः हृत् नम इति चतुर्थीविभक्त्यन्विता। शिवाशब्दश्च देव्याम्। मातृणामपि शिववदेव बलिकर्म कीर्तितं स्यात्।

**शिवैकवेरीमातृणां स्थापनीयोऽग्रतो ध्वजः।**
**प्राक् तुर्येऽह्न्यधिवासाह्नः कार्यो बिम्बपरिग्रहः ।। २५।।**

शिवैकवीरीमातृणां स्वस्वाग्रतो ध्वजः स्थापनीयः स्यात्। अधिवासाह्नः प्राक् तुर्येऽह्नि बिम्बपरिग्रहः कार्यः।

**प्रासादसंमुखसुशायितबिम्बदृष्टिं**
**दौग्धान्नदिक्कृतबलिस्तपनीयसूच्या।**
**उल्लिख्य हेमचषकाहितमाक्षिकाज्ये-**
**नाथो विधापयतु तक्षभिरक्षिमोक्षम् ।। २६ ।।**

बिम्बपरिग्रहे सामान्यकर्मतः क्रियाविशेषमात्रमाह – प्रासादेति। दुग्धान्नदिक्कृतबलिः दौग्धेनान्नेन देवताभ्यः पितृभ्यः इति मन्त्रेण बिम्बस्य परितो दिक्षु बलिदानानन्तरं प्रासादसम्मुखतया सुखेन शायितस्य बिम्बस्य दृष्टिं तपनीयसूच्या हैम्या सूच्या हेमचषके आहितेन माक्षिकसहितेनाज्ये-नोल्लिख्याथो तक्षभिरक्षिमोक्षं विधापयतु कारयतु।

**कर्त्रैतत् प्रार्पितमथ गृहीत्वोत्तमाङ्गेऽस्य राजी-**
**दूर्वापुष्पाक्षतमभिनिदध्यात् स्वमन्त्रेण मन्त्री।**
**शर्वे स्वोदीरितमखिलमम्बासु सर्वं तदेत-**
**च्चामुण्डायामिव चरतु भाविक्रमात् स्थापितासु ।। २७ ।।**

अथ कर्त्रा प्रार्पितमेतद् देवीबिम्बं गृहीत्वाथास्योत्तमाङ्गे राजीदूर्वापुष्पाक्षतं मन्त्री स्वमन्त्रेणाभिनिदध्यात् विकिरेत्। शर्वे च स्वोदीरितमखिलमभिनिदध्यात्। भाविक्रमाद् वक्ष्यमाणरीत्या स्यापितास्वम्बासु तदेतत् सर्वं चामुण्डायामेकवीर्यामिव चरतु।

**सम्प्रोक्ष्य माक्षिकयुतेन घृतेन सिक्त्वा**
**संशोधयेच्च पयसा भसितेन चूर्णैः।**
**क्वाथेन मृद्भिरपि सास्त्रनिजाणुजापी**
**चूर्णैश्च गन्धसलिलैः कुशलः क्रमेण ।। २८ ।।**

संप्रोक्ष्य माक्षिकयुतेन घृतेन सिक्त्वा पय आदिभिः सास्त्रनिजाणुजापी अस्त्रसहितं स्वमन्त्रञ्जपन् शोधयेत्।

**वटाम्रोदुम्बराश्वत्थमधूकब्रह्मबिल्वजाः।**
**शिरीषपनसोत्थे च त्वचस्तत्तोयजं पयः ।। २९।।**

पय आदीनां वृक्षानाह – वटेति। एषां त्वचं गृहीत्वा तत्तोयजं पयो ग्राह्यम्।

**ताभिस्त्वग्भिः कृताश्चूर्णाः क्वाथाम्भस्तत् सुसाधितम्।**
**ताभिश्च सकरीषाभिः सुदग्धं भसितं स्मृतम् ।। ३०।।**

**वृषेभश्रृङ्गवल्मीकनदीतीर्थचतुष्पथात्।**
**वेद्याश्च स्युर्मृदश्चूर्णाः स्वर्णगोधूमशालिभिः ।। ३१।।**

**यवमुद्गनिशाभिश्च ततो वासोयुगेन तत्।**
**गन्धाद्यैरप्यलङ्कृत्य बध्वा कौतुकमस्त्रतः ।। ३२।।**

**नीराज्य नीत्वा सलिले यथाविध्यधिवासयेत्।**
**शिवे स्वोक्तवदम्बासु चामुण्डायामिव क्रमः ।। ३३।।**

ताभिरेव त्वग्भिश्चुर्णाश्च ग्राह्याः। तत्सुसाधितमेव कषायं, सकरीषाभिस्ताभिर्दग्धं भसितं, वृषश्रृङ्गादिभ्यो मृदो ग्राह्याः। अपरचूर्णान्याह – चुर्णाः स्वर्णेत्यादि। शोधनानन्तरं वासोयुगेन गन्धाद्यैरप्यलङ्कृत्यास्त्रत कौतुकं बद्ध्वा नीराज्य जलाशयं नीत्वा सलिले यथाविध्यधिवासयेत्। शिवे स्वोक्तवदेव। अम्बासु चामुण्डायामिव च शोधयित्वाथ जलेनाधि वासयेत्।

**रुद्रादिधाम परिगृह्य दिने तदर्हे**
**संशोधयेदिह समैव तु मुष्टिरस्त्रम्।**
**राक्षोघ्नवास्तुहुततद्बलयः शिवस्यै-**
**वांबालयेऽपि विनियुज्यत एव शेषम् ।। ३४।।**



प्रासादशुद्धौ सामान्यतो विशेषमात्रमाह – रुद्रादीति। तदर्हे दिने रुद्रादिधाम

शिवादिप्रासादान् परिगृह्य संशोधयेत्। इह तु साधारणैव मुष्टिः, अस्त्रं च साधारणम्। अघोरं पाशुपतं वा। अस्त्रकलशाः प्रतिप्रासादं पूज्याः, राक्षोघ्नवास्तुहुततद्बलयः शिवस्यैव वा यदा तदा तत्तच्छेषोऽम्बालये देव्या मातृणामप्यालये विनियुज्यत एव।

**सर्वं पृथग् यदि तु मातरि मार्गजाज्या-**
**न्नाज्यं शमीघृतहविर्घृतदौर्व्यगव्यम्।**
**स्याद्धोमयोश्चरमयोस्तु मनुर्नवार्णो**
**न ब्रह्मभिस्त्विह हुतं जननीषु वैवम् ।। ३५ ।।**

तत्र सर्वं प्रासादशुद्धिहोमादिकं पृथक् क्रियते यदि मातर्येकवेर्यां होमयोर्द्वयोर्मध्ये राक्षोघ्नहोमे मार्गजाज्यान्नाज्यं चतुष्कं द्रव्यं, वास्तुहोमे शमीघृतहविर्घृतदौर्व्यगव्यं द्रव्यषट्कं स्यात्। चरमयोर्द्रव्ययोदौर्व्यगव्ययोर्नवार्णो मनुः स्यात्। इह पञ्चभिर्ब्रह्मभिर्हुतं न स्यात्। जननीष्वप्येवं वा स्यात्।

**शिवादीनां तु पुरतो मण्डपाः स्युर्यथागमम्।**
**तदीशदिङ्मण्डपेषु बिम्बशुद्धिघटार्चनम् ।। ३६ ।।**

शिवादीनां पुरतो यथागमं मण्डपाः स्युः। तदीशादिङ्मण्डपेषु तेषां मण्डपानामीशदिग्गतेषु मण्डपेषु बिम्बशुद्धिघटार्चनं स्यात्।

**पञ्चैकवीर्यां नव वेतरासु तु पञ्च पञ्चाथ नवैव तु स्युः।**
**द्रव्याणि तासु प्रतिमाविशुद्धौ शुद्धोदकाढ्यान्यपि केवलानि**
**।। ३७ ।।**

प्रतिमाविशुद्धौ एकवीर्यां पञ्च वा नव वा द्रव्याणि स्युः। इतरासु मातृषु पञ्च पञ्च वा; अथ नवैव वा स्युः। तासु देव्यां मातृषु च शुद्धोदकाढ्यानि केवलान्यपि वा स्युः।



**दिक्षु स्युः क्वथितं गव्यं भस्म मृन्मध्यतः पुनः।**

**रक्तचन्दनसम्मिश्रमष्टगन्धजलं भवेत् ।। ३८ ।।**

तत्र मातरि पञ्चद्रव्यपक्षे दिक्षु क्वथितं गव्यं भस्म मृच्च, मध्यतो रक्तचन्दनसंमिश्रमष्टगन्धजलं भवेत्।

**गोमूत्रक्षीरदध्याज्यं दिक्षु गव्यं च मध्यतः।**
**मातर्येवमथावृत्तिर्नवधा मातृषूभयोः ।। ३९ ।।**

अथवा दिक्षु गोमूत्रक्षीरदध्याज्यानि मध्यतो गव्यं च स्यात्। मातृषूभयोः पञ्चकयोरेव नवधा वृत्तिर्भवेत्।

**दिक्षु क्वाथादि कोणेषु गोमूत्राद्युदितं क्रमात्।**
**पञ्चगव्यं भवेन्मध्ये मातृष्वेतद्विधीयते ।। ४० ।।**

मातृषु नवद्रव्यपक्षे दिक्षु क्वाथादि चत्वारि, कोणेषु गोमूत्रादि चत्वारि, मध्ये पञ्चगव्यं च भवेत्। एतन्मातृष्वेवं विधीयते।

**चन्दनागरुचन्द्रासृग्ग्रन्थिकच्चूररोचनाः।**
**मांसी चाशासु मध्येऽमून्यष्टौ मातरि मातृषु ।। ४१ ।।**

मातरि मातृषु च नवद्रव्यपक्षेऽष्टाशासु चन्दनादिमांस्यन्तान्यष्ट मध्येऽमून्यष्टौ सह च।

**पञ्चकं नवकं वापि सर्वैरप्यष्टगन्धकैः**
**भैरव्यां पूरयेन्मातृष्वेतैर्नवकमेव तु ।। ४२ ।।**

अथवा भैरव्यां सर्वैरष्टगन्धकैः पञ्चकंनवकं वा पूरयेत्। मातृष्वेतैरष्टगन्धैर्नवकमेवं पूरयेत्।

**सप्तदशद्रव्यन्यायेनाधायाब्जमत्र पूरयतु।**
**शुद्धजलाढ्यं नवकं पञ्चकमिह कोणखण्डहानेन ।। ४३ ।।**

तत्र सप्तदशद्रव्यन्यायेनाब्जं पद्ममाधायात्र मध्ये शुद्धजलाढ्यं नवकं पूरयतु। इह क्षेत्रकोणखण्डहानेन पञ्चकं च स्यात्।

**पञ्चप्रणवमन्त्रस्य वर्णैः पञ्चकपूरणम्।**
**नवार्णवर्णैर्द्रव्याणां नवकं पूरयेत् क्रमात् ।। ४४।।**

पञ्चप्रणवमन्त्रस्य पञ्चभिर्वर्णैः पञ्चकपूरणं नवार्णवर्णं नवकानां पूरणं स्यात्।

**वाक्शक्तिरिन्दिराव्योम जीवाफाग्न्येलवान्वितम्।**
**जीवसर्गान्वितं व्योम पञ्चप्रणवको मनुः ।। ४५।।**

पञ्चप्रणवमन्त्रमुद्धरति – वागिति। वाक् वाग्भवं ऐमित्यर्थः, शक्तिः; र्भुवनेश्वरी, इन्दिरा श्रीबीजम्। जीवफाग्न्येलवान्वितम् व्योम चतुर्थबीजम्। व्योम हकारः, जीवः सकारः, फकारः, स्वयमेव, अग्नी रेफ, ए इतिस्वयमेव। लवो बिन्दुः, ह्स्फ्रें इति। जीवसर्गान्वितं व्योम पञ्चमं बीजं। सर्गो विसर्गः। जीवव्योमे उक्ते एव। ह्सः इति। एष पञ्चप्रणवो मनुस्यात्।

**भैरव्यां तां समावाह्य पूजयेदथ मातृषु।**
**स्वार्चान्यासक्रमेणैनाः सामावाह्य पृथग् यजेत् ।। ४६।।**

भैरव्यां तां नवार्णेन समावाह्य पूजयेत्। मातृषु स्वार्चान्यासक्रमेण स्नानार्थं भद्रपीठेषु स्थापनक्रमेण एनाः पृथक् स्वस्वमन्त्रेणावाह्य यजेत्।

**मातरि स्वेन हुत्वाज्यं मन्त्रेण स्वैश्च मातृषु।**
**सिक्त्वा कुम्भेषु सम्पातं पूर्वेद्युरधिवासयेत् ।। ४७।।**

देव्यां मातृषु च स्वस्वमन्त्रेणाज्यं हुत्वा संपातं सिक्त्वा तत्स्नानतः पूर्वेद्युरधिवासयेत्।



**परेद्यवि शिवेऽम्बायामम्बास्वपि शिवोक्तवत्।**

**सूत्रस्रग्वेष्टनाद्यां तु कुर्यान्मण्डपसंस्क्रियाम् ।। ४८ ।।**

मण्डपसंस्कारे विशेषमाह – परेद्यवीति। परेद्यवि अधिवासदिने शिवे अम्बायामम्बास्वपि शिवोक्तवदेव सूत्रदर्भमालावेष्टनाद्यां मण्डपसंस्क्रियां कुर्यात्।

**महाविद्यां च गायत्रीं नवार्णं च दशाक्षरम्।**
**युञ्ज्यादादौ क्रमाद् देव्यां नाम्नामन्ते नवाक्षरम् ।। ४९ ।।**

देव्यां भद्रादितोरणाधिपनाम्नामादौ क्रमात् पूर्वादिदिक्षु महाविद्यादिचतुर्मन्त्रान् नामान्ते नवाक्षरञ्च युञ्ज्यात्।

**तैर्मन्त्रैः स्थापयेद् दिक्षु मन्त्री प्लाक्षादितोरणान्।**
**भद्रकोमलसुग्रीववीरभद्रास्तदीश्वराः ।। ५० ।।**

**शूळानि योजयेत् पूर्वमेषां विद्वांस्त्रिवर्णतः।**
**तत्तन्नामान्ततो मातृष्विन्द्राण्या योज्यतां मनुः ।। ५१ ।।**

मन्त्री तैर्मन्त्रैः प्लक्षादिशिवोक्तान् तोरणान् दिक्षु स्थापयेत्। भद्रकोमलाद्यास्तदीशाः। विद्वान् मन्त्रज्ञः, स्थापनात् पूर्वं त्रिवर्णतः शूलानि योजयेत्। मातृषु तत्तन्नामान्ततः भद्रादिनामान्ते इन्द्राण्यां नवाक्षरमन्त्रो योज्यताम्।

**कोटराक्षी विशालाक्षी मुक्तकेशी विभीषणी।**
**गुब्जाक्षी व्योमरूपा च सहस्राक्षी कलेबरी ।। ५२ ।।**

**पूर्वाग्नेयादिकेतूनामधिष्टात्र्यः क्रमादिमाः।**
**वीरभद्रेश्वरावूर्ध्वकेतावीशदिगाश्रिते ।। ५३ ।।**

**स्वनामभिर्नवार्णान्तैरेतैः स्थाप्या नव ध्वजाः।**
**तोरणेषु तदीशाः स्युः पूज्याः केतुषु च क्रमात् ।। ५४ ।।**

**द्वयेभ्यश्च बलिं दद्याद् दिक्पेभ्यश्चाष्टदिक्ष्वपि।**
**द्वौ द्वौ दक्षिणवामासु द्वारशाखासु पूजयेत् ।। ५५ ।।**

**पूर्वादिद्वार्षु मन्त्रज्ञो मण्डपालिन्दगो गुरुः।**
**रक्षको हरिभद्रश्च यमश्चैव यमप्रियः ॥ ५६ ॥**

**श्वेतश्च पिङ्गलश्चैव युगलः कुम्भकर्णकः।**
**द्वे द्वे च द्वारघटयोर्यजेदुक्तक्रमादिमाः ॥ ५७ ॥**

केतुदेवताः पठति – कोटराक्षीति। ईशदिगाश्रित ऊर्ध्वकेतौ वीरभद्रेश्वरौ च। एते ध्वजा नवार्णान्तैः स्वस्वनामभिः स्थाप्याः। तोरणेषु ध्वजेषु च तदीशाः पूज्याः। तद्द्वयेभ्यः इन्द्रादिदिक्पेभ्यश्चाष्टदिक्षु बलिं दद्यात्। पुनरन्तः प्रविश्यालिन्दगो गुरुः पूर्वादिद्वारगतद्वाःशाखासु तदीशान् पूजयेत्। द्वारशाखाधिपान् पठति – रक्षक इति। द्वारकलशपूजामाह – द्वे द्वे इति।

**कुम्भी चैव निकुम्भी च महाकुम्भी च कुम्भीका।**
**हर्षिणी च हयग्रीवी सुग्रीवी भीमलोचना ॥ ५८ ॥**

**पूज्यास्तोरणदक्षाङ्घ्रिमूलस्थकलशेष्विमाः।**
**सहस्रवीची विमला शतधारा प्रमोदिनी ॥ ५९ ॥**

**मुष्टिशकृदप्स्वणुः स्यात् गायत्रीराजिविकिरयोरस्त्रम्।**
**तत्त्वानि पञ्चगव्ये पञ्चप्रणवोऽथ गन्धसलिलादौ ॥ ६० ॥**

**कुम्भेशेऽखिलतत्त्वानां त्रितत्त्वं शिव इज्यताम्।**
**वर्धन्यामस्त्रमाधोरमन्यत् सर्वं शिवोदितम् ॥ ६१ ॥**

तदधीशान् पठति – कुम्भीति। तोरणकलशपूजां तदीश्वरीश्चाह – पूज्या इति। स्थलशुद्धौ मन्त्रभेदमाह – मुष्टीति। कुम्भेशे सर्वत्राखिलतत्त्वानामावाहनं स्यात्। त्रितत्त्वं शिवश्चेज्यतां वर्धन्यामधोरमन्त्रं च पूज्यताम्। अन्यत् सर्वं कर्म शिवोदितमेव स्यात्।



**शय्याग्रे गुरुकुण्डमत्र जनयेदग्निं यथोक्तक्रमा-**

**न्मूलार्णैर्नव तु क्रिया उपनयान्ता मूलपूर्णान्विताः।**
**षड्वर्णेन निजेन भैरवशिवं तस्मिन् विभाव्यार्च्य तं**
**भैरव्यां प्रणवादिभिर्घृतहुतिं कृत्वा प्रतोष्यावतु ।। ६२।।**

अग्निजननमाह शय्याग्र इति। शय्याग्रे शय्यायाः शिरोभागे गुरुकुण्डं स्यात्। अत्र भैरव्यां शिवोक्तक्रमादग्निं जनयेत्। अत्रोपनयान्ता नव क्रियाः मूलार्णैः स्युः। तास्तु मूलपूर्णहुत्यन्विताश्च तुशब्देन "प्रपञ्चसारो" क्तक्रमेण जिह्वाङ्गमूर्तिन्यासादिभिः सह षोडश क्रियाः कुर्याद्वेति सूचितम्। तदनन्तरं तस्मिन्नग्नौ निजेन षड्वर्णेन भैरवशिवं विभाव्य तमार्च्य प्रणवव्याहृत्यादिभिर्घृताहुतिं कृत्वा प्रतोष्यावतु रक्षतु।

**चतुरश्रभगाभकार्मुकाभान्यनलाश्रं परिवर्तुलं षडश्रम्।**
**कमलाभमथाष्टकोणमेवं परिकुण्डानि भवेयुरष्टदिक्षु ।। ६३।।**

भैरव्यां पूर्वादिष्वष्टदिक्षु चतुरश्रभगाभकार्मुकाभानि चतुरश्रं भगसमानं कार्मुकाकारं च अनलाश्रं त्रिकोणं परिवर्तुलं वृत्ताकारं षडश्रं कमलाभमष्टकोणं च एवं परिकुण्डानि भवेयुः।

**अम्बासु शोषेऽनल आदिकुण्डे जन्यो नवेन्द्राण्यणुवर्णकैः स्युः।**
**क्रिया स्वपूर्णा अथ भैरवेज्याद्यशेषमाधाय सुतोष्य रक्षेत्**
**।। ६४।।**

अम्बासु शोषे वरुणवाय्वोर्मध्ये आदिकुण्डेऽनलो जन्यः जननयोग्यः, इन्द्राण्यणुवर्णकैः इन्द्राणीमन्त्रस्य नवभिरक्षरैः स्वपूर्णाः स्वेनैवेन्द्राणीमन्त्रेण पूर्णा युक्ता नव क्रियाः स्युः। अथ पूर्वक्रमेण भैरवेज्याद्यशेषमाधाय सुतोष्य रक्षेत्।

**प्राक् प्रत्यग्द्वारे गृहे तद्दिगग्रा**
**शय्या कार्या मण्डपे दक्षिणार्धे।**

**दक्षोदग्द्वारेऽपि सा तद्दिगग्रा**
**पूर्वार्धे स्यान्मण्डलं चेतरार्धे ।। ६५ ।।**

प्राक् प्रत्यग्द्वारे गृहे प्रासादे तत्पुरोगतमण्डपे दक्षिणार्धे तद्दिगग्रा प्राग्द्वारे प्रासादे प्रागग्रा प्रत्यग्द्वारप्रासादे प्रत्यगग्रा च शय्या कार्या। दक्षोदग्द्वारे प्रासादे तत्पुरोगतमण्डपे पूर्वार्धे च क्रमाद्दक्षोदगग्रा च सा शय्या कार्या। सर्वत्रेतरार्धे मण्डलं च स्यात्।

**भद्रकं मण्डलं मातुर्मातॄणां चाथ वोज्ज्वलम्।**
**नवयोनिबहिर्द्वारशोभावीथ्यादिसंयुतम् ।। ६६ ।।**

मातुः मातॄणां च भद्रकं मण्डलं स्यात्। अथवा बहिर्भागे द्वारशोभावीथ्यादि-संयुतमुज्ज्वलं नवयोनिचक्रं स्यात्।

**शय्यां मातृषु कल्पयेत् स्वसदनाकारायते मण्डपे**
**वीरस्याखिलदक्षिणे गणपतेर्वामेऽनुवीरं क्रमात् ।**
**चामुण्डाद्द्रुहिणोद्भवादिशयनान्यासां शिरस्सन्निधौ**
**कुण्डान्यग्निपुराकृतीनि चतुरश्रे वीरहेरम्बयोः ।। ६७ ।।**

तत्तु "वह्नेः पुरद्वितयवासवयोनिमध्यसंबन्धवह्निवरुणेशसमाश्रिताश्रि देव्यर्चनाय मुनिभिः कथितं पुरैव लोके सुदुर्लभमिदं नवयोनिचक्रम्"।। इति प्रपञ्चसारोक्तमेव। मातृषु स्वसदनाकारे दीर्घचतुरश्रे मण्डपेऽखिलदक्षिणेऽखिलानां दक्षिणभागे वीरभद्रस्य गणपतेर्वामे च शय्यां कल्पयेत्। अनुवीरं वीरभद्र-समीपादिक्रमात् चामुण्डाद्द्रुहिणोद्भवादिशयनानि कल्पयेत्। आसां मातॄणां शिरःसन्निधौ अग्निपुराकृतीनि त्रिकोणाग्निकुण्डानि वीरहेरम्बश्चतुरश्रे कुण्डे च कल्पयेत्।

**कुण्डे वृत्रहसत्ययोर्विहितरूपे वीरचामुण्डयो-**
**र्ब्राह्म्यादेरनलादिदिक्षु समतुर्यश्रेऽथ वा मण्डपे।**

**विघ्नस्येशदिशीह मध्यभुवि तच्छय्याः स्युरग्न्यादिदि-**
**ग्भागेषूक्तदिगाहिताः सुरुचिरा रौद्र्यास्तु तन्मध्यतः ।। ६८ ।।**

अथवा समचतुरश्रे मण्डपे वीरचामुण्डयोः कुण्डे वृत्रहसत्ययोः पूर्वाग्रगत-मध्यसूत्रस्योत्तरे दक्षिणे च भागे विहितरूपे पूर्वोक्तसंस्थाने च कल्पयेत्। ब्राह्म्यादेरनलादि अग्नियमादि दिक्षु विघ्नस्येशदिशि च कल्पयेत्। मध्यभुवि अग्न्यादिदिग्भागेषु पूर्वोक्तदिगाश्रिताः सुरुचिराः शय्याः स्युः। रौद्र्याश्चामुण्डायास्तु तन्मध्यत एव।

**शिवेन्द्रवाय्विन्दुकृशानुपाशि-**
**कृतान्तसत्याशरदेशभाञ्जि।**
**कुण्डानि वा स्युः शयनान्यथान्त-**
**स्तद्दिक्क्रमान्मध्यत एव रौद्र्याः ।। ६९ ।।**

अथवा शिवेन्द्रादिस्थानेषु नव कुण्डानि स्युः। तत्रेन्द्रेति सत्येति च वास्तुपदस्थे उच्येते। अथ तेषामन्तस्तद्दिक्क्रमात् शयनानि स्युः। तत्रापि रौद्र्यास्तु मध्यत एव।

**वह्नेः पुरद्वितयवासवयोनिमध्य-**
**सम्बद्धवह्निवरुणेशसमाश्रिताश्रि।**
**देव्यर्चनाय मुनिभिः कथितं पूरैव**
**लोके सुदुर्लभमिदं नवयोनिचक्रम् ।। ७० ।।**

**शय्यां प्रपूज्य रुरुकद्विषि तच्छिरोदे-**
**शेऽभ्यर्च्य मूलमनुना स्वपनाख्यकुम्भम्।**
**विद्येश्वरीरपि यजेत् परितो महामा-**
**याद्याः स्वदिक्षु कलशेषु गुरुः क्रमेण ।। ७१ ।।**



अथ गुरुः रुरुकद्विषि शय्यां प्रपूज्य तच्छिरोदेशे मूलमनुना स्वपनाख्यं

कुम्भं निद्राकलशामभ्यर्च्य परितः स्वस्वदिक्षु कलशेषु महामायाद्या विश्वेश्वरीः क्रमाद् यजेत्।

**शय्यासु निद्राकलशाः शिरो दे-**
**शेऽर्च्याः स्वमूलेन ततः समन्तात्।**
**अम्बासु कुम्भाश्च निजाष्टशक्ति-**
**मन्त्रैः सपर्यापटलाभिधेयैः ।। ७२ ।।**

तथाम्बास्वपि निद्राकलशाः स्वस्वशिरोदेशेऽर्च्याः। सपर्यापटलोक्तैर्निज-निजाष्टशक्तिमन्त्रैर्विद्येश्वर्यश्च पूज्याः।

**मातरि शय्यां परितोऽष्टमङ्गलान्यम्बिकासु शय्यानिचयम्।**
**न्यस्येदय मङ्गलपालिकाश्च तद्वत् प्रदीपनिकरानपि च ।। ७३ ।।**

मातरि शय्यायाः परितोऽम्बिकासु शय्यासमूहस्य परितश्चाष्टमङ्गलानि मङ्गलपालिकाश्च विन्यसेत्।

**शूलपरश्वसिघण्डा डमरुकमष्टौ शुभंकरीं कलशम्।**
**ध्वजमप्युदगादिदिशास्वीशेन न्यसतु मङ्गलानि गुरुः ।। ७४ ।।**

**अथ बिम्बानि सलिलादुद्घृत्यानीय विन्यसेत्।**
**प्रागिष्ट्वा भद्रपीठानि तेषु स्वालयसम्मुखम् ।। ७५ ।।**

अष्टमङ्गलानि कथयति – शूलेति। ईशमन्त्रेण याज्ञिकवृक्षकल्पितानि मङ्गलानि विन्यसतु। अथ प्राग् भद्रपीठानि स्नानमण्डपे संस्थाप्येष्ट्वा तेषु बिम्बानि सलिलादुद्धृत्यानीय स्वालयसम्मुखानि विन्यसेत्।

**मातॄणां तु यथा शय्यास्तथैषु न्यास इष्यते।**
**प्रत्यक्प्राग्वदनौ वीरविघ्नौ शालाविधाविह ।। ७६ ।।**

अथैषु पीठेषु मातृणां यथा शय्यास्तथात्रापि न्यास इष्यते। शालाविधौ मण्डपे वीरभद्रविघ्नौ प्रत्यक्प्राग्वदनौ स्याताम्।

**मूलेनाज्येनाज्यमासूरपिष्टे-**
**नास्त्रेण त्वक्क्वाथकैर्गोशकृद्भिः।**
**मृद्भिस्तोयैः शोधयित्वा विधिज्ञो**
**नेत्रेणाक्ष्युन्मीलनं संविदध्यात् ।। ७७।।**

ततो विधिज्ञो गुरुराज्येन मूलेनाज्य अञ्जयित्वास्त्रेण मासूरपिष्टादिभिः प्रत्येकं तोयैश्च शोधयित्वा नेत्रमन्त्रेणाक्ष्युन्मीलनं संविदध्यात्।

**इष्ट्वा विष्टरमात्रमात्ममनुभिः स्वावाह्य पाद्यादिदो**
**मूलं पञ्च निरञ्जनादिजिनवर्णं वोच्चरन् ह्योऽर्चितैः।**
**कुम्भैः स्वैरभिषिच्य पूरणवदालिप्याथ गन्धोत्करै-**
**र्मूलेन ध्रुवपञ्चकाख्यमनुना वस्त्रादि दद्यात् क्रमात् ।। ७८।।**

विष्टरमात्रं पद्माय नम इत्येव पीठमिष्ट्वात्ममनुभिः स्वस्वमन्त्रैः स्वावाह्य पाद्यादिदो भूत्वा पञ्च निरंजनादिमूलं वा जिनवर्णं वोच्चरन्[१] ह्योऽर्चितैः पूर्वेद्युः पूजितैः स्वैर्बिम्बशुद्धिकुम्भैः पूरणवत् पूरणक्रमेणाभिषिच्य मूलेन गन्धोत्करैरालिप्य ध्रुवपञ्चकाख्यमनुना वस्त्रादिक्रमाद् दद्यात्।

**वस्त्रोत्तरीयमथ भूषणपाद्यमर्घ्य-**
**माचाममप्यथ बुधो जलगन्धपुष्पम्।**
**धपं च दीपमथ च प्रणतिं क्रमेण**
**वस्त्रोपवीतमिह वीरगणेशयोस्तु ।। ७९।।**

उपहारान् क्रमेण पठति वस्त्रेति। बुध इत्यन्तरान्तरा जलदानं सूचितम्।

१. 'हुनेदित्यादिवद् रूपम्। अन्यथा "उदश्चरः सकर्मकात्" इति सूत्रेण आत्मनेपदित्वमेव।।

वीरगणेशयोः वस्त्रोपवीतमिति वस्त्रानन्तरमुपवीतमित्यर्थः।

**गन्धालिप्ताग्रहस्तः स्पृशतु चरणहृद्वक्त्रदेशेषु बिम्बं**
**गायत्रीत्र्यर्णबीजैरथ च मनुविदाधारहृद्भ्रूयुगेषु।**
**इच्छाज्ञानक्रिया विन्यसतु गुरुरथैतद् विलोमेषु वामा**
**ज्येष्ठा रौद्रीश्च नीराजयतु चरतु पुण्याहमप्यत्र विद्वान्।। ८०।।**

गन्धेन आलेपिताग्रहस्तो भूत्वा। बिम्बमिति जात्येकवचनम्। बिम्बानि चरणहृद्वक्त्रदेशेषु क्रमाद् गायत्र्या त्र्यक्षरेण बीजमन्त्रेण च स्पृशतु। अथ च मनुविद् गुरुराधारहृद्भ्रूयुगेषु इच्छाज्ञानक्रियाः एतद्विलोमेषु स्थानेषु वामा ज्येष्ठारौद्रीश्च न्यसतु। अथ नीराजयतु, पुण्याहमपि चरतु विद्वानिति पुण्याहारम्भे स्वस्वनामयोजनमुक्तम्।

**पूजापटलभाविन्यो गायत्र्यस्त्र्यक्षरं पुनः।**
**चामुण्डे व्योमबीजं सखफाग्निभागबिन्दुवत् ।। ८१।।**

अत्र पूजापटलवक्ष्यमाणा एव गायत्र्यः चामुण्डे इति त्र्यक्षरमन्त्रः। सखफाग्निभागबिन्दुमत् सखफाः स्वयमेव, अग्नीरेफः, भग एकार, बिन्दुः अनुस्वारः एतैर्युक्तं व्योम हकारो बीजम्। "ह्स्खफ्रें" इति बीजमन्त्रमित्यर्थः।

**वस्त्राच्छन्नं बिम्बं**
**मन्त्रविदुत्थाप्य शाकुनादि जपन्।**
**नीत्वा च मण्डपद्वा-**
**र्यथ पाद्यादि प्रदाय नीराज्य ।। ८२।।**

**मूलेनान्तर्नीत्वा**
**निजशयनीये निजालयाभिमुखम्।**
**विनिधाय सकलयित्वा**
**मूलेन निवेश्य चास्त्रतो रक्षेत् ।। ८३।।**

**पञ्चध्रुवोऽथ चामुण्डे त्र्यर्णोऽथ स्मरहुं ततः।**
**अघोरेऽमोघवरदे हौं चां चामुण्ड इत्यपि।। ८४।।**

**उत्तिष्ठ नम इत्येष चामुण्डोत्थापने मनुः।**
**वीराद्युत्थापने त्वत्र भेदमात्रं निगद्यते ।। ८५।।**

अथ मन्त्रविद् बिम्बान्युत्थाप्य क्रमेण नीत्वा शय्यायां शाययित्वा रक्षां कुर्यादित्याह – वस्त्राच्छन्नमित्यादि। निवेश्य शाययित्वेत्यर्थः। उत्थापनमन्त्रमाह – पञ्चध्रुव इति पञ्चप्रणव उक्तः। चामुण्डे इति। अथ स्मरहुम् इति। ततः अघोरेत्यादि। चां चामुण्डे इत्यन्तमुक्त्वा उत्तिष्ठ नमः इति चामुण्डाया उत्थापने मन्त्रः। वीरभद्राद्युत्थापने भेदमात्रमुच्यते।

**पञ्चध्रुवोऽप्यघोरादिः शेषो बीजाभिधे निजे।**
**वीरे विघ्ने च पुल्लिङ्गमघोरादिपदत्रयम् ।। ८६।।**

पञ्चध्रुवः सामान्यः, अघोरेत्यादिशेषश्च सामान्यः। बीजाभिधे स्वस्वबीजं स्वस्वनाम चेत्यर्थः। वीरभद्रे विघ्ने चाघोरादिपदत्रयं पुँल्लिङ्गं स्यात्।

**निश्यर्चासु वपुर्विशुद्धिलिपिविन्यासस्वमन्त्रोदया-**
**धारन्यासवपुर्द्वयं न्यसनमन्त्रन्यासपीठार्चनम्।**
**तद्रूपद्वयतत्त्वजातनिजमन्त्रावाहनं न्यासस-**
**र्वाध्वादिन्यसनार्चनं च तनुयात् तन्मण्डलेज्यामपि ।। ८७।।**

ध्यानाधिवासं संगृह्णाति – निशीति। रात्रिकाले बिम्बाग्रत उपविश्य तालत्रयादिगुरुगणपतिपूजान्तं विधायार्चासु सकलाः क्रिया वितनुयात्। तत्र वपुर्विशुद्धिस्तत्त्वसंहारादि ततो लिपिन्यासः मन्त्रोदयः आधारन्यासा पीठन्यासः वपुर्द्वयन्यसनं स्थूलमूर्तिन्यासः सूक्ष्ममूर्तिन्यासश्च। पुनर्मूलमन्त्र न्यासः ततः पीठार्चनं इति पुनस्तद्रूपद्वयावाहनं स्थूलमूर्त्यावाहनं विद्यामूर्त्यावाहनं च। पुनस्तत्त्वजातस्यावाहनं ततो निजमन्त्रावाहनं ततस्तत्त्वन्यासं सर्वाध्वन्यासादि

च; पुनरर्चनम् इति पुनस्तन्मण्डलेज्यां वितनुयात्।

**ततो जनितपावकेऽग्निमुखकृद्द्विजौदुम्बर-**
**द्विपाशनसमित्तिलांश्चतसृभिस्तु भूरादिभिः।**
**क्रमाद् वसुसहस्रकं त्रिमधुराप्लुतान् भैरवा-**
**णुनावरणमन्त्रकैरपि जुहोतु सर्पिर्गुरुः ।। ८८ ।।**

गुरुः प्रतिष्ठाहोमं कुर्यादित्याह – तत इति। जनितपावकेऽग्निमुखकृद् भूत्वा त्रिमधुराप्लुतान् द्विजोदुम्बराद्विपाशनसमित्तिलान् पालाशोदुम्बराश्वत्थ-समिधस्तिलांश्च चतसृभिर्भूरादिभिः क्रमाद्वसुसहस्रं जुहोतु। पुनर्भैरवाणुना षडक्षरेणावरणमन्त्रकैः पूजापरिवारमन्त्रैरपि सर्पिर्जुहोतु।

**तदीयमथ सम्पातमेकवीर्या समर्पयेत्।**
**वीरभद्रादिषु विभज्यैव स्यात् तत्समर्पणम् ।। ८९ ।।**

एकवीर्या स्वप्रतिष्ठाहोमस्य सम्पातं समर्पयेत्। मातृषु स्वप्रतिष्ठाहोमसम्पातं वीरभद्रादिषु विभज्यैव समर्पणं स्यात्।

**भैरव्यां विदधीत तत्त्वहवनं स्वेज्याकृदम्बासु तु**
**स्वैर्मन्त्रैरखिलं विहृत्य दहनं तं स्वेषु कुण्डेष्वथ।**
**कुर्युस्तत्त्वहुतानि तत्तदपचित्याढ्यानि रौद्र्यां गुरुः**
**शिष्टेष्वष्टसु मूर्तिपाश्च तनुयुः सम्पातपाताद्यपि ।। ९० ।।**

तत्त्वहोमं विधत्ते – भैरव्यामिति। मातृषु स्वैर्मन्त्रैः शोषणभागकुण्डस्थं दहनमखिलं निश्शेषं स्वेषु कुण्डेषु विहृत्य तत्तदपचित्याड्यानि तत्तत्पूजाभिः सह तत्त्वहुतानि कुर्युः। तत्र रौद्र्यां चामुण्डायां गुरुः स्वयं शिष्टेष्वष्टसु मूर्तिपाश्च होमान्ते सम्पातपाताद्यपि तनयुः।



**देव्यां स्वैर्होममन्त्रौर्विहरतु दहनं दिक्क्रमेणैव कुण्डे-**
**ष्वाचार्यो मूर्तिपाश्चाथ तनुयुरिह शक्त्यङ्गमन्त्रैर्हुतानि।**

**मन्त्रैः स्वैरेव मातृष्वपि निजदहनेषूभयत्रापि मूलं**
**स्वं पूर्णायां दृगन्तं निजजिनलिपिरेवेह पक्वेषु तु स्यात् ।।**
**९१ ।।**

अधिवासहोममाह – देव्यामिति। देव्यां स्वैर्होममन्त्रैर्दहनं पूर्वादिक्रमेण विहरतु। शक्त्यङ्गमन्त्रैरिति – इहैकैकहोमपक्षे आचार्यः स्वकुण्डे स्वयमेव, पञ्चहोमपक्षे हृल्लेखया पूर्वादि चतुर्दिक्स्थतेषु कुण्डेषु रक्ता करालिका चण्डाक्षीमहोच्छुष्माभिश्चतुर्भिर्मूर्तिपैः सार्धं, नवहोमपक्षे उक्तेषु पञ्चस्वाग्नेयादि-कोणगतकुण्डेषु च हृदयशिखाकवचशिरोमन्त्रैश्चाष्टभिर्मूर्तिपैः सार्धं च होमं तनुयात् इत्यर्थः। मातृष्वपि स्वैरेव मन्त्रैर्निजनिजदहनेषु होमांस्तनुयुः। उभयत्र देव्यां मातृषु च पूर्णायां दृगन्तं वौषडन्तं स्वस्वमूलं स्यात्। इह पक्वहोमेषु निजनिजलिपिः स्वीया स्वीया गायत्री च स्यात्।

**मूलं मध्ये रक्ता हृदयकराल्यौ शिखा च चण्डाक्षी।।**
**कवचं च महोच्छुष्मा शिरश्च पूर्वादिदिक्षु देव्यां स्युः ।। ९२।।**

**समिदाज्यान्नसिद्धार्थमांसान्यथ तिला यवाः।**
**द्रव्याणि व्रीहयश्चाज्यं सर्वत्राष्टशतं हुतिः ।। ९३ ।।**

**देव्यां मध्ये पिप्पलसमिधो**
**दिक्षु वटाद्विजौदुम्बरजाः।**
**प्लक्षशमीखदिरभवा**
**विल्वापामार्गसम्भवाश्च क्रमतः ।। ९४।।**

शक्त्यङ्गमन्त्रैरित्युक्तं विवृणोति – मूलम्मध्य इति। मध्ये शक्त्या वा मूलं वेति विकल्पः। देव्यामेव द्रव्याण्याह – समिदाज्येति। मांसस्थाने प्रतिनिधिरेव ग्राह्यः। द्रव्यामेव समिध आह – देव्यामिति। मातृषु द्रव्याणि तान्येव। चामुण्डादिविघ्नान्तक्रमात् ता एव समिधः स्युः।

**चामुण्डी वीरभद्रब्राह्म्यादिविघ्नावधि क्रमात्।**
**जननीष्वपि ता एव समिधः समुदीरिताः ।। ९५।।**

**पत्कट्युदरहृद्वक्त्रनासानिटिलमूर्धसु।**
**सर्वाङ्गेऽपि द्रव्यहुतसम्पातस्पर्शनं चरेत् ।। ९६।।**

**देव्यां नवार्णेन तदर्णसङ्ख्यं**
**गुरुः सपूर्णं प्रजुहोतु सर्पिः।**
**सर्वेऽपि वा सङ्कृतिसङ्ख्यमेव-**
**मावर्तयेत् तज्जघृतार्पणाढ्यम् ।। ९७।।**

द्रव्यहोमे सम्पातस्पर्शस्थानान्याह – पत्कटीति। देव्यां विशेषहोममाह - - देव्यामिति गुरुरेव वा गुरुमूर्तिपाः सर्वे वा नवार्णेन तदर्णसंख्यं नववारं सुपूर्णं सर्पिस्तज्जघृतार्पणाढ्यं जुहोतु। एवमेव सङ्कृतिसङ्ख्यं चतुर्विंशतिवारं नवार्णमावर्तयेत्। अन्तरान्तरा सम्पातस्पर्शनं च कुर्यात्।

**के फाले भ्रूयुगे दृशोश्च चिबुके कण्ठे च पार्श्वद्वये**
**पृष्ठे त्र्यङ्गुलिपर्वसूरुयुगले जानुद्वये जङ्घयोः।**
**गुह्ये गण्डयुगेंऽसयोः श्रवणयोः स्फिग्युग्मके गुल्फयोः।**
**सम्पाताः सनितम्बनाभिकुचयोरर्प्याः समस्ताङ्गके ।। ९८।।**

**सर्पिः साष्टशतं जुहोतु जिनवर्णेन द्विवारं गुरुः**
**सर्वे वा द्विगुणं सकृच्च चरणे मध्ये शिरस्यर्पयेत्।**
**सम्पातं दधिसर्पिषी मधुशतं साष्टापि जुंसाणुना**
**हुत्वैष्वेव सहाङ्गसन्धिषु तु सम्पातं स्पृशेद्गुर्वरौ ।। ९९।।**

सम्पातस्पर्शनाय तुतर्विंशतिस्थानान्याह के फाल इति। त्र्यङ्गुलिपर्वस्विति। अङ्गुलीनां पर्वत्रिकेष्वित्यर्थः। पुनर्जिनवर्णेन गुरुः सर्वे वा साष्टशतं द्विवारं द्विकृत्वः द्विकृत्वः सर्पिर्जुहोतु। पुनर्द्विगुणं षोडशोत्तरद्विशतं सकृच्च सर्पिर्जुहोतु।

अष्टोत्तरशतहुतं सम्पातद्वयं क्रमाच्चरेण मध्यप्रदेशे च षोडशोत्तरशतद्वयहुतसम्पातं शिरसि चार्पयेत्। पुनर्दधिसर्पिषी मधु च जुंसाणुना हुत्वा साष्टशतं हुत्वा एष्वेव पादमध्यशिरस्सु तद्द्रव्यत्रयं सह हुत्वाङ्गसन्धिषु च सम्पातमर्पयेत्। एवं रुर्वरौ देव्यां स्यात्।

**सर्वेऽम्बासु चरुं घृतं वसुशतं हुत्वा पयश्च क्रमाद्**
**द्वैगुण्यात् कुलविद्याया पदहृदोः केऽप्यर्पयेयुः क्रमात्।**
**सम्पातानथ लोकमातृजिनवर्णेनापि सर्पि पुन-**
**र्हुत्वा सङ्कृतिसङ्ख्यकं कनिटिलाद्युक्ताङ्गदेशेष्वपि ।। १०० ।।**

अम्बासु सर्वे चरुं घृतं वसुशतं पयोद्वैगुण्यात् षोडशोर्ध्वं शतद्वयं च कुलविद्यया हुत्वा पद्धृदोः के मूर्ध्नि च सम्पातानर्पयेयुः। अथ लोकमातृजिनवर्णेन गणगायत्र्या सङ्कृतिसङ्ख्यकं चतुर्विंशतिवारं सर्पिर्हुत्वा। कनिटिलाद्युक्ताङ्गदेशे के फालेत्यादिश्लोकोक्तेषु चतुर्विंशतिस्थानेष्वर्पयेयुः।

**बालेव कुलविद्या स्याद् गणगायत्र्यथोच्यते।**
**अधिवासहुतं चासु स्वगायत्रीभिरेव वा ।। १०१ ।।**

बालैव कुलविद्यानाम स्यात्। अथ गणगायत्र्युच्यते लिख्यत इत्यर्थः। आसु मातृषु अधिवासहुतं स्वस्वगायत्रीभिरेव वा स्यात्।

**ओं सर्वमातृभ्यो विद्महे योगेश्वरीभ्यो धीमहे।**
**तन्नः शक्तिः प्रचोदयात् ।। १०२ ।।**

**प्रासादेन गुरुः शतं वसुयुतं गेहार्थमेते दश**
**ब्रह्माश्मार्थमपि ध्रुवेण शरतत्त्वैः शक्तितश्चाज्यकम्।**
**पीठार्थे द्रविणार्थमत्र निजमूलैरष्टशस्त्वष्टब-**
**न्धार्थं तन्नवशक्तिभिर्जुहुयुरेतज्जं च रक्ष्यं घृतम् ।। १०३ ।।**



पुनः प्रासादेन मन्त्रेण गुरुर्वसुशतं वसुयुतं शतं गेहार्थं प्रासादार्थं जुहोतु।

पुनरेते दश गुरुमूर्तिपा देव्यां गुरुरेवान्यत्र नवहोमकर्तारश्च; ब्रह्माश्मार्थं नपुंसकशिलार्थं ध्रुवेण शरतत्त्वैः शक्तितः भुवनेश्वर्या पीठार्थं निजमूलैश्च द्रविणार्थं रत्नन्यासार्थं नवशक्तिभिश्चाष्टबन्धार्थं च प्रत्येकमष्टशश्चाज्यं[१] जुह्वतु। एतज्जमेभ्यो होमेभ्य उद्भूतं घृतं पृथक् पृथग् रक्ष्यं स्यात्।

**स्वास्त्रेण निष्कृतिं हुत्वा कुर्युः स्विष्टकृदाद्यपि।**
**गुहब्रह्मशिलापीठरत्नान्यप्यधिवासयेत् ।। १०४।।**

**निवेदयेच्च दौग्धान्नमिष्ट्वा बिम्बे च मण्डले।**
**स्वाग्निष्वंशेन जुहुयुर्भोजयेच्च द्विजानपि ।। १०५।।**

**शुद्धान्नं दौग्धमथवा पीतं मुद्गं गुलौदनम्।**
**कृसरं चाथ नैष्पावौदनो मांसौदनः क्रमात् ।। १०६।।**

**सिद्धान्नमप्यपूपान्नं वीरचामुण्डिकादिषु ।**
**विघ्नान्तेषु निवेद्यानि स्वोक्तहोमे हवींषि च।। १०७।।**

पुनः स्वास्त्रेण निष्कृतिं हुत्वा स्विष्टकृदाद्यपि कुर्युः। पुनः प्रासादादिकमधिवासयेत्। ततः सामान्योक्तं पायसनिवेदनादिकं कुर्यात्। मातृषु निवेद्यहोमे च विशेषमाह – शुद्धान्नमिति। वीरभद्रस्य शुद्धान्नं वा दौग्धं वा। पीतान्नादीनि चामुण्डादीनां विघ्नस्यापूपान्नं च स्यात्।

**मण्डपं परितो दिक्षु मन्त्रैः पञ्चध्रुवादिभिः।**
**पूर्वाद्यष्टदिशास्वेकावृत्त्या च बलिमाहरेत् ।। १०८।।**

**चामुण्डां देवीं पुरस्कृत्य इमं बलिं प्रतिगृह्णन्तु सर्वभूतानि पैशाचान्तं यजामहे सर्वेभ्यो भूतेभ्यो विच्चे नमः। पूर्वे - चामुण्डापारिषदेभ्यो विच्चे नमः। आग्नेये - चामुण्डापारिषदेभ्यो विच्चे नम**

१. शताज्यं, च, पाठ।

**इत्यादि। सर्वपारिषदेभ्यो विच्चे नम इति। एवं मातृर्देवीः पुरस्कृत्येत्यादि।।**

**नवार्णपञ्चप्रणवत्र्यर्णान् मातरि मातृषु।**
**मातृविद्यां च गायत्रीं विद्यां च समयादिकाम् ।। १०९।।**

पुनर्मण्डपस्य परितो बलिदानमन्त्रमाह – मण्डपं परित इति। पञ्चप्रणवान्ते चामुण्डां देवीं पुरस्कृत्येत्यादिसर्वेभ्यो भूतेभ्यो विच्चे नमः इत्येको मन्त्रः। चामुण्डापारिषदेभ्यो विच्चे नम इति द्वितीयः। सर्व पार्षदेभ्यो विच्चे नमः इति तृतीय। तैस्त्रिभिर्मन्त्रैः पूर्वाद्याष्टदिक्षु बलिं हरेदित्यर्थः। मातृषु मातृर्देवीः पुरस्कृत्येको मन्त्रः, चामुण्डेत्याद्यूहयेत्। जपमन्त्रानाह – नवार्णमिति। समयादिकां विद्यां समयविद्यामित्यर्थः।

**जपेयुर्दीक्षिता विप्रा दिक्ष्वष्टासु स्थिता इह।**
**सा रात्रिर्जागरेणैव नेया नृत्तकथादिभिः ।। ११०।।**

**प्रातर्गुरुर्गृहविशोधनतत्प्रतिष्ठे**
**पुण्याहकर्म च चरेदथ सर्व एव।**
**ब्रह्माश्मविन्यसनरत्ननिधानपीठ-**
**संस्थापनान्यपि बिदध्युरथ प्रतिष्ठाम् ।। १११।।**

उत्तरेद्यु कर्तव्यं क्रियाक्रममाह – प्रातरिति। अथ गुरुरेक एव प्रासादशुध्दिं तत्प्रतिष्ठां पुण्याहं च चरेत्। पुनः सर्व एव ते गुरुमूर्तिपाः नपुंसकशिलास्थापनादि विदध्युः, अथ प्रतिष्ठां च विदध्युः।

**पूर्वादिदिक्षु नवरत्नसधातुबीज-**
**गन्धौषधीरजदृषद्यथ मध्यतश्च।**
**लोहायुधान्यपि विदध्युरमी स्वमन्त्रै-**
**रेकैकमन्तरितसप्तकमम्बिकासु ।। ११२।।**

तत्र रत्नन्यासविधानं विवृणोति – पूर्वादीति। अमी गुरुमूर्तिपा एकवीर्या मातृषु चाजदृषदि नपुंसकशिलायां पूर्वादिदिक्षु मध्यतश्च नव नवः सङ्ख्याकाः रत्नधातुबीजगन्धौषधीः लोहायुधान्यपि स्वस्वमन्त्रैर्निदध्युः। अम्बिकासु अन्तःस्थमेकैकपरिग्रहात् सप्तकमेव वा विदध्युः।

**वैडूर्यं मौक्तिकं चेन्द्रनीलमम्भोजरागकम्।**
**पुष्यं नीलं च गोमेदं प्रवालं वज्रमेव च ।। ११३।।**

**हरितालं मनोहाञ्जनाभ्रकं सीसकं पुनः।**
**सिन्दूरं माक्षिकं पश्चाद् गैरिकं चैव गन्धकम् ।। ११४।।**

**बीजानि गोधूमयवतिलमुद्गाह्वयानि च।**
**नीवारश्यामसिद्धार्थौ माषव्रीहय एव च ।। ११५।।**

**चन्दनद्वितयं गन्धाः कर्पूरं कुङ्कुमागरू।**
**ग्रन्थिपर्णी च ह्रीबेरं कुष्ठोशीरे क्रमान्नव ।। ११६।।**

**सहा च सहदेवी च विष्णुक्रान्ता च लक्षणा।**
**दूर्वा मुसल्यथो भद्रा चेन्द्रवल्ली कृताञ्जलिः ।। ११७।।**

**सुवर्णं रजतं ताम्रं पारतं त्रपु सीसकम्।**
**कांस्यं च पित्तलं चैव कालायसमपि क्रमात् ।। ११८।।**

**खट्वाङ्गं च कपालं च त्रिशूलं खड्गमेव च।**
**हिरण्मयं चतुर्दिक्षु महाप्रेतं तु मध्यतः ।। ११९।।**

द्रव्याण्याह – वैडूर्यमित्यादि। एकवीर्या रत्नादिलोहान्तषड्विध-द्रव्यान्यासानन्तरं हिरण्मयानि खट्वाङ्गदीनि चत्वार्यायुधानि दिक्षु न्यस्य मध्यतो महाप्रेतं च न्यसेत्।



**ओं चामुण्डे इन्द्राय सुराधिपतये वैडूर्यरूपाय नमो नम स्वाहा।**

**इत्यादि।**

**वीरादीनां परश्वादीन्यायुधानि नव क्रमात्।**
**वाहनान्यृषभादीनि रत्नान्येवोत विन्यसेत् ।। १२० ।।**

द्रव्यन्यासमन्त्रमाह – ओं चामुण्ड इति। तथा ओं ओं चामुण्डे अग्नये तेजोऽधिपतये मौक्तिकरूपाय नमो नमः स्वाहेत्यादयो मन्त्रा ऊह्याः। वीरभद्रादीनां परश्वादिन्यायुधानि ऋषभादीनि वाहनानि। मातृषु केवलानि रत्नान्येव वा विन्यसेत्।

**स्वमूलैः कुलविद्याभिः इन्द्राणीमनुनैव वा।**
**दिक्पालमनुभिर्वापि सर्वेषु न्यास ईरितः ।। १२१ ।।**

**सम्पूज्य विज्ञाप्य च सर्वमुद्रा-**
**स्योत्थाप्य बिम्बानि पुरोक्तमन्त्रैः ।**
**नीत्वा गृहान्तः प्रथितक्रमेण**
**संस्थापयेयुर्निजपीठिकासु ।। १२२ ।।**

सर्वास्वपि द्रव्यन्यासमन्त्रो विकल्पमाह -- स्वामूलमिति। तदनन्तरक्रियाक्रममाह – सम्पूज्येति। मण्डपं प्रविश्य यथोक्तरीत्या सम्पूज्य ध्वजतोरणादिकं सर्वमुद्रास्य प्रसीदेत्यादिवक्ष्यमाणमन्त्रेण विज्ञाप्य पुरोक्तमन्त्रैः पूर्वमण्डपप्रवेशकालोक्तैर्मन्त्रैरुत्थाप्य यथोक्तरीत्या प्रासादान्तर्भागं नीत्वा निजनिजपीठिकासु प्रथितक्रमेण संस्थापयेयुः।

**प्रसीद देवि वरदे यानेऽस्मिन् गन्तुमर्हसि।**
**अन्तर्गृहप्रेवशाय आगच्छ परमेश्वरि! ।।१२३।।**

**स्वं स्वं मूलं तु सर्वत्र प्रतिष्ठामनुरत्र च।**
**तारोपचारमूलादियोगस्तु प्रथितोऽखिलः ।। १२४ ।।**

रक्तयावाह्य संस्थाप्य कराल्या चण्डया पुनः।
निरोध्य सन्निधिं प्रार्थ्योच्छुष्मयाथाद्ययाऽर्चयेत्।। १२५।।

कृत्वाष्टबन्धाद्यखिलं जीवावाहनसंयुतम्।
स्तोत्रावाहनकृद्देव्या उपस्थानादिकं चरेत्।
पञ्चप्रणवमुच्चार्यं चामुण्डे चाक्षरत्रयम् ।। १२६।।

यस्याः सिंहा रथे युक्ता व्याघ्रभूतास्तथानुगाः।
ऋषयो लोकपालाश्च रुद्रो विष्णु पितामहः ।। १२७।।

प्रिया गणा मातरश्च ये च दिव्या नभश्चराः।
योगिन्यो विविधाकाराः गुरवश्च शिवादयः ।। १२८।।

डाकिन्यो भैरवा वामाः शाकिन्यो राक्षसा गणाः।
कूश्माण्डाश्च पिशाचाश्च वेतालाश्चैव मातरः[१] ।। १२९।।

तामहं परमां शक्तिं परावरपरां शिवाम्।
आवाहयामि सगणां[२] साङ्गां सपरिवारकाभ् ।। १३०।।

पञ्चप्रणवमुच्चार्य चामुण्डे आगच्छ, अनुग्रहं कारय, शिवा भव, ध्रुवा भव, विच्चे नमो नमः स्वाहा। ओं ह्लीं श्रीं फें चामुण्डे अत्र सान्निध्यं कुरु कुरु। अधिष्ठाय तिष्ठ स्वाहा विच्चे निरोधनं च नो भव, पूजां प्रतिगृहाण मन्त्रपूतमिदं पाद्यमिदमर्घ्यमिदमाचमनीय-कमेतदासनं रुद्रेण विनिहितं स्वयं स्वाहा। इति।।

अष्टबन्धादिकृन्मातृष्वपि स्तोत्राभिवाहनम्।
सर्वेऽपि कुर्युरथ तदुपस्थानादि मन्त्रिणः ।। १३१।।

पञ्चप्रणवमुच्चार्य चामुण्डे चाक्षरत्रयम्।



१. 'फेरळाः' २. 'सकळां' ख. च. पाठः।।

**यासां सिंहा रथे युक्ता व्याघ्रभूतास्तथानुगाः ।। २३२।।**

**ऋषयो लोकपालाश्च .... .... .... .... ।। २३३।।**

**इत्यादि।**

**ता अहं परमाः शक्तीः परावरपराः शिवाः।**
**आवाहयामि सगणाः साङ्गाः सपरिवारकाः ।। २३४।।**

**पञ्चप्रणवमुच्चार्य मातर आगच्छत अनुग्रहेत्यादि। हे मातरः, अत्र सान्निध्यं कुरुत, अधिष्ठाय तिष्ठत स्वाहा विच्चे निरोधनं च नो भवत पूजां प्रतिगृह्णीत, मन्त्रपूतमिदं पाद्यमिदमर्घ्यमिदमाच-मनीयकमेतदासनं रुद्रेण विनिहितं स्वयं स्वाहा।।**

**मन्त्रावाहनकृन्न्यस्येत् पञ्चशक्ती रुरुद्विषि।**
**कादिषु त्र्यर्णवर्णांश्च गुह्ये हृद्यजरन्ध्रके ।। २३५।।**

प्रतिष्ठामन्त्रमाह – स्वं स्वमिति। शिवप्रतिष्ठावत् पञ्चमन्त्रैः विशेषबिधिमाह – रक्तयेति। प्रतिष्ठानन्तरक्रियामाह – कृत्वेति। देव्यां स्तोत्रमन्त्रावाहनमाह – पञ्चप्रणवमित्यादि। मातृष्वपि तथा कुर्यादित्याह – अष्टबन्धादिकृदिति। उपस्थानमन्त्रास्तु सामान्या एव। अथ रुरुद्विषि मन्त्रावाहनकृद् गुरुः पञ्चशक्तीः कादिषु न्यस्येत्। गुह्ये हृदि ब्रह्मरन्ध्रे त्र्यक्षरमन्त्रस्याक्षरांश्च न्यस्येत्।

**हृदि ध्रुवं स्वबीजं मूर्ध्न्यम्बासु व्यापकं पुनः।**
**मूलशेषेण कृत्वाऽथोभयत्राङ्गानि विन्यसेत् ।। २३६।।**

अम्बासु मन्त्रावाहनानन्तरं हृदि ध्रुवमूर्ध्नि स्वबीजं पुनर्मूलशेषेण व्यापकं कृत्वोभयत्र मातरि मातृषु चाङ्गानि विन्यसेत्।

**सर्वे सम्पूज्य तांस्तांश्च पायसादिं निवेद्य च।**
**प्रसाद्य समवस्येयुः स्वां स्वां पूजां विधानतः ।। २३७।।**

पुनः सर्वे तांस्तांश्च सम्पूज्य निवेद्य प्रसाद्य स्वां स्वां पूजां विधानतः समापयेयुः।

**शिवस्याधिवासं गुरूद्दिष्टक्लृप्त्या**
**प्रतिष्ठां च कृत्वाभ्यनुज्ञात एताः।**
**प्रतिष्ठाप्य शार्व्यां दिशि क्षेत्रपार्थे[१]**
**ततो नित्यपूजाममीषां विदध्यात् ।। २३८ ।।**

शिवस्य तन्त्रसमुच्चयोक्तमार्गेणाधिवासं प्रतिष्ठां च कृत्वा तस्मादनुज्ञां लब्ध्वा एता देवीर्मातृश्च प्रतिष्ठाप्य शार्व्यां दिशि क्षेत्रपालं तथा शिवोक्तमार्गेण प्रतिष्ठाप्यमीषां शिवदेव्यादीनां नित्यपूजां विदध्यात्।

**अग्नौ तत्तद्दिशि शिवं देवीं मातृश्च कल्पयन्।**
**हुत्वा निवेद्यशेषेणा बलिं कृत्वार्थयेत च ।। २३९ ।।**

पूजाहोमकालेऽग्नौ च तत्तद्दिशि शिवादीन् कल्पयन् हुत्वा परिवारेषु बलिं कृत्वा यावदिति प्रार्थयेत्।

**यावदत्र जगन्नाथो लिङ्गमाश्रित्य तिष्ठति।**
**तावदत्रैव रक्षार्थं यूयं तिष्ठत सर्वदा ।। २४० ।।**

**यावदत्र जगन्नाथा बिम्बमाश्रित्य तिष्ठति।**
**तावदत्रैव रक्षार्थं यूयं तिष्ठत सर्वदा ।। २४१ ।।**

**बिम्बमाश्रित्य तिष्ठन्ति यावदत्रैव मातरः।**
**तावदत्रैव रक्षार्थे यूयं तिष्ठत सर्वदा ।। २४२ ।।**

**पूजां समाप्य जपमेलनकृत् पिधाय**
**द्वारं ततस्त्रिदिवसं धिनुयात् तदीयान्।**

१. 'पालं' ख. पाठः।।

**मन्त्रान् निशाहवनतुर्यदिनाभिषेका-**
**द्याधाय साधु विदधीत तदुत्सवं च ।। २४३ ।।**

ततः पूजां समाप्य जपमेलनकृत् चिच्चैत्यसम्मेलनं विधाय द्वारं पिधाय दिवसत्रयेऽपि तत्तदग्रभागे पूजां कुर्वन् हुत्वा परिवारप्रतिष्ठादिकं कुर्यात्।

इति शेषसमुच्चये सप्तमः पटलः।

# अथ अष्टमः पटलः।

**स्नात्वा विधिवदाचम्य पूजास्थाने निजासने।**
**निषद्य देहशुध्यादि सर्वं कृत्वार्चयेद् गुरुः ।। १ ।।**

**षडक्षरन्यसनकृदीश्वरं शिवां**
**ततोऽम्बिका वटुकमपि क्रमाद् यजेत्।**
**शिवां तु तन्मनुविधिकृत् तथाम्बिकाः**
**षडक्षरं गुरुभिरुदीरितक्रियम्।। २ ।।**

अथ पूजाविधिमाह – स्नात्वेति। गुरुः पूर्वं षडक्षरन्यसनकृद् भूत्वा ईश्वरं यजेत्। ततः शिवां ततोऽम्बिकाः ततः वटुकं क्षेत्रपालमपि क्रमाद् यजेत्। तत्र शिवामम्बिकाश्च तत्तन्मनुकृद् विधिकृद् भूत्वा च यजेदिति विशेषः। तत्र षडक्षरं तन्त्रसमुच्चये गुरुभिरुदीरितया क्रियया युक्तमेव।

**शिरसि गुरुसमष्टिमपि च शिवं शिवां ब्रह्मसनकादीन्।**
**वन्देत परगुरूनप्यपरांश्च परावरान् मन्त्री ।। ३ ।।**

देव्या अनुष्ठानमाह – शिरसीति। ओं परमशिवाद्यशेषगुरुपारम्पर्यक्रमेण स्वगुरुपादाम्बुजं यावत् तावत् प्रणौमीति – गुरुसमष्टिं शिरसि वन्देत। ओं परमशिवपादुकायै नमः इति शिवम्। ओं परमशिवापादुकायै नमः इति शिवाम्। ओं ब्रह्मपादुकायै नमः इति ब्रह्माणम्। ओं सनकादिपादुकाभ्यो नमः इति सनकादीन्। ओं परगुरुपादुकाभ्यो नमः इति परगुरून्। ओं अवरगुरुपादुकाभ्यो नमः इति अवरगुरूनपि शिरसि वन्देत – इति मन्त्रीत्यनेन सूचितं स्यात्।

**वामे स्वगुरून् गणपतिमपि दक्षिणतोऽथ दशदिक्षु।**
**वन्देत हेतुकादीनपि मनुवित् क्षेत्रपालांश्च ।। ४।।**

पुनर्वामाभागे ओं गुं अस्मद्गुरुभ्यो नमः। दक्षिणे ओं गं गणपतये नमः। पुनर्दशदिक्षु ओं ह्रीं हें हेतुक्षेत्रपालः प्राचीं दिशं रक्षतु नमः। एवमेव ओं ह्रीं त्रिं त्रिपुरान्तक्षेत्रपाल आग्नेयीं दिशमित्यादिमन्त्रैर्वन्दनं मनुविदित्यनेन सूचितम्।

**ओं ह्रीं हें हेतुकक्षेत्रपालः प्राचीं दिशं रक्षतु नमः, ओं ह्रीं त्रिं त्रिपुरान्तकक्षेत्रपालः आग्नेयीं दिशं रक्षतु नमः, ओं ह्रीं अं अग्निवेतालक्षेत्रपालः याम्यां दिशं रक्षतु नमः, ओं ह्रीं अं अग्निजिह्वक्षेत्रपालो नैर्ऋतीं दिशं रक्षतु नमः, ओं ह्रीं अं अग्निकल्पक्षेत्रपालो वारुणीं दिशं रक्षतु नमः, ओं ह्रीं कं कराळक्षेत्रपालो वायवीं दिशं रक्षतु नमः, ओं ह्रीं एं एकपादक्षेत्रपालः सौम्यां दिशं रक्षतु नमः, ओं ह्रीं भीं भीमरूपक्षेत्रपाल ऐशानीं दिशं रक्षतु नमः, ओं ह्रीं हां हाटकक्षेत्रपाल अधस्ताद्दिशं रक्षतु नमः, ओं ह्रीं आं आकाशधिपतिक्षेत्रपाल ऊर्ध्वां दिशं रक्षतु नमः।**

**स्वास्त्रेण करशुद्ध्यादि कृत्वा तालत्रयाद्यपि।**
**नाडीशुद्धिं चरेद् भूयस्तारांशै रेचकादिभिः ।। ५।।**

स्वास्त्रेण पाशुपतेन करशुद्धिं तालत्रयं च कृत्वा पाशुपतास्त्रपूर्वं ओं ह्रीं प्राचीं दिशं बध्नामि नमः इत्यादिमन्त्रैर्दशदिग्बन्धादीन् चरेत्। भूयस्तारांशैरकारो-कारमकारैर्बिन्द्वन्तैः रेचकादिभिर्नाडीशुद्धिं चरेत्।

**स्मृत्वाधारे हसरलसदीं पिङ्गलेडासुषुम्ना**
**स्वग्नीन्द्वर्कप्रणवलिपिभी राजदन्तार्णसंख्यैः।**
**रेकाद्यैः शोधयतु वपुरन्तःसुषुम्नं क्रमाच्च**
**क्षादीमार्णान्तमपि च शिवे संहरेत् कुम्भकेऽत्र ।। ६।।**

ततः शोषणदहनप्लावनानि क्रमात् त्रिभिः श्लोकैराह – स्मृत्वेत्यादि। तत्र पूर्वं मूलाधारे हसरलसदीं हकारसकाररेफैर्युतमीमिति बीजं स्मृत्वा पिङ्गलेडासुषुम्नासु क्रमादग्नीन्द्वर्कप्रणवलिपिभिर्वन्दिसोमसूर्यात्मकैर्मकारोकाराकारैः प्रणवाक्षरैर्बीजैः राजदन्तार्णसंख्यैः षोडशद्वात्रिंशदेकपञ्चाशत्संख्यैरेकाद्यैः रेचकपूरककुम्भकैर्वपुः शोषयतु। अत्र कुम्भके तु अन्तःसुषुम्नं सुषुम्नान्तर्भागे क्षादीन् क्षकारादीनार्णान्तमकारपर्यन्तं यथा भवति तथा लिप्यक्षरान् परशिवे संहरेत्।

**कुर्वन्निडादिषु यथेरितरेचकादीन्**
**दाहं तनोरुदितकुण्डलिनीशिखाभिः।**
**पिण्डं पदं सपदि रूपमरूपमेतत्**
**तत्कुम्भके परशिवे सुविलापयेच्च ।। ७।।**

पुनरप्येवमेव इडादिषु यथेरितरेचकादीन् कुर्वन्नुदितकुण्डलिनीशिखाभिः उक्तस्यैव कुण्डलिनीबीजस्य ज्वालावलीभिस्तनोर्दाहं कुर्वन् कुम्भके सपद्येवमेव पिण्डादीन् परशिवे सुविलापयेच्च।

**सहरलसदीमिन्द्वब्जान्तर्विचिन्त्य च पिङ्गला-**
**दिषु सुविदधद्रेकादीन् कुम्भके परतः शिवात्।**
**सृजतु विमृशन् नादं बिन्दुं सदाशिवमीश्वरं**
**हरहरिविधीन् दग्धं चाप्लावयंस्तु सृजेल्लिपिम् ।। ८।।**

पुनरिन्द्वब्जान्तर्द्वादशान्तपद्मस्थचन्द्रमण्डलान्तर्भागे सहरलसदीं सकारहकार-रेफसहितमींबीजं विचिन्त्य पिङ्गलादिषु रेचकादीन् विदधत् कुम्भके परतः शिवात् परमशिवात् नादं बिन्दुं सदाशिवमीश्वरं हरहरिविधीनपि विमृशन् सृजतु। दग्धं देहं चाप्लावयंस्तु लिपिं सृजेत्।

**लिपिन्यासाणूत्पत्यसुयमनपीठन्यसनकृत्**

**क्रमान्मूर्तावावाहयतु कृतदोर्न्यासविततिः।**
**तनौ चीर्णन्यासाततिरुपचरेच्चित्तविभवै-**
**र्जपेन्मन्त्रं चाष्टोत्तरशतमथावस्यतु सुधीः ।। ९।।**

लिपिन्यासाद्यनुष्ठानक्रममाह – लिपिन्यासेति। अणूत्पत्तिं मन्त्रो दयम् असुयमनं प्राणायामः पुनः पीठन्यासः एतानि कृत्वा मूर्तिन्यासानन्तरं तत्र मन्त्रचैतन्यमावाहयतु। कृतदोर्न्यासविततिः कृतकरन्यासविस्तारः पुनस्तनौ चीर्णन्यासाततिरनुष्ठितन्याससमूहः चित्तविभवैर्मानसैरुपहारैरुपचरेत् पूजयेत्। मन्त्रं जपेद् अथावस्यतु समापयतु। लयाङ्गं कुर्यादित्यर्थः।

**मूलेन पाण्योस्तलपृष्ठपार्श्वे**
**मृष्ट्वास्य चाङ्गुष्ठयुगेऽर्णमाद्यम्।**
**शिष्टाष्टवर्णानपि दक्षतर्जा-**
**द्यन्यैतदन्तं न्यसतु क्रमेण ।। १०।।**

करन्यासादिकं विवृणोति – मूलेनेति। पाण्योस्तलं पृष्ठं पार्श्वं च मूलेन मृष्ट्वा व्याप्यास्य मूलमन्त्रस्याद्यमर्णमङ्गुष्ठयुगे सह न्यसतु। दक्षतर्जादि अन्यैतदन्तं वामतर्जान्तं शिष्टानष्टवर्णानपि न्यसतु।

**दक्षाङ्गुष्ठादिवामाङ्गुष्ठान्ताङ्गुलिषु मन्त्रवित्।**
**विन्यसेद् दश तत्वान्यथार्णब्रह्माणि विन्यसेत् ।। ११।।**

अथ मन्त्रविद् वक्ष्यमाणदशतत्त्वज्ञो दक्षाङ्गुष्ठादिवामाङ्गुष्ठान्ताङ्गुलीषु दश तत्त्वानि न्यसेत्। अथार्णब्रह्माणि विन्यसेत्।

**पञ्चप्रणवाद्यास्तु न्यसतु ह्रोमेकवीर्याद्याः।**
**द्व्यङ्गुष्ठादिषु मन्त्री तासु तालान्तं षडङ्गानि ।। १२।।**

तान्याह – पञ्चेति। पञ्चप्रणवान्ते ह्रोमेकवीर्यै नमः इत्यादिपञ्चमन्त्रान्य-ङ्गुष्ठद्वयादिषु न्यसतु। अथ मन्त्री तास्वेवाङ्गुलीषु तलान्तं षडङ्गान्यपि

न्यसतु।

**मूलेन व्यापकं देहे त्रिवारं प्रथमं न्यसेत्।**
**ताररुद्धहृदन्तेन ततो लिप्यादिकं न्यसेत् ।। १३ ।।**

**प्रथमं त्र्यर्णपुटितां मातृकां मन्त्रविन्न्यसेत्।**
**व्यस्ताभिर्वा समस्ताभिः आदितोऽभित एव वा ।। १४ ।।**

ततो देहे मूलेन त्रिवारं व्यापकं प्रथमं न्यसेत्। ततस्ताररुद्धहृदन्तेन प्रणवपुटितनमोन्तेन सह लिप्यादिकं सर्वं न्यसेत्। तत्रापि प्रथमं त्र्यर्णपुटितां मातृकां न्यसेत्। ततो व्यस्ताभिर्वा समस्ताभिर्वा आदितो युक्ताभिर्वा अभित उभयतोयुक्ताभिर्वा वाक्शक्तिलक्ष्मीभिः वाग्भवभुवनेश्वरीश्रीबीजैर्युक्तान् लिप्यर्णान् विन्यसेत्।

**युक्तान् वाक्शक्तिलक्ष्मीभिर्लिप्यर्णान् विन्यसेत् ततः।**
**वर्णान्ते त्र्यर्णयोगोऽस्मिन् मातृन्यासेऽपि चेष्यते।। १५ ।।**

तत्र मातृकान्यासमाह – वर्णान्त इति। वर्णानां लिपिवर्गाणामन्ते ऐं ह्रीं श्रीम् इति त्र्यर्णयोगो मातृकान्यासेऽपि चेष्यते।

**स्वरवर्गतदीश्वर्यै ब्राह्म्यै नत्यादयोऽणवः।**
**मुखदोः पादयुगले जठरे हृदि विन्यसेत् ।। १६ ।।**
**स्वरादिव्यापकान्तेष्वीऽश्वर्यो ब्राह्म्यादिमातरः।**
**वर्गत्रयं स्वरस्पर्शव्यापकं त्र्यर्णसम्पुटम्।**
**मुखमध्याङ्घ्रिभागेषु न्यस्य तत्वान्यथ न्यसेत् ।। १७ ।।**

स्वरवर्गतदीश्वर्यै ब्राह्म्यै नत्यादय – इति। स्वरान् बिन्द्वन्तानुक्त्वा, ऐं ह्रीं श्रीम् इत्युक्त्वा, स्वरवर्गेश्वर्यै ब्राह्म्यै नमः इत्यादयोऽणव इत्यर्थः। स्वरादिव्यापकान्तेषु सप्तसु वर्गेष्वीश्वर्यो ब्राह्म्यादिमातरः स्युः। मुखकरद्वयपाद-द्वयोदरवक्षांसि न्यासस्थानानि। व्यापकत्वेनैव तासां न्यासा स्युः। पुनः

स्वरस्पर्शव्यापकं वर्गत्रयं त्र्यर्णसम्पुटम् ऐं ह्रीं श्रीम् इत्यर्णेन सम्पुटीकृत्य मुखमध्याङ्घ्रिभागेषु न्यस्याथ तत्त्वानि न्यसेत्।

**शक्तिर्माया विद्या पुरषः प्रकृतिश्च बुद्धिरथ च मनः।**
**स्युरहङ्कारश्चाष्टौ शब्दादिर्विंशतिश्च तत्त्वानि ।। १८।।**

अष्टाविंशतितत्त्वान्याह – शक्तिरिति। शक्त्याद्यहङ्कारान्तान्यष्टौ पुनः शब्दतन्मात्राद्या विंशतिश्चाष्टाविंशतितत्त्वानि।

**तेषां शाक्तं स्मरो वाक् च मादयः पञ्चविंशतिः**
**बीजानि शं सं हं रं हृत्पुण्डरीकादिषु क्रमात् ।। १९।।**

तेषां बीजान्याह – तेषामिति। शक्ति बीजं भुवनेश्वरी स्मरः कामबीजं वाक् वाग्भवं पुनर्मभादयः कान्ताः पञ्चविंशतिश्च बीजानि। शं सं हं रं इति चत्वारि हृत्पुण्डरीकादिषु बीजानि।

**तारः शक्तिश्च बीजं नामात्मने त्र्यक्षरं नतिः।**
**तत्त्ववाचकक्लृप्तिः स्यादियं मन्त्रविदामिह ।। २०।।**

**पञ्चभिर्व्यापकं त्रीणि हृदि शेषं प्रसिद्धवत्।**
**न्यस्य हृत्पुण्डरीकादिचतुष्कं हृदि विन्यसेत्।। २१।।**

ततस्तत्त्ववाचकानां क्लृप्तिमाह – तार इति। पूर्वं तारः ततः शक्तिः पुनः स्वस्वबीजं पुनः स्वस्वनाम तत आत्मन इति। ततश्चामुण्ड इति त्र्यक्षरं पुनर्नतिः। एवं तत्त्ववाचकक्लृप्तिः स्यात्। आद्यैः पञ्चभिर्व्यापकं ततस्त्रीणि हृदि शेषं प्रसिद्धवन्न्यस्य हृत्पुण्डरीकादिचतुष्कं हृदि विन्यसेत्।

**हौं ह्यौमित्यादिबीजाढ्यं शान्त्यतीतादिपञ्चकम्।**
**पञ्चतत्वमिह ज्ञेयं न्यासः कास्यादिषु स्मृतः ।। २२।।**



**शिवः शक्तिश्च नादश्च कला विद्या च पञ्चकम्।**

**पञ्चप्रणववर्णाढ्यं शान्त्यतीतादि पूर्ववत् ।। २३ ।।**

**दशतत्त्वानि के फालकूर्चनोलम्बिकागले।**
**हृन्नाभिगुह्यके तत्त्वपदाढ्यानि पदोर्न्यसेत् ।। २४ ।।**

**त्रितत्त्वान्यथ वाक्शक्तिश्रीबीजाढ्यानि पूर्ववत्।**
**आत्मविद्याशिवाख्यानि गुह्ये हृद्यन्तरे भ्रुवोः ।। २५ ।।**

**तद्वदिच्छाक्रियाज्ञानशक्तीरथ यथोदितम्।**
**एकवीर्यादिशक्तीश्च न्यस्येत् कास्यादिपञ्चसु ।। २६ ।।**

**शक्त्याद्यष्टौ कर्णमोटीं मूर्धकूर्चास्यहृत्सु च।**
**नाभ्यूरुजानुजङ्घासु नव तत्त्वानि पद्द्वये ।। २७ ।।**

**नवाधारेषु जीवौजः शुक्लमज्जादिधातुषु।**
**नेत्रादिनवरन्ध्रेषु मूलवर्णान् नव न्यसेत् ।। २८ ।।**

**कास्यकन्धरनाभ्यन्धुपूर्वोर्जान्वोश्च जङ्घयोः।**
**पदोश्च वीरभद्रादिविघ्नान्तान् नव विन्यसेत् ।। २९ ।।**

पञ्चतत्त्वानि तेषां न्यासस्थानानि चाह – हौमिति। दशतत्त्वान्याह – शिवशक्तिरिति। कूर्चं भ्रूमध्यम्। तत्त्वपदाढ्यानि शिवतत्त्वात्मने नम इत्यादीनीत्यर्थः। त्रितत्त्वन्यासमाह – त्रितत्त्वानीति। इच्छाशक्त्यादिशक्तित्रयं तद्वदेव न्यसेदित्याह – तद्वदिति। पञ्चशक्तीश्च न्यसेदित्याह – एकवीर्यादीति। नवतत्त्वन्यासमाह – शक्त्यादिति। अष्टाविंशतितत्त्वानामाद्याष्टकं कर्णमोटी च मूर्धादिषु न्यसेत्। अत्रापि कूर्चं भ्रूमध्यम्। नवाधारेषु नवसु धातुषु नवद्वारेषु च मूलवर्णन्यासमाह – नवाधारेष्विति। वीरभद्रादिमातृन्यासमाह – कास्येति। तत्र हृदये द्वादशान्तपद्मस्यान्तश्चैकवीरीं न्यसेत्।



**हृद्द्वादशान्तपद्मान्तरेकवीरीं वपुष्यथ।**

**क्षेत्रकं व्यापकं न्यस्येदथ न्यस्येत् षडध्वनः ॥ ३० ॥**

अथ वपुषि क्षेत्रकं क्षेत्रपालं व्यापयेत्। अथ षडध्वनश्च विन्यसेत्।

**कलाः स्युः शान्त्यतीताद्यास्तत्त्वान्यष्टौ च विंशतिः।**
**शक्त्याद्यष्टौ कर्णमोटी भुवनानि चतुर्दश॥ ३१ ॥**

**लोकपातालनरककालाः साधारशक्तयः।**
**द्वादशान्ते भ्रुवोर्मध्ये नासास्यगलहृत्स्वथ ॥ ३२ ॥**

**नाभ्याधारोरुजङ्घापत्तलाङ्गुष्ठेषुकेष्वपि।**
**वर्णास्तु मातृकावर्णाः स्वजिनार्णपदानि तु ॥ ३३ ॥**

**के फालास्यगले नाभावूरुजानुपदद्वये।**
**केश्यग्निमिति सप्तर्चो मन्त्रोऽध्वा रुरुकद्विषि।**
**मूर्धेक्षणास्यहृन्नाभिगुह्यपादेषु विन्यसेत् ॥ ३४ ॥**

**मूलार्णान् विन्यसेत् प्राग्वदित्थं न्यासः षडध्वनाम्।**
**शिववद् गोळकान्यासमों ह्रीं बीजान्वितेः शुभैः ॥ ३५ ॥**

**शेषवर्णैश्चरेत् षड्भिरन्ते शक्तिभिरन्वितैः।**
**प्रागुक्तसंकृतिस्थानेष्वपि मूलं न्यसेद् बुधः ॥ ३६ ॥**

तत्र शान्त्यतीताद्याः सामान्या एव कलाः अष्टौ विंशतिश्चोक्तान्येवतत्त्वानि। अथ भुवनाध्वनि शक्त्याद्यष्टौ नवमी कर्णमोटी पुनः लोकपातालनरककाला- श्चत्वारः आधारशक्तिश्चेति – इति चतुर्दश भुवनानि द्वादशान्तादिस्थानेषु न्यसेत्। मातृकावर्ण एव वर्णाध्वा। स्वजिनार्णपदाष्टकं कादिषु न्यसेदिति पदाध्वा। रुरुकद्विषि केश्यग्निमिति सप्तर्चो मूर्धादिषु न्यसेत्। पुनर्मूलर्णानि च विन्यसेत्। इत्थं षडध्वन्यास उक्तः। ततः शिववत् शिवोक्तस्थानेषु प्रत्येकमों ह्रींबीजान्वितैरन्ते प्रत्येकं शक्तिभिर्युक्तैः शेषवर्णैश्चामित्यादिभिः षड्भिरक्षरैः

गोलकन्यासं चरेत्। पुनः प्राक् सम्पातस्पर्शनोक्तेषु चतुर्विंशतिस्थानेष्वपि मूलं न्यसेत्।

**ततः समयविद्याश्च विन्यस्याङ्गानि विन्यसेत्।**
**पुनर्ऋष्यादि विन्यस्य मनसेष्ट्वा मनुं जपेत् ।। ३७।।**

**ओं ऐं क्लीं हौः आं ईं ऊं रां लां वां सां कामेश्वरि भगमालिनि नित्यक्लिन्ने भेरुण्डे वह्निवासिनि महावज्रेश्वरि शिवदूति त्वरिते कुळसुन्दरि नित्ये नीलपताके विजये सर्वमङ्गले ज्वालामालिनि चित्रे महानित्ये परमेश्वरि मिश्रेशमयि षष्ठीशमयि ओड्डीशमयि शय्यानाथमयि लोपामुद्रामयि अगस्त्येश्वरमयि कान्तापनमयि धर्मनाथमयि मुक्तिकेश्वरमयि दिवाकरमयि कलानाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि मनोजदेवमयि रत्नदेवमयि वासुदेवमयि श्रीरामानन्दमयि श्रीदेवमयि कल्याणदेवमयि अणिमासिद्धे लघिमासिद्धे ईशित्वसिद्धे प्राकाश्यसिद्धेच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे ब्राह्मिमाहेश्वरि कौमारि वैष्णवि वाराहि माहेन्द्रि चामुण्डि महालक्ष्मि सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशङ्करि सर्वोन्मादिनि सर्वमहाङ्कुशे सर्वाचारिणि सर्वबीजे सर्वयोने सर्वत्रिखण्डे त्रैलोक्यमोहनवक्त्रस्वामिनि ह्स्रोः क्लीं एं क्रों नित्ये मदद्रवे ह्रीं वज्रेश्वरि समयविद्यादेवि श्रीपादुकां पूजयामि।।**

**वज्रपञ्जरमध्यगते ऐं ऐं क्रों नित्यमदद्रव्ये ह्रीं वज्रेश्वरि समय विद्यादेवि श्रीपादुकां पूजयामि।।**

**ऐं ऐं ऐं भगभगे भगिनि भगोदरि भगमाले भगवाहे भगगुह्ये भगयोनि भगनिवासिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने**

**भगस्वरूपे सर्वाणि सर्वभगानि मे ह्यानयानय वरदे रते सुरते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चेक्षुभग क्षोभय सर्वतत्त्वभगेश्वरि एं ब्लूं जं ब्लूं भों ब्लूं मों ब्लूं ह्रों ब्लूं क्लिन्ने सर्वाणि भगानि मे वशमानय श्रीं श्रीं हरवलये ह्रीं भगमालिनि समयविद्यादेवि श्रीपादुकां पूजयामि।।**

**ऐं ह्रीं श्रीं हं सः क्लीं भगवति ब्लूं नित्यकामेश्वरि श्रीं स्त्रीं सर्वतत्त्ववशङ्करि सा श्रीं त्रिपुरभयङ्करि ऐं विच्चे ह्रीं त्रिपुरसुन्दरि समयविद्यादेवि श्रीपादुकां पूजयामि।। ३८।।**

ततः समयविद्यां च विन्यस्याङ्गानि विन्यसेत्। पुनः ऋष्यादिकं विन्यस्य मानसपूजानन्तरं मन्त्रं जपेत्।

**वीरभद्रादिविघ्नान्तान् नवाधारेषु मन्त्रवित्।**
**विभाव्य मनसेष्ट्वा वा मन्त्रजापोऽयमिष्यते ।। ३९।।**

नवाधारेषु वीरभद्रादीन् विभाव्य मनसेष्ट्वा अयम्मन्त्रजापं इष्यते।

**तारः शक्तिः स्वादिवर्णः स बिन्दु-**
**स्त्र्यर्णो ङेन्तो हृच्च देव्यां नवार्णः।**
**ङेस्थाने विच्चेऽथवा नादितारः**
**स्वाख्या देव्या भद्रकाळ्येव वा स्यात् ।। ४०।।**

मूलमन्त्रादिकमुद्धरति – तार इति। तारः शक्तिः सबिन्दुर्बिन्दुसहितः स्वादिवर्णः स्वस्य नाम्नः आद्यक्षराणामित्यर्थः। ङेन्तस्त्र्यर्णः चामुण्डायै इति। हृत् नम इति। अयं देव्या नवार्णो मूलमन्त्रः। अथवा ङेस्थाने चतुर्थी परित्यज्य तस्य स्थाने विच्चे इति चामुण्डे विच्चे इत्यर्थः। अत्रादितारो न भवति नवारर्णत्वात्। भद्रकाळी इति वा देव्या स्वाख्या स्यात्।

**शक्त्या षड् दीर्घाढ्ययाङ्गानि षट् स्युः**
**स्वाख्या जात्या स्यात्तु वा त्र्यर्णयोगः।**
**शक्तिश्चर्षिः स्याद् बृहत्यस्य भूय-**
**श्छब्दश्चामुण्डोदिता देवता च ।। ४१ ।।**

**सञ्जीवनिद्वयं वा हृदूर्ध्वकेशिशिरः शिखा।**
**ज्वलितशिखिशिखे चानादिबोधा च ङेऽन्विता ।। ४२ ।।**

**सहस्रपरिवर्तिन्यस्य वर्म नयनं पुनः।**
**ताराक्षीत्यपि चास्यास्त्रं मारणिद्वितयं भवेत् ।। ४३ ।।**

**प्राग्योज्यं ध्रुवचामुण्डे पश्चादाख्या च जातियुक्।**
**पुरोक्ता एव मातृणां मनवोङ्गान्यपि क्रमात् ।। ४४ ।।**

**शक्तिः स्वाद्यक्षरं बीजं ङेऽन्ता स्वाख्या हृदेव च।**
**योज्यं सप्तसु विच्चे च नवार्णा नवसु स्मृताः ।। ४५ ।।**

तत्रापि प्रणवशक्त्यनन्तरं भबीजेन सह भद्रकाळ्यै नमः इति नवाक्षरमित्यर्थः। दीर्घाढ्यया शक्त्या त्वाख्या जातिभिः सह षडङ्गानि स्युः। तत्र प्रत्येकं त्र्यर्णयोगो वा स्यात्। ऋष्यादिकमाह – शक्तिरिति। पक्षभेदेनाङ्गान्याह – सञ्जीवनीति। सञ्जीवन्यादीनां प्राक् प्रत्येकं ध्रुवचामुण्डे ओं चामुण्डे इति योज्यम्। सञ्जीवन्यादीनां पश्चादाख्या जातियुक् च स्यात्। मातृणां मन्त्रा अङ्गान्यपि पुरोक्ता एव। मातृणां नवार्णमन्त्रानाह – शक्तिरिति। स्वाद्यक्षरं स्वस्वनाम्न आद्यक्षरं बीजं ङेन्ता स्वस्वाख्या च हृदेव नमश्च चामुण्डादिषु सप्तसु विच्चे इति च योज्यम्। इति नवसु नवर्णाः स्मृताः।

**गुरूदीरितरीत्यैव कर्तव्यं दरपूरणम्।**
**उत्पलादिचतुर्युक्तमात्माराधनमेव च ।। ४६ ।।**

**ऐशे गुरून् गणपतिं दहने निर्ऋत्यां**
**मातॄः प्रपूजयतु गन्धवहे च दुर्गाम्।**
**क्षेत्राधिपालमथ शाङ्कर इन्द्रभागे।**
**कल्पद्रुमं गणपतेः सविधेःप्रदीपम् ।। ४७।।**

तन्त्रसमुच्चयोक्तक्लृप्त्या शङ्खपूरणमात्माराधनं च कुर्यादित्याह – गुरूदीरितेति। द्वयुत्पलादिचतुर्युक्तमिति – मूलमुक्त्वा उत्पलद्वयं कल्पयामीत्यादि-मन्त्रैरुत्पलद्वयकरवीरद्वयपद्मद्वयतुलसीद्वयानि समर्पयेत्। शिवस्य पूजां तन्त्रसमुच्चयोक्तमार्गेणैव। शक्तेः पीठादिपूजाया विशेषमाह – ऐशे गुरूनिति। ईशाग्निनिर्ऋतिवायुदिक्षु गुरुगणपतिमातृदुर्गाः क्षेत्रपालमपीशभाग एव, इन्द्रभागे कल्पद्रुमं गणपतः समीपे प्रदीपं च स्वस्वमन्त्रैः प्रपूजयतु।

**शैवं पीठं प्रपूज्यात्र चतुष्पीठं क्रमाद् यजेत्।**
**समष्टिं च महाप्रेतं रुद्राकारं च मन्त्रवित् ।। ४८।।**

**ओं ऐं क्लीं सौः ओड्याणपीठाय नमः। ओं ऐं जालन्धरपीठाय नमः। ओं क्लीं पूर्णागिरिपीठाय नमः। ओं सौः कामरूपपीठाय नमः। ओं ह्रीं चामुण्डे परायै अपरायै परापरायै ह्सौः सदाशिवमहाप्रेतपद्मासनाय विच्चे नमः। इति।।**

**मूर्तिं प्रकल्प्य जिनवर्णयुतेन मूले-**
**नावाह्य तां सकलयेल्लिपितत्त्वपूर्वैः।**
**न्यासैः षडध्वभिरपीह च पूर्वमुक्तै-**
**र्घ्यात्वा जिनार्णमनुनार्पयतूपहारान्[1] ।। ४९।।**

**शम्भुस्था शशलक्ष्मखण्डविलसत्कोटीरचूडोज्ज्वला**

१. 'उपचारान्' ख. च. पाठः।।

**बिभ्राणा करपङ्कजैर्गुणसृणी शूलं कपालं तथा।**
**मुण्डस्त्रक्परिमण्डिता त्रिनयना रक्ताङ्गरागांशुका**
**सर्वालङ्करणोज्ज्वला शितिनिभा वः पातु नित्यं शिवा**
**।। ५० ।।**

अथ शिवोक्तपीठपूजानन्तरं चतुष्पीठं रुद्राकारां महाप्रेतरूपां समष्टिं च स्वस्वस्थाने यजेदित्याह – शैवमिति। चतुष्पीठमन्त्रान् प्रेतमन्त्रमपि लिखति - - ऐमित्यादि। मूर्तिकल्पनानन्तरमावाह्य पूर्वोक्तक्रमेण सकलीकृत्य ध्यात्वोपहारान् दद्यादित्याह – मूर्तिमिति। ध्यानमाह – शम्भुस्थेति। शम्भुस्था शम्भुरूपप्रेतासनत्था गुणसृणी पाशमङ्कुशं च मुण्डस्रक्परिमण्डिता उत्तमाङ्गरूपाभिः मालाभिः परितो मण्डिता शितिनिभा श्यामवर्णा।

**सद्यः सङ्गरसंगता सुरशिरःश्रेणीभिरास्रोल्बणै-**
**राबध्य स्रजमुत्तरीयमनया संविभ्रतीं सादरम्।**
**दोर्भिः खेटकपालपन्नगमहाघण्टाशुभंकारिका-**
**खट्वाङ्गत्रिशिखानसिं च दधतीं वन्दे महाभैरवीम् ।। ५१ ।।**

**पाद्यमर्घ्यं तथाचामं मधुपर्कं पुनश्च तत्।**
**स्नानवस्त्रोत्तरीयाणि भूषणानि यथाक्रमम्।। ५२ ।।**

पक्षान्तरमेव ध्यानमाह – सद्यः सङ्गरेति। सद्य एव युद्धाय समागतानामसुराणां शिरोनिवहैः रुधिरदिग्धैः स्रजमाबध्यानया सादरमुत्तरीयं बिभ्रतीम्। पुनः पाद्याद्यपहारान् स्वगायत्र्या दद्यादित्याह – पाद्यामिति। पुनश्चतदिति। पुनराचमनमित्यर्थः।

**जलं गन्धं च पुष्पं च धूपं दीपं निवेद्यकम्।**
**प्रणामं च स्वगायत्र्या दद्याद् देव्यै समाहितः ।। ५३ ।।**



**अङ्गावृतिः प्रथितवत् तदनु स्वशक्ती**

**रक्तादिकाः क्रमत एव चतुर्दिशासु।**
**दूत्यष्टकं यजतु चाष्टदिशासु तद्वद्**
**देवायुधान्यथ दिगीशतदायुधानि ।। ५४।।**

आवरणक्रममाह – अङ्गावृतिरिति। प्रथितवद् अग्नीशनिर्ऋत्यादि प्रसिद्धवदित्यर्थः। तदनु रक्तादिकाश्चतस्रः स्वशक्तीः ततो दूत्यष्टकमष्टदिशासु तद्वदेवाष्टायुधान्यपि। अथ दिगीशतदायुधानि च यजतु।

**महामाया ललाटाक्षी विचित्रा विकटानना।**
**चामुण्डा चण्डिका तीक्ष्णा दूत्यो योगेश्यपि क्रमात्। ५५।।**

**खड्गखेटौ तथा शूलकपाले चायुधान्यपि।**
**खट्वाङ्गभुजगौ चाष्टौ शुभङ्कर्यपि घण्डिका ।। ५६।।**

**कालरात्रिर्महारात्रिः पुरतो दक्षवामयोः।**
**दूत्यौ धूम्रेक्षणा तद्वद्विकटाक्षी च पृष्ठतः ।। ५७।।**

**तद्बहिर्हरिणी पूज्या देव्वा निर्माल्यधारिणी।**
**परिवारविहारादिक्लृप्तिस्तन्त्रसमुच्चये ।। ५८।।**

**निवेद्यादिक्रमश्चैव सर्वोऽपि समुदीरितः।**
**वीरभद्रादिपूजापि प्रायो ज्ञेया शिवोक्तवत् ।। ५९।।**

**सकृद् गुरुगणेशेज्या नानैव नव शक्तयः।**
**चण्डा च चण्डदासी च चण्डेशी चण्डविक्रमा ।। ६०।।**

**चण्डकृच्चण्डहृच्चण्डी चण्डपा चण्डरूपिणी।**
**तीव्राख्या ज्वालिनी नन्दा स्वयशा कामरूपिणी।। ६१।।**

**उग्रा तेजोवती सत्या विघ्नेऽन्त्या निघ्ननाशिनी।**
**लोहिताक्षी त्रिनेत्रा च मत्स्यमाली कपालिनी।। ६२।।**

भैरवी मांसीसुस्तन्यम्बिकोद्भवान्त्या मनोन्मनी।
ब्रह्मकाळी चरा ज्येष्ठा विमला कामरूपिणी ।। ६३।।

सुमना विमना शान्तिर्ब्रह्माणी च नव क्रमात्।
ईशानी पालनी रक्षा शूली रौद्री मनोम्ननी ।। ६४।।

उमा ज्येष्ठा कराळी च रुद्राण्यां नव शक्तयः।
माता परा कुमारी च विद्या माया तमोवती ।। ६५।।

सत्या वेदी च कौमार्यां नवमी शक्तिसंज्ञिता।
क्षान्तिर्गन्धा च विद्या च कीर्तिः प्रज्ञा क्रियाह्वया।। ६६।।

लक्ष्मीः सृष्टिश्च विमला वैष्णव्यां क्रमतो नव।
क्षमा जया धृतिरथ क्षेमी तन्त्री ततोधरा[१] ।। ६७।।

अधोमुखी चरा वेगा वाराह्यां नवमी भवेत्।
लघ्वी वागीश्वरी स्थूला प्रतिष्ठा भौतिकानला ।। ६८।।

पृथिवी स्थावरीन्द्राण्यां सूक्ष्मैव नव शक्तयः।
कुलपद्मासनायेति तारमायादि कीर्तयेत्।। ६९।।

नमोऽन्तं वीरपूर्वेषु समष्टिः स्यान्नवस्वपि।
स्वस्वगायत्र्युपेतेन स्वेन मूलेन मन्त्रवित् ।। ७०।।

आवाह्य सकलीकुर्याल्लिपितत्त्वादिविस्तरैः।
हों ह्रेमाद्यन्विताश्चैषु स्वाः स्वाः स्युः पञ्च मूर्तयः ।। ७१।।

वीरे विघ्ने शिवाङ्गानि देव्याङ्गानि च सप्तसु।
दण्डी कुण्डोदरो वीरे नन्दी भृङ्गिरिटिः क्रमात् ।। ७२।।



१. 'अपरा' ख. पाठः।

**ईशान ऋषभो विघ्ने मर्कटो वामनोऽपि च।**
**स्वा स्वैव प्रथमा मूर्तिर्वीरभद्रादिषु क्रमात्॥ ७३॥**

**अर्कोत्काद्ये च मालिन्यौ हासनी चाथ मारणी।**
**ब्रह्मघोषा सुघोषा च यज्ञवेदिः सुराङ्गना॥ ७४॥**

**रुद्राण्यां जटिनी भामिनीन्दुरेखा यशस्विनी।**
**लङ्घिनी हारिणी पश्चाच्छुकिनी शोकमालिनी॥ ७५॥**

**उष्णिन्युत्पलमाला च विमला भीमराक्षसी।**
**महती मेरुमुख्या च सुन्दरी च सुरेवती ॥ ७६॥**

**सुरदेवी सुकन्या च मोहिन्यप्सरसापि च।**
**द्वितयादिचतस्त्रस्तु मूर्तयोऽमूरुदीरिताः ॥ ७७॥**

**अङ्गानि च चतुर्मूर्तिरष्टमूर्तिर्यथाक्रमम्।**
**पूजयेदिन्द्रवज्रादीन् महाजिह्वामथान्ततः ॥ ७८॥**

दूत्यष्टकमाह – महामायेति। आयुधाष्टकमाह खड्गेति। तद्बहिः पुरोभागगतं दूतीद्वयमाह काळरात्रिरिति। पृष्ठगतं दूतीद्वयमाह – दूत्याविति। तद्वहिः स्वस्थाने देव्या निर्माल्यधारिणी हरिणी पूज्या। उक्तादन्यत् परिवारप्रसरणा देवं सर्व तन्त्रसमुच्चयादवगन्तव्यमित्याह – परिवारविहारेति। वीरभद्रगणपति-मातृणां पूजा प्रायः शिवोक्तवदेव कार्येत्याह – वीरभद्रेति। तत्र गुरुगणपतिपूजा सकृदेव कार्या। नव शक्तयो नाना पृथगेव स्युः। नवशक्ती क्रमेणाह – चण्डा चेत्यादि। वीरभद्रादिषु नवस्वपि तारमायादि कुळपद्मासनायेति अन्ते नमश्चेति समष्टिः स्यादित्याह – कुळेति। स्वस्वगायत्रीसहितेन स्वस्वमूलेनावाह्य सकलीकुर्यादित्याह – स्वस्वेति। एषु ह्रों ह्रेमित्यादिबीजांन्विताः पञ्च मूर्तयः पञ्चस्थानेषु न्यस्तव्या इत्याह – ह्रोमिति। वीरभद्रस्य विघ्नस्य च शिवोक्तान्यङ्गानि। इतरासु सप्तसु देव्यङ्गान्येव। तत्र पञ्चमूर्तिषु स्वयं

स्वयमेव प्रथमा मूर्तिः। अवशिष्टाश्चतस्रो मूर्तीः क्रमेणाह – दण्डीत्यादि। अर्कोल्काद्य मालिन्यौ अर्कमालिनी उल्कामालिनी च। अङ्गैश्चतुर्मूर्तिभिः अष्टमूर्तिभिरिन्द्रवज्रादिभिश्च क्रमेण पूजा स्यादित्याह – अङ्गानीति। महाजिह्वा साधारणैव। [१]निर्माल्यधारिणी अष्टविधा।

**असिताङ्गो रुरुश्चण्डः क्रोधश्चोन्मत्तभैरवः।**
**कपाली भीषणोऽन्त्यस्तु संहारी वीरभद्रके ॥ ७९ ॥**

**आविनी प्लावनी विघ्ने मण्डकारी चतुर्गुणा।**
**विद्या तेजोवती चाष्टावुमा गङ्गा च मूर्तयः॥ ८० ॥**

**दुर्गा त्रिशूलिनी दण्डी नीली कृष्णाम्बरप्रिया।**
**पालनी ह्लादनी चैव चामुण्ड्यां ब्रह्मवादिनी॥ ८१ ॥**

**आकिनी प्लाविनी चैव आग्नेयी वायवी ततः।**
**गगना धारणी ब्राह्म्यां वज्रिणी गुणपञ्चकी ॥ ८२ ॥**

**जया च विजया पश्चादजिता चापराजिता।**
**प्रकृतिर्विकृतिर्विश्वा रुद्राण्यां विश्वमूर्त्यपि ॥ ८३ ॥**

**भद्रा सुभद्रा विख्याता प्रख्याता चैव चण्डिका।**
**कराळी विकराळी च कौमार्यामृक्षकर्ण्यपि ॥ ८४ ॥**

**ऋद्धिः समृद्धिर्बुद्धिश्च शुद्धिः स्वाहा वसुन्धरा।**
**त्रिलोकधात्री गायत्री वैष्णव्यामष्ट शक्तयः ॥ ८५ ॥**

**सुरूपा बहुरूपा च मन्दा माताऽच्युतप्रिया।**
**घोरा सुघोरा वरदा वाराह्यां दूत्य ईरिताः ॥ ८६ ॥**



१. 'निर्माल्यधारिणीः शक्तीः क्रमादाह' च. पाठः॥

तुष्टिः पुष्टिर्धृतिः कान्तिर्दया सत्या दमा शमा।
इन्द्राण्याः शक्तयोऽष्टौ स्युरिति सर्वं समीरितम् ।। ८७।।

पद्मासनस्थं सुश्वेतं प्रसन्नास्यं त्रिलोचनम्।
कपर्दकलितेन्द्वर्धं नागायज्ञोपवीतनम् ।। ८८।।

नागाभरणदीप्ताङ्गं व्याघ्रचर्माम्बरं हरम्।
परश्वधं मृगं चैव अभयं करपङ्कजैः ।। ८९।।

दधानं चैव वामाङ्कन्यस्तवामकरं प्रभुम्।
ध्यायेत वीरभद्रं तं भक्तिमान् वृषभध्वजम्।। ९०।।

गजास्यमेकदन्तं च तुन्दिलं पङ्कजासनम्।
महामूषिककेतुं च महाकायं महौजसम् ।। ९१।।

नागयज्ञोपवीतं च त्रिनेत्रं नागभूषणम्।
कनकाभं करासक्तपाशाङ्कुशरदं तथा ।। ९२।।

भक्ष्यं च बिभ्रतं देवं चन्द्रार्धकृतशेखरम्।
नासाग्रन्यस्तचषकं स्निग्धवर्णं विचिन्तयेत् ।। ९३।।

ध्यायेत भक्तिमान् देवीं चामुण्डां मुण्डमालिनीम्।
उत्तराभिमुखां भीमां नागाभरणभूषिताम्।। ९४।।

नीलजीमूतवर्णाङ्गीं त्रिणेत्रां ताम्रमूर्धजाम्।
दोर्भिः खड्गं च खेटं च कपालमभयं तथा ।। ९५।।

बिभ्रतीं पद्मपीठस्थां कल्पवित् कौशिकध्वजाम्।
दंष्ट्राकरालवदनां रक्तकौशेयवोष्टिताम् ।। ९६।।

स्वर्णवर्णां चतुर्वक्त्रां प्रसन्नां पद्मविष्टराम्।

अक्षस्रक्कुण्डिकाभीतिहस्तां कृष्णाजिनप्रियाम्।। ९७।।

कृष्णाजिनोत्तरीयां च पीतस्रग्गन्धभूषणाम्।
वामोरुविन्यस्तकरां राजहंसाङ्कितध्वजाम् ।। ९८।।

पवित्रालङ्कृतकरां ब्रह्माणीमपि चिन्तयेत्।
पद्मविष्टरमध्यस्थां हंसकुन्देन्दुनिर्मलाम् ।। ९९।।

पन्नगाभरणां नागब्रह्मसूत्रां त्रिलोचनाम्।
प्रसन्नवदनां चन्द्रकलाराजत्कपर्दिनीम् ।। १०० ।।

व्याघ्रचर्माम्बरधरां सौरभेयाङ्कितध्वजाम्।
करैरक्षस्रजं शूलमभयं चैव बिभ्रतीम्।। १०१।।

वामोरुविन्यस्तकरां माहेशीं चिन्तयेत् सुधीः।
पीनोरुजघनोत्तुङ्गस्तनभारावनामिकाम्।। १०२।।

मयूरवाहिनीं देवीं रक्तमाल्याम्बरावृताम्।
कौसुम्भसन्ध्याभ्रनिभां दिव्यभूषणसंयुताम्।। १०३।।

नीलकुञ्चितकेशान्तामलकाञ्चितमस्तकाम्।
शक्तिघण्टाभयकरां वामोरुन्यस्तदोस्तलाम् ।। १०४।।

कौमारीं चिन्तयेदेवं पाटलाधरपल्लवाम्।
शङ्खचक्राभयकरां वामोरुन्यस्तदोस्तलाम्।। १०५।।

इन्द्रनीलातसीपुष्पमालाम्भोदसन्निभाम्।
पद्मस्थां वैष्णवीं ध्यायेत् पद्मनाभाभविग्रहाम्।। १०६।।

मन्दस्मिताननां तार्क्ष्यवाहनां दैत्यमर्दनीम्।
पृथुस्तनावनमितां लसन्मकरकुण्डलाम्।। १०७।।

**बिम्बाधरां सुवदनां श्रीवत्साङ्कितवक्षसम्।**
**वराहघोणवदनां नीलजीमूतसन्निभाम्।। १०८।।**

**रक्तमाल्यम्बरधरां पद्मस्थामरुणेक्षणाम्।**
**कराभ्यां कालदण्डं च पाशं च दधतीं शुभाम्।। १०९।।**

**अन्येनाभयदं चैव वामोरुन्यस्तदोस्तलाम्।**
**सर्वाभरणदीप्ताङ्गीं वाराहीं महिषध्वजाम् ।। ११०।।**

**पृथुस्तनावनमितां वाराहीमपि चिन्तयेत्।**
**दूर्वाश्यामलवर्णाङ्गीं वज्राङ्कुशधरां पराम् ।। १११।।**
**सहस्रनयनां पद्मविष्टरां पद्मलोचनाम्।**
**ऐरावतध्वजोपेतां चित्रमाल्याम्बरान्विताम् ।। ११२।।**

**किरीटहारकेयूरकुण्डलाद्यैरलङ्कृताम्।**
**अभयं दक्षहस्तेन दधतीमूरुदेशतः ।। ११३।।**

**अपरं दधतीं ध्यायेदिन्द्राणीं सुमनोहराम्।**
**शिवरुर्वरिमातृणां सह पूजा विधीयते ।। ११४।।**

**वह्नौ यथास्थितिं ध्यात्वा हुतं कार्यं पृथग् बलिम्।**
**प्रथिता शिवपूजा स्यादथवा भेद इष्यते।। ११५।।**

मूर्तिशक्तीः क्रमादाह – असिताङ्ग इत्यादि। शिवदेवीमातृणां सहपूजाविधिमाह – शिवेति। तत्र पूजाहोमे वह्नौ यथास्थिति शिवदेव्यादिस्थानानि ध्यात्वा तत्र तत्र तस्यै तस्यै देवतायै हुतं कार्यम्। पृथग् बलिरिति। शिवदेवीक्षेत्रपालानां पृथक् पृथगेव। मातृणां सर्वासामप्येकत्रैव बलिः कार्यः। शिवपूजा तु प्रसिद्धैव। अथवा कैश्चिद् भेद इष्यते।

**तारः शक्तिर्नमः सर्वात्मने सकलशब्दतः।**

गुणात्मशक्तियुक्तायानन्ताय च समष्ट्यणौ ।। ११६ ।।

भेदो ङेन्त्तं योगपीठपद्मासनमथो नतिः।
सितष्टङ्कमृगाभीतिवरहस्तः शिवोऽथ वा ।। ११७ ।।

रक्तः कपालखठ्वांगाक्षमालाढ्यस्त्रिशूलवान्।
प्रसन्नो मुण्डमाली च नागाभरणभूषितः ।। ११८ ।।

तारादिहृदयं सर्वज्ञाय सर्वात्मने पदम्।
अमृते तेजोमालिनि तृप्ताय ब्रह्मणे शिरः ।। ११९ ।।

ज्वलितद्विशिखेऽनादिबोधायेति शिखापरम्।
वज्रीवज्रधरौ ङेन्तौ स्वतन्त्राय द्विठोपरि।। १२० ।।

अलुप्तशक्तये ज्योतीरूपायाक्ष्यस्त्रमुच्यते।
अनन्तशक्तये पाशुपतेत्याख्यादि चेष्यते।। १२१ ।।

जलार्पणमनुं वच्मि तेन पञ्चोन्नयेत् परान्।

ओं ह्रीं भगवन् जलमिदं जिह्वेन्द्रियाय रसतन्मात्रात्मन इदं जलं गृहण गृहण स्वाहा नमः।।

ओं ह्रीं भगवन् गन्धमिदं घ्राणेन्द्रियाय गन्धतन्मात्रात्मने इदं गन्धं गृहण गृहण स्वाहा नमः। ओं ह्रीं भगवान् पुष्पमिदं श्रोत्रेन्द्रियाय शब्दतन्मात्रात्मन इदं पुष्पं गृहणगृहणस्वाहा नमः। ओं ह्रीं भगवन् धूपमिदं त्वगिन्द्रियाय स्पर्शतन्मात्रात्मने इदं धूपं गृहण गृहण स्वाहा नमः। ओं ह्रीं भगवन् दीपमिदं चक्षुरिन्द्रियाय रूपतन्मात्रात्मने इदं दीपं गृहण गृहण स्वाहा नमः। ओं ह्रीं भगवन् निवेद्यमिदं जिह्वेन्दियाय रसतन्मात्रात्मने इदं निवेद्यं गृहण गृहण स्वाहा नमः।

**देव्यां त्र्यक्षरमम्बासु तत्तन्नामादि चोन्नयेत्।**
**द्वयोरुपरि विच्चे च बुधोऽमी सर्वतोऽणवः।। १२२।।**

**पुरोक्तेः क्षेत्रपालाणुरङ्गाध्वाद्यपि विष्टरम्।**
**प्रायः शिवोक्तवद् ज्ञेयमुच्यन्ते नव शक्तयः ।। १२३।।**

तत्र समष्टिमन्त्रे भेदमाह – तार इति। ओं ह्रीं नमः सर्वात्मने सकलगुणात्मशक्तियुक्तायानन्ताय योगपीठपद्मासनाय नमः इत्यर्थः। ध्यानभेदमाह – सित इति। अङ्गभेदमाह – तारादीति। ओं सर्वज्ञाय सर्वात्मने हृदयाय नमः, अमृते तेजोमालिनि सृप्ताय ब्रह्मणे शिरसे स्वाहा, ज्वलितशिखे अनादिबोधाय शिखायै वषट्, वज्रिणे वज्रधराय स्वतन्त्राय स्वाहा कवचाय हुम्, अलुप्तशक्तये ज्योतीरूपाय नेत्रत्रयाय वौषट्, अनन्तशक्तये पशुपतये अस्त्राय फट् इत्यङ्गानीत्यर्थः। जलार्पणमन्त्रोक्त्या अन्यानप्यूहयेदित्याह – जलार्पणेति। ओं ह्रीं भगवन् जलमिदं जिह्वेन्द्रियाय रसतन्मात्रात्मन इदं जलं गृह्ण गृह्ण स्वाहा नमः इति। देव्या उपहारार्पणमन्त्रे आदितस्त्र्यक्षरमम्बासु तत्तन्नाम चोन्नयेत्। द्वयोरुपरि स्वाहान्ते विच्चेति च योजयेत्। अमी सर्वत उपहारार्पणमन्त्राः। क्षेत्रपालाणुः क्षेत्रपालस्य मूलमन्त्रः "संवर्तश्चन्द्रदस्त्रेशमनुः स्वरविकल्पितः" इत्याद्यक्त एव। अङ्गाध्वाद्यपि अङ्गानि षडध्वानो विष्टरं पीठं च प्रायः शिवोक्तवद् ज्ञेयम्। नवशक्तय उच्यन्ते अनलेति।

**अनला चाग्निकेशा च काली घण्डारवा ततः।**
**महाक्रोधा पिङ्गलाक्षी सप्तमी पिशिताशना ।। १२४।।**

**ऊर्ध्वकेशा सर्वशक्तिः समष्टिर्मातृवद् भवेत्।**
**ओं ह्रीं लों लोहजङ्घाय क्षेत्रपालाय हृन्मनुः।। १२५।।**

**ओं ह्रीं (नीं) नीलजीमूतसङ्काशघोरदंष्ट्रभयानक!।**
**ऊर्ध्वकेश! सुरक्ताक्ष! क्षेत्रपाल! महोदर! ।। १२६।।**

**उपचारमनुस्त्वेष मालामन्त्रस्तु लिख्यते।**

**ओं ह्रीं तुरु तुरु मुरु मुरु भञ्ज भञ्ज हन हन सर्वविघ्नं नाशय नाशय भैरवरूपेण शिवाज्ञया पाद्यार्घ्याचमनीयमधुपर्क-गन्धपुष्पधूपदीपनिवेद्यबलिपूजां गृह्ण गृह्ण हुं हुं हं हं ह ह विच्चे स्वाहा।।**

**लोहजङ्घमनुं मालामनुमेह्येह्यतः परम्।**
**उपचारमनुं चोक्त्वा मूलेनावाहयेदमुम् ।। १२७।।**

समष्टिर्मातृवदेव स्यात्। लोहजङ्घक्षेत्रपालमन्त्रमाह – ओं ह्रीम् इति। उपचारमन्त्रं लिखति – ओं ह्रीं नीलेति। मालामन्त्रं लिखति – ओं ह्रीं तुरुतुर्विति। आवाहने मन्त्रयोजनमाह – लोहजङ्घेति। लोहजङ्घमनुं मालामनुं चोक्त्वा एह्येहीत्युक्त्वा उपचारमनुं चोक्त्वा मूलेनामुं क्षेत्रपालमावाहयेत्।

**पूजायामङ्गाष्टमूर्तिर्दिक्पालास्त्राणि पूजयेत्।**
**हेतुकस्त्रिपुरान्तश्चाप्यग्निवेतालकस्तथा ।। १२८।।**

**अग्निजिह्वोऽग्निकल्पेऽथ करालश्चैकपादकः।**
**भीमरूपोऽष्टमः क्षेत्रचण्डो निर्माल्यधार्यपि ।। १२९।।**

**तृतीयाह्नीशरुरुजिन्मातृणां मण्डपान् क्रमात्।**
**संस्कृत्य द्रव्यकलशपूजां कुर्याच्छिवोक्तवत् ।। १३०।।**

पूजायामङ्गाष्टमूर्तिदिक्पालैस्तदस्त्रैश्च पूजयेत्। अष्टमूर्तिराह – हेतुक इति। क्षेत्रचण्डो निर्माल्यधारी। कलशविधिमाह – तृतीय इति। प्रतिष्ठानन्तरं ततृतोयेऽह्नि ईशरुरुजिन्मातृणां पूर्वोक्तवन्मण्डपान् कृत्वा संस्कृत्य शिवोक्तवद् द्रव्यकलशपूजां कुर्यात्।



**द्वे द्वे त्रित्रिपुटान्तरे हरपुटे वीथीर्विधायादधी-**

**ताभिज्ञो नवपञ्चकानि नवकान्येवाथ वा क्षेत्रके।**
**द्वे द्वे पञ्चपुटान्तरे द्विनवसूत्रे वाऽथ कृत्वा नव-**
**क्षेत्रेत्यष्टिमितानि पञ्चकृतिसंख्यान्येव वा कल्पयेत्।। २३१।।**

रुरुजितीति वक्ष्यमाणत्वाद् देवीकलशमत्रोच्यते। हरपुटे क्षेत्रे एकादशपुटे क्षेत्रे अभिज्ञो विद्वान् गुरुः त्रिपुटान्तरं द्वे द्वे विथो विधाय नवसङ्ख्यानि खण्डानि नवकानि पञ्चकानि वा आदधीत। अथवा, द्विन वसूत्रे सप्तदशपुटे क्षेत्रे पञ्चपुटान्तरे द्वे द्वे वोथो कृत्वा नवसु स्थानेष्वपि अत्यष्टिमितानि वा पञ्चविंशतिसङ्ख्यानि वा खण्डानि कल्पयेत्।

**मध्येऽष्टासु च दिक्षु रत्नमथ पाद्याचाममर्घ्यं पयो**
**दध्याज्यं मधु पञ्चगव्यमजकुम्भेषु क्रमात्पूरयेत्।**
**रत्नान्यष्ट सलोहबीजकुसुमान्येषां मृदश्चौषधी-**
**र्न्यस्येत् क्वाथफलानि चापि परितः कुम्भेषु गन्धानपि ।।**
**१३२।।**

**हैमं त्रिशूलं खट्वाङ्गयुक्तो रत्नं पविः स्मृतम्।**
**दूर्वाश्यामाकजीमूतक्रान्तयः पाद्यमुच्यते ।। १३३।।**

**लवङ्कजातितक्कोलमाचामोऽर्घ्यजलं पयः।**
**कुशाग्रमक्षतं गन्धपुष्पं सयवसर्षपम् ।। १३४।।**

**रत्नानि मुक्तावैदूर्यं प्रवालं मरतं पुनः।**
**इन्द्रनीलं महानीलं कान्तं सूर्यशशाङ्कयोः ।। १३५।।**

**सुवर्णं रजतं ताम्रं कांस्यं सीसारकुटके।**
**लोहानि पित्तलं चाथ त्वायसं त्रपु वाऽष्टमम् ।। १३६।।**

**यवा द्विसर्षपा मुद्गास्तिलाः श्यामाकसंज्ञिताः।**

**बीजान्याचामपरितो नीवाराश्च प्रियङ्गवः ।। १३७।।**

**करवीरजपाशोकनन्द्यावर्तकमल्लिकाः।**
**श्वेतार्कमुत्पलं पद्ममष्ट पुष्पाण्यपि क्रमात्।। १६८।।**

**वल्मीके कुशमूले च क्षेत्रे नद्या द्वितीरतः।**
**वृषेभश्रृङ्गयोः कोलचर्विताच्च क्रमान्मृदः ।। १३९।।**

**क्रान्तिश्चौषधयो लक्ष्मीः सहदेवीन्द्रवल्लरी।**
**शङ्कुपुष्पी च सिंही च व्याघ्री च गिरिकर्णिका।। १४०।।**

**बिल्वब्रह्मद्रुखदिरमधूकवटचूतजा।**
**अश्वत्थपनसोत्थे च त्वचः क्वथितसाधनम्।। १४१।।**

**कदलीपनसाम्राणि बिल्वमामलकं पुनः।**
**मातलुङ्गफलानि स्युर्मव्यं[1] बीजादिपूरकम् ।। १४२।।**

**चन्दनं चैव कर्पूरमुशीरं कुष्ठमेव च।**
**काश्मीररोचनाग्रन्थिचोरागन्धाः क्रमादमी।। १४३।।**

**चामुण्डान्तर्द्रुहिणकलशे देवतास्योप[1]कुम्भे-**
**ष्वष्टौ दूत्यञ्च पुर उदिता बाह्यखण्डेषु भूयः।**
**ऐन्द्री वैष्णव्युदितविधया स्कन्दपोत्रीशजाता**
**ब्राह्मी विघ्नोऽपि रुरुजिति वीरस्वमूर्त्यन्विताः स्युः ।। १४४।।**

द्रव्यपूरणविधानमाह – मध्य इति। मध्यऽष्टासु दिक्षु च क्रमाद् ब्रह्मकुम्भेषु रत्नानि पञ्चगव्यान्तानि नवद्रव्याणि पूरयेत्। एषां परितः कुम्भेषु रत्नादिगन्धान्तिमान्यष्टकानि पूरयेत्। अत्र ब्रह्मकलशे हैमाभ्यां



१. 'द्रव्यं' च. २. 'द' ख. पाठः।।

त्रिशूलखट्वाङ्गाभ्यां युतं वज्रं रत्नोदं स्मृतम् पाद्याचमनीयार्घ्येषु योजनीयानि द्रव्याणि क्रमेणाह – दूर्वेति। जीमूतो मुस्ताकन्दं, क्रान्तिः विष्णुक्रान्तिः। परिकलशस्थानि रत्नादीनि गणयति – रत्नानि मुक्तेत्यादि। लोहे त्वष्टममायसं वा त्रपु वा, द्विसर्षपाः सिता असिताश्च गिरिकर्णिका कुटजे (ഞഴുക?) देवता आह – चामुण्डेति। अन्तर्गते ब्रह्मकलशे चामुण्डा देवता। अस्योपकुम्भेऽष्वष्टसु पुर उदिता महामायाद्या अष्टौ दूत्यः स्युः। भूयो बाह्यखण्डेषु पूर्वादीशान्तं प्रादक्षिण्येन क्रमेण ऐन्द्री वैष्णवी कौमारी वाराही माहेश्वरी ब्राह्मी विघ्नः वीरभद्रश्च मध्यस्थकलशेषु स्युः। स्वमूर्त्यन्विता इति – इन्द्राण्याः परितस्तुष्ट्याद्याः, वैष्णव्याः परित ऋध्याद्याः, कौमार्यास्तु भद्राद्याः वाराह्याः सुरूपाद्याः, माहेश्वर्याः जयाद्याः, ब्राह्म्यास्तु रटाकिन्याद्याः, गणपतेः परित आविन्याद्याः, वीरभद्रस्य परितोऽसिताङ्गादयः एताः तत्तत्परिकलशेषु पूज्याः स्युरित्यर्थः। रुरुजित्येवं द्रव्यदेवताक्रमक्लृप्तिः स्यात्।

**देव्यां स्वपीठपरिपूजनकुम्भसंस्का-**
**रादौ कृते न्यसतु चोदितदेवताभिः।**
**द्रव्यं प्रपूरयतु चाथ निजेन मूले-**
**नावाह्य साधु परिपूज्य मुजष्य रक्षेत् ।। १४५।।**

**पञ्चप्रणवगायत्री त्र्यक्षराणि नवाक्षरम्।**
**हंसाख्यं च मनुं जप्त्वा कार्यं कलशपूरणम् ।। १४६।।**

**देव्यां मातृषु च द्रव्यन्याससम्पूरणादिषु।**
**ब्राह्मे तदुपकुम्भेषु नवार्णार्णांश्च योजयेत्।। १४७।।**

**मूलं स्वविद्यां साङ्गं च व्योमव्यापिमनुं पुनः।**
**गायत्रीं नववर्णं च मन्त्री ब्रह्मघटे जपेत् ।। १४८।।**

**कृत्त्वा पुरोक्तमधिवासहुतं समर्प्य**

**सम्पातमेतदधिवासकृदुत्तरेद्युः।**
**देव्यां गुरूदितदिशा कृतनित्यपूजः**
**संस्नाप्य चोक्तमनुभिः कलशैर्यजेच्च।। १४९।।**

देव्याः कलशपूजारीतिमाह – देव्यामिति। पूरणमन्त्रमाह – पञ्चप्रणवेति। देव्या मातृषु च स्वस्वनवार्णमन्त्रस्यैकैकमक्षरं द्रव्यन्यासादिषु योजयेदित्याह - - देव्यामिति। ब्रह्मकलशे जपमन्त्रमाह – मूलमिति। क्रियाशेषमाह – कृत्वेति[1]। गुरूदितदिशा कृतानित्यपूजः तन्त्रसमुच्चयोक्तमार्गेण प्रातःकाले द्वारोद्घाटनादि-नित्यपूजानन्तरं कलशैः पूरणोक्तमनुभिः। संस्नाप्य यजेत्।

**स्वे स्वे खण्डे निजनिजविधानेन पीठार्चनादि**
**द्रव्यन्यासाद्यपि च सुविधायाभिवाह्यैषु तां ताम्।**
**कुम्भेष्वभ्यर्चयतु हुतकृत् स्वस्वदिक्कुण्डवह्नि-**
**ष्वेतैरम्बाः स्नपयतु समुक्तक्रमेणापरेद्युः ।। १५०।।**

एवमेव मातॄरपि स्नापयेदित्याह – स्वे स्व इति। तत्र पूर्वादिष्विन्द्राण्यादीनां खण्डेषु निजनिजविधानेन पीठार्चनादिद्रव्यन्यासाद्यपि सुविधाय एषु कुम्भेषु तां तां देवतामभिवाह्याभ्यर्चयतु। स्वस्वदिक्कुण्डवह्निषु हुतं कृत्वापरेद्युरतैः समुक्तक्रमेणाम्बां स्नपयतु।

**पूर्वादिमध्यचरमैः स्नपनं क्रमेण**
**देव्यां प्रधानपरिकुम्भचयैर्विधेयम्।**
**द्रव्यक्रमेण जननीषु यथोदितं वा**
**स्यात् स्वक्रमेण शिवसोमदिगादि वापि।। २५१।।**

देव्यां स्नानक्रममाह – पूर्वादीति। जननीषु यथोदितद्रव्यक्रमेण स्नपनं वा स्यात्। स्वक्रमेण वीरभद्रादि शिवसोमदिगादि वा स्यात्।



१. 'दत्त्वा' इति मूलपाठः।।

**नवापि खण्डा यदि पञ्चकाः स्यु-**
**र्द्रव्याणि कोणेषु न देवताश्च।**
**स्यात्केवलैर्ब्रह्मघटैरपीह**
**यथोक्तमिष्टैः स्नपनं कदाचित्॥ २५२॥**

उक्ते कलशक्षेत्रे नवखण्डा अपि पञ्चका एव स्युः यदि तर्हि तत्र कोणेषु द्रव्याणि देवताश्च न स्युः। इह कदाचित् केवलैर्ब्रह्मघटैरेव यथोक्तं पूजितैः स्नपनं स्यात्।

**प्राक्प्रत्यक्क्रमतोऽथ सप्त नवकानि प्रान्त्ययोर्दक्षिणे**
**द्वे चाधाय सवीथिकानि कुशलो दुग्धं च लोहं दधि।**
**गौलाज्यं मधुतैलरत्नसलिलं केरीरसं पूरयेद्**
**ब्राह्मेष्वच्छजलं परेषु विधिवच्छालाकृतौ मण्डपे॥ २५३॥**

मातृषु पक्षान्तरमाह – प्राक् प्रत्यगिति। शालाकृतौ मण्डपे कुशलो गुरुः प्राक्प्रत्यक्क्रमतः सप्त तत्प्रान्तयोर्दक्षिणे भागे द्वे च, वीथीभिः सहितानि नवकान्याधाय तेषु ब्राह्मेषु दुग्धादिकेरीरसान्तानि द्रव्याणि क्रमेण पूरयेत्। परिकुम्भेष्वच्छजलं च पूरयेत्।

**वीररौद्र्यादिविघ्नान्तिमान् पूजये-**
**देषु हुत्वाऽथ सम्पातमापातयेत्।**
**द्रव्यशुद्धोदकैस्तैश्च ताः स्नापये-**
**दुत्तरेद्युस्ततोऽभ्यर्च्य सन्तोषयेत्॥ २५४॥**

एषु कलशेषु वीरभद्रचामुण्डादिगणपत्यन्तान् पूजयेत्। हुत्वा संपातं चापातयेत्। तत उत्तरेद्युस्तैर्द्रव्यैः शुद्धोदकैश्च तान् स्नापयेत्। अभ्यर्च्य सन्तोषयेच्च।



**पञ्चकान्येककान्येव वैतानि तु**

**स्युः पुरोक्तेऽथ वा क्षेत्रके बुद्धिमान्।**
**वीररौद्ग्रादिविघ्नान्तिमान् मध्यमा-**
**द्यैशनिष्ठेषु सम्पूज्य तैः स्नापयेत् ।। २५५।।**

एतानि तु पञ्चकानि वा एककान्येव वा स्युः। पुरोक्ते क्षेत्रके वाथ बुद्धिमान् मध्यमाद्यैशनिष्ठेषु स्थानेषु वीरभद्रविघ्नादिरौद्ग्रन्तिमास्ता सम्पूज्य तैः स्नापयेच्च इति पक्षबहुत्वमुक्तम्।

**देव्यां शिवोक्तरीत्या वा क्षेत्रं कृत्वा यथोचितम्।**
**स्वपञ्चविंशतिद्रव्यैरापूर्येष्ट्वाभिषिञ्चतु।। २५६।।**

अथवा देव्यां शिवोक्तरीत्या यथोचितं क्षेत्रं कृत्वा स्वैः (पञ्चः पञ्चविंशतिद्रव्यैरापूर्येष्ट्वाभिषिञ्चतु।

**पाद्याचामार्घ्यगव्यं क्वथितदधि सदुग्धं घृतं दिग्विदिक्षु**
**स्युर्मर्त्यांशे जयन्तादिषु मधुगुलगन्धं फलं हेम पुष्पम्।**
**यावं कौशं ततो मृत्सरसिजतिलधान्यं प्रियङ्ग्वामिषोदं**
**खर्जूरं रत्नतोयं दिशि विदिशि सुरांशेऽन्तिमं रक्तकं वा।।**
**२५७।।**

तानि क्रमेणाह – पाद्येति। मर्त्यांशे दिग्विदिक्षु पाद्यादिघृतान्तानि स्युः। तत्र जयन्तादिषु मध्वादिकौशान्तानि। ततः सुरांशे दिशि विदिशि च मृदादिरत्नतोयान्तानि स्युः। अन्ते रत्नतोयस्थानि रक्तोदकं वा स्यात्।

**हेमरत्नोदकं मध्ये ब्रह्मकुम्भे प्रपूर्य च।**
**पाद्यादि पूरयेदेवं पूर्ववच्च हुतादिकम्।। २५८।।**

मध्ये ब्रह्मकुम्भैः हेमरत्नोदकं प्रपूर्य एवं पाद्यादि पूरयेत्। हुतादिकं सर्वं पूर्ववत्।

**अधिवासः कृतो देवि! क्षम्यतामुपरोधनम्।**
**क्षणेन मे प्रसादोऽस्य क्रियतां परमेश्वरि!।। २५९।।**

**पाद्याद्यैः स्नपयित्वैवं ब्रह्मकुम्भेन चान्ततः।**
**अवस्रुतोदकैः प्रोक्ष्य परिवारान् यजेत च।। २६०।।**

अत्र द्रव्यकलशैः स्नानकाले क्रमेण पूर्वं पाद्याद्यैः स्नापयित्वान्ततो ब्रह्मकुम्भेन च स्नापयित्वावस्रुतोदकैः परिवारान् प्रोक्ष्य शिवां यजेत्।

**मूलं ब्राह्मेऽङ्गमनवः सुरांशे मातरोऽपि च।**
**महामायादयश्चापि मर्त्यांशे मनवः क्रमात्।। २६१।।**

[1]प्रार्थनामन्त्रे भेदमाह – अधिवास इति। पूरणपूजाजपस्नानेषु मन्त्रानाह – मूलमिति। ब्राह्मे मूलं, सुरांशे अङ्गमनवः, मर्त्यांशे मातरो महामायादयश्च क्रमान्मनवः स्मृताः।

**क्षेत्रपालं स्वकलशैरभिषिच्य शिवस्य च।**
**भैरव्या जननीनां चावस्रुतैः प्रोक्ष्य पूजयेत् ।। २६२।।**

पुनः क्षेत्रपालं च शिवोक्तक्रमेण स्वकलशैरभिषिच्य शिवस्य भैरव्या जननीनां चावस्रुतैः प्रोक्ष्य यथोक्तमार्गेण पूजयेत्।

इति शेषसमुच्चये अष्टमः पटलः।

१. मूले प्रार्थनामन्त्रः ५९ तमः श्लोकः।।

# अथ नवमः पटलः।

**अथोत्सवं देवरुरुद्विडम्बा-**
**सूक्तप्रकाराहितबीजवापः।**
**स्वस्वाग्रतः स्थापितवाहनोद्यद्-**
**ध्वजो विदध्याद्विभवैः समृद्धम्॥ १॥**

तत उत्सवं विधत्ते – अथेति। देवरुरुद्विडम्बासूक्तप्रकारेण[1] कृतत्रिविधबीज-वापको गुरुः स्वस्वाग्रभागे स्थापितैर्वाहनैरूर्ध्वकृतध्वजलक्षणो भूत्वा नानाविभवैः समृद्धमुत्सवं विदध्यात्।

**देवे ध्वजो गुरुसमीरित एव देव्यां**
**वेतालवाहनयुतो जननीषु भूयः।**
**स्यात् कौशिकैकलसितो ध्वज एक एव**
**तत् स्थापनक्रम इहेश्वर उक्त एव॥ २॥**

तत्र देवे गुरुसमीरितस्तन्त्रसमुच्चयोक्त ऋषभ एव ध्वजः। देव्यां वेतालनाम्ना वाहनेन युतः, जननीषु कौशिकैकलसितः कौशिकनाम्ना एकेनैव वाहनेन शोभमानश्च ध्वजः स्यात्। इह तत्स्थापनक्रम ईश्वर उक्त एवः तन्त्रसमुच्चये शिवोक्तक्रम एवेत्यर्थः।

**वाहने वा पटे वापि देव्यग्रस्थितवाहनात्।**

१. 'क्रमेण' च. पाठः।

**आवह्य ध्वज आरोप्य तमुत्थाप्य प्रपूजयेत् ।। ३।।**

तत्र देव्यां देव्यग्रस्थितवाहनाद् ध्वजस्थानं पूर्वमेव कृतं चेत् तत्पटे तदैव स्थाप्यते चेद् वाहने चावाह्य ध्वज आरोप्य तमुत्थाप्य प्रपूजयेत्।

**ओं नमोऽस्तु पताकायै सर्वलोकस्य धात्रियै।**
**उत्सवस्य महादेव्यास्त्राययस्व सदा नमः।। ४।।**

**उत्सवस्य च मातॄणामिति।**
**परितोऽष्टौ ध्वजानन्यान् लोकपालाङ्कचिह्नितान्।**
**शिवस्य स्थापयेद्देव्या मातॄणां च विधानवित् ।। ५।।**

उपस्थानमन्त्रं लिखति – ओंनम इत्यादि। पुनः शिवस्य देव्या मातॄणां च लोकपालाङ्कचिह्नितान् प्रत्येकमष्टावन्यान् ध्वजांश्च परितः स्थापयेत् ।।

**शिवध्वजाग्रे परिपूज्य भेरीं**
**तदुक्तरीत्याऽथ च तां प्रयोक्ता।**
**सन्ताडयेत् तेन च सर्वभूता-**
**न्यत्रागतान्यर्ध्यकरोऽर्थयेत ।। ६।।**

शिवध्वजाग्रे शिवध्वजस्याग्रभागे तदुक्तरीत्या भेरीपूजां कृत्वा तत्प्रयोक्ता तां भेरी सन्ताडयेत्। तेन भेरीताडनेनात्रागतानि सर्वभूतानि अर्घ्यकरोऽर्घ्यप्रदानपूर्वं प्रार्थयेत।

**उत्सवं कुर्महे शक्त्या यावद्यागः समाप्यते।**
**अविघ्नं तावदस्माकमस्तु युष्मत्प्रसादतः ।। ७।।**

**सहिता देवदेवेन प्रसीदन्त्वत्र मातरः।**
**विघ्नेशो रक्षतु प्रीतः कार्ये निर्वर्तितुं सुखम् ।। ८।।**



**तस्यां दिशि शिवं देवीं मातॄश्च क्षेत्रपालकम्।**

**पूजयित्वा स्वमनुभिः कुर्याद् भूतबलिं गुरुः ।। ९ ।।**

तन्मन्त्रं लिखति – उत्सवमित्यादि। गुरुस्तस्यां [1] निशि शिवादीन् पूजयित्वा भूतबलिं कुर्यात्

**दिनेषु शेषेषु विशेषपूजा-**
**मेषां विदध्यात् सवनत्रयेऽपि।**
**दिवा च नक्तं च तथोत्सवाख्यं**
**बलिं प्रदद्यादपि भौतिकं वा ।। १० ।।**

शेषेषु दिनेषु सवनत्रयेऽपि एषां शिवादीनां विशेषपूजां विदध्यात्। दिवा च नक्तं चोत्सवाख्यं वा भौतिकं वा बलिं दद्यात्।

**शुद्धाम्बुदुग्धदधिनी घृततैलगव्य-**
**क्वाथाश्च गन्धसलिलं कलशा नवैतैः।**
**मध्याह्निकं स्नपनमीरितमेकवीर्या-**
**मम्बासु चेह सकलं तु शिवे गुरूक्तम्।। ११ ।।**

इहैकवीर्यामम्बासु च शुद्धाम्ब्वादिकलशान्तैरेतैर्नवभिर्माध्याह्निकं स्नपनमीरितं स्यात्। शिवे सकलं तन्त्रसमुच्चयोक्तमेव।

**देवीषु पायसे गौलं हारिद्रं च निवेद्यताम्।**
**त्रिषु क्रमेण सवनेष्वंशभाक् क्षेत्रपो भवेत् ।। १२ ।।**

देवीषु एकवीर्यां मातृषु च त्रिषु सवनेषु क्रमेण पायसादीनि निवेद्यान्ताम्। क्षेत्रपालोऽपि तदंशभाग् भवेत्।

**शिवादिष्वपृथक् पूजा बलिरप्यपृथग्भवेत्।**
**शिवे बलिर्गुरूक्तोऽथ देवीषु बलिरुच्यते ।। १३ ।।**



१. 'दिशि' इति मूले दृश्यते ।।

शिवादिष्वपृथग् एकेनैव गुरुणा क्रमेण पूजा कार्या। तथासति बलिरप्यपृथगेकेनैव गुरुणा भवेत्। शिवे बलिस्तन्त्रसमुच्चयोक्तः। एवं देव्यां मातृषु च बलिरुच्यतेऽस्माभिः।

**अन्तर्द्वाःस्थौ गणेशो रुरुजिति गिरिशो न त्वमी साङ्गभिन्ने**
**द्वाःस्थाः द्विःषट् पुरो द्वे प्रतिदिशमपि चेन्द्राद्यजान्तं स्ववाहः।**
**मात्राद्याः स्युर्निरङ्गे सति गुहचरमाः शेषभुक् चाथ मातृ-**
**ष्वेवं द्वाःस्थास्तु न द्विः षडिह नव तु वाहा बलौ भूतभाजि ।। १४।।**

तत्र भूतबलिं सङ्गृह्णाति – अन्तरिति। रुरुजिति भूतभाजि बलौ पूर्वमन्तर्गतद्वाःस्थौ। ततो गणेशो गिरिशो दक्षिणामूर्तिश्च। साङ्गभिन्ने च क्षेत्रे तु अमी उक्ता न स्युः। पुनः पुरोभागे द्विषट् द्वादश द्वाःस्थाः स्युः। प्रतिदिशं द्वे द्वे च द्वाःस्थाः। पुनरिन्द्राद्यजान्तं लोकपालाः पुनः स्वस्य वाहनं च। निरङ्गे क्षेत्रे सति मात्राद्या गुहचरमाश्च शेषभुक् च। अथ मातृष्वेवमेव। इह द्विषट् द्वाःस्थाः न स्युः। वाहास्तु वाहनानि नव स्युः।

**सभान्तर्मातॄणां रुरुजित इहान्तर्बहिरपि**
**क्रमाद् द्वाःस्थाः स्वाग्रप्रभृति च बहिः केतुपतयः।**
**ततः पञ्चाशद्भूतगणबलिरग्रे दश पुन-**
**र्महापीठे भूयो ग्रहबलिरपि क्षेत्रपबलिः ।। १५।।**

पुनर्मातॄणां सभान्तर्भागे रुरुजित इह सभायामन्तर्बहिश्च क्रमाद् द्वाःस्थाः स्युः। मातृषु मातरि च बहिः स्वाग्रप्रभृति स्वस्वाग्रत आरभ्य केतुपतयश्च। ततः पञ्चाशद्भूतगणबलिः। पुनरग्रे महापीठे दशाष्टदिक्ष्वध ऊर्ध्वं च भूयो ग्रहाणां बलिः। क्षेत्रपबलिरपि च।

**अन्तर्नन्दिमहाकाळौ द्वाःस्थावीशोऽम्बिकास्वपि।**

**याम्ये पार्श्वे गणपतिर्दक्षिणामूर्तिरेव च ।। १६।।**

**शूलपाणिः परशुपाणिर्बहिर्द्वाःस्थौ त्रिशूलिनः।**
**सपर्यायामिवेन्द्रादिब्रह्मान्ता दश लोकपाः ।। १७।।**

एवं भूतबलिं सङ्ग्रहेणोक्त्वा शिवदेवीमातृक्रमेण निरङ्गमाश्रित्य तद् विवृणोति – अन्तरित्यादि। ईशेऽम्बिकास्वपि प्रासादान्तर्भागे नन्दिमहा कालौ द्वाःस्थौ समानौ गणपतिर्दक्षिणामूर्तिश्च तत्र शूलिनो विशेषाच्छूलपाणिपरशुपाणी द्वाःस्थौ च स्याताम्। पूजायामिवेन्द्रादिब्रह्मान्ता लोकपालाः।।

**किन्त्वत्र धनदेज्या स्यात् सोमोदग्वाहमग्रतः।**
**वीरभद्रो गणपतिस्तन्मध्ये सप्त मातरः ।। १८।।**

**चामुण्डाद्यापि वा मध्या तथा वाऽन्तेऽपि वेज्यताम्।**
**मात्राद्याः षट् तु तन्मध्ये तत्र मालामनुर्भवेत् ।। १९।।**

**तत्रैव गणमन्त्रश्च मूलं च स्वागमोदितम्।**
**मातरः केवला लोकाकाशभूतयुता अपि ।। २०।।**

**गुह्यसर्वयुताः षट् स्युरन्ते तत्परिषट्बलिः।**
**शास्ता दुर्गा गुहश्चैव ततश्चण्डेश्वरः क्रमात्।। २१।।**

अत्र धनदस्य पूजा सोमस्योदग्भाग इष्यते। इष्यत इत्यनेनैव लोकपालानन्तरं मण्डपस्थ ऋषभबलिरपि सूचितः। मातृबलौ चामुण्डा आद्या प्रथमा पितृसतीमाता सा तथा वा अन्ते वेज्यताम्। तत्र तासां मातृणां मध्येऽन्तर्गते स्थाने मात्राद्याः षणमन्त्राः स्युः। तत्र मालामनुर्गणमूलमन्त्रश्च स्वागमोदितक्रमाद् भवेत्। षण्मन्त्रान् पठति – मातर इति। केवला मातृभ्यो नम इत्येव। लोकाकाशभूतयुताः गृह्यसर्वयुताः लोकमातृभ्य इत्यादि। अन्ते तत्परिषद्बलिश्च स्यात्। पुनः शास्त्रादि समानम्।

**सोम एव पुरेष्टश्चेद् घनदेज्येह युज्यते।**
**वायव्यां धनदः स्कन्दास्पदे दुर्गाऽथवाऽन्यथा।। २२।।**

**सोमोदगास्पदे स्कन्दश्चण्डेशः स्वास्पदे भवेत्।**
**शिवेऽथ गोपुरद्वाःस्थौ सिंहोदरबिलाळकौ ।। २३।।**

पूर्वं सोमं एवेष्टश्चेदिह धनदेज्या युज्यते। अथवा वायव्यां धनदः तन्मध्यस्थाने दुर्गा च। अन्यथा वा। सोमस्योत्तरभागे स्कन्दः चण्डेशः सर्वथा स्वास्पद एव। शिवे गोपुरद्वाःस्थौ सिंहोदरो विलाळश्च। तत्र ध्वजाष्टके पूर्वं भृङ्गी पुनर्महाकालादयः पुनर्विंशद्भूतादिषु विशेषो नास्ति।।

**बहिर्ध्वजाधिपा भृङ्गिमहाकाळादयः क्रमात्।**
**भृङ्गीमहाकाळसभूतनाथ-**
**महीधराख्यौ सहपर्वतेशौ।**
**ततो गुहेशाभिधकालपाशौ**
**कपालिनश्चाष्ट शिवे ध्वजेशाः ।। २४।।**

**न शेषेषु विशेषोऽस्ति विंशद्भूतगणादिषु।**
**फट्कारी भूर्भुवेशानी हुङ्कारी भुवनान्तकी।**
**नादनी नन्दिनी देव्या योगिन्यो द्वारि दक्षिणे ।। २५।।**

**ज्वालामाला विलाळी च कालदण्डी कराळिनी।**
**कपाली काळरात्री च सव्यपार्श्वेऽपि षट् क्रमात् ।। २६।।**

**भीषणी मुण्डकी द्वाःस्थाः सुमुखी दुर्मुखी द्विशः।**
**मर्दनी मारणी दिक्षु कालः कामहरः क्रमात् ।। २७।।**

**पश्चिमादिक्रमेणोक्तास्तद्द्वार्भेदव्यपेक्षया।**
**ब्रह्मान्ता दश दिक्पाला वेतालोऽग्रे तु वाहनम्।। २८।।**

देव्यामग्रगतं द्वाःस्थद्वादशकं पठति – फट्कारिरिति। चतुर्दिग्गतं द्वाःस्थगणमाह – भीषणीति। पश्चिमादिक्रमेणेति। देव्या पश्चिमाभिमुखत्वमुद्दिश्योक्तम्। यद्यभिमुखी देवी तत्तद्दिगन्तमारभ्येत्यर्थः। ब्रह्मान्ता एव लोकपालाः। अग्रे वेतालो वाहनं स्यात्।।

**मात्रादिशेषपर्यन्तं हरिणी शेषभुग्भवेत्।**
**हरिण्याः पूर्वमेवात्र दिक्षु पाश्यादयोऽपि वा ।। २९।।**

**पाशी कुम्भकर्णो मण्डः शूलपाणिर्यथाक्रमम्।**
**मुण्डो विकटवक्त्रोऽपि पश्चिमा यमराक्षसौ।। ३०।।**

**सभान्तः पूर्णभद्रौ द्वौ बहिश्च वृषलालसौ।**
**कोटराक्षी विशालाक्षी मुक्तकेशी विभीषणी।। ३१।।**

**कुब्जाक्षी व्योमरूपा च सहस्राक्षी कलेबरी।**
**देव्या ध्वजाधिपा एताः पश्चिमादिक्रमाद् बहिः ।। ३२।।**

**पञ्चाशद्भूतगणेभ्यस्त्वष्ट दिक्षु ततः परम्।**
**फट्कारी चैव हुङ्कारी फेट्कारी भूतडामरी ।। ३३।।**

**कुब्जाक्षी च विरूपाक्षी विद्युज्जिह्वा त्रिशूलिनी।**
**देव्यग्रबलिपीठस्य प्रागाद्यासु पिशाचिकाः ।। ३४।।**

**पिङ्गलीक्षी कुमुदके वीरसेना तथोपरि।**
**ग्रहावरणमिष्ट्वाथ क्षेत्रपालबलिं हरेत् ।। ३५।।**

**विलाळी कृष्णजिह्वा च कालरात्री चतुर्मुखी।**
**नीलकेशीभयङ्कर्यौ कोटराक्षी विलासिनी ।। ३६।।**

**उत्तरादिचतुर्दिक्षु द्वाःस्था मातृष्विमा द्विशः।**
**सोमादिब्रह्मपर्यन्तं वाहनानि नवाग्रतः ।। ३७।।**

**ऋषभो मूषिको हंसो बाडबेयो मयूरकः।**
**गरुडो महिषश्चापि गजोऽप्यथ तु कौशिकः ।। ३८।।**

**यत्र मातृषु चामुण्डी यदा तत्र तदा त्वयम्।**
**मात्रादिशेषभुङ्निष्ठं प्राग्वा शेषभुजस्त्विमाः ।। ३९।।**

**स्यात् पुष्पमर्दिन्यथ सुगन्धिनी यज्ञवेद्यपि।**
**विलासिनी ततः शत्रुविमर्दन्यथ गोमुखी ।। ४०।।**

**उत्तरादिक्रमात् प्रेतवाहिन्यष्टौ सुमुख्यपि।**
**सभान्तस्तीक्ष्णदंष्ट्रश्च मृगास्यश्च ततो बहिः ।। ४१।।**

**स्तम्भनी शोषणी चैव कम्पनी मरुवाहिनी।**
**धूम्राक्षी च विशालाक्षी सुमुखी दुर्मुखी तथा ।। ४२।।**

**ध्वजेश्य उत्तराद्याः स्युः पञ्चाशद्भूतसंज्ञकः।**
**गणोऽष्टदिक्ष्वग्रपीठे फेट्काराद्या दशोदिताः ।। ४३।।**

**राक्षसादिग्रहबलिः क्षेत्रपालबलिस्ततः।**
**पृथक् क्रमो बलेरेवमुच्यते वापृथक्क्रमः ।। ४४।।**

**देवेऽन्तर्बलिरम्बिकास्वभिहिता द्वाःस्थेन्दवो रुर्वरौ**
**योग्निन्यो द्विषडम्बुपादि दश दिग्द्वाःस्थान्विता मातृषु।**
**दिग्द्वाःस्थान्वितलोकपावरणगेशा वाहका मर्दिनी**
**वाहः पाशिमुखा रुरुद्विषि परास्वारब्धशेषावृतिः ।। ४५।।**

मात्रादिशेषपर्यन्तं मात्रादिशेषमित्येवार्थः। हरिणी निर्माल्यधारिणी तस्याः पूर्वमष्टदिक्षु पाश्यादयो वा स्युः। पश्चिमादिक्रमेण पाश्यादीन् पठति – पाशीति। सभायामन्तर्बहिश्च द्वाःस्थद्वयमाह – सभायामिति। ध्वजाधिपा आह – कोटराक्षीति। ततः परं पञ्चाशद्भूतगणः। महाबलिपीठपरिवारमाह

– फट्कारीति। पुनर्गुहावरणानन्तरं क्षेत्रपालं यजेत्। अथ मातृषु प्रासादस्योत्तरादिचतुर्दिशं द्वाःस्थद्वयमिति तदाह – विलाळीति। पुनः सोमादिब्रह्मपर्यन्ताः लोकपालाः। वाहननवकमाह – ऋषभ इति अत्र यदा यत्रादौ वा मध्ये वान्ते वा चामुण्डा स्यात् तत्र त्वयं कौशिक स्यात्। पुनर्मात्रादिशेषभुक्पर्यन्तं निर्माल्यधारिण्या महाजिह्वायाः पूर्वमुत्तरादिक्रमेण पुष्पमर्दिन्यादि वा स्यादित्याह – स्यादिति। सभान्तर्गतं द्वाःस्थद्वयं पूजयित्वोत्तरादिक्रमाद् ध्वजाधिपान् पूजयेदित्यभिप्रेत्याह – सभान्तरिति। ततः पञ्चाशद् भूतसंज्ञो गणोऽष्टदिक्षु स्यात्। ततोऽग्रे महापीठे फट्कार्याद्याः दश स्युः। ततो राक्षसादिग्रहबलिः क्षेत्रपालबलिश्च। एवं शिवदेवीमातृणां भूतबलेः पृथक् क्रमः स्यात्। अथापृथक्क्रमः सह बलिक्रम उच्यते – अत्र पूर्वं देवे द्वाःस्थादिचण्डेश्वरान्तमन्तर्बलिः स्यात्। ततोऽम्बिकासु द्वाःस्थेन्दवः। नन्दिमहाकालद्वाःस्थौ सोमश्चाभिहिताः। ततो रुर्वरौ फट्कार्याद्या द्वादश योगिन्यः; पुनर्दिग्द्वाःस्थाः पुनरम्बुपादिदश लोकपालाः स्युः। पुनर्मातृषु दिग्द्वाःस्थाः पुनरीशानादिलोकपालाः; पुनर्ऋषभादि नव बाहकाः; ततो मर्दिनी पुष्पमर्दिनी। ततो रुरुद्विषि वाहो वेतालः। पाशिमुखा अष्टौ च। परासु मातृष्वारब्धशेषावृतिः सुगन्धिन्यादि सप्त स्युः।।

**हरिणी च महाजिह्वा शिवमातृरुरुद्विषाम्।**
**अथोत्सवबलिस्तत्र प्रथमं प्रोच्यते शिवे।**
**स्फुट स्फोटय हुं त्र्यक्ष स्वाहैवं नन्दिनो मनुः ।। ४६ ।।**

पुनर्हरिणी महाजिह्वा च। पुनः शिवमातृरुरुद्विषां क्रमेण सभाद्वाःस्थाः; पुनर्बहिः पूर्वद्वारेण गत्वा प्रागाद्याद्व्यावृतयः द्विद्व्यावृतयः त्रयस्त्रिविधाः पुनः शिवमातृदेवीनां महाबलिपीठेषु स्वस्वावरणयुक्तो बलिः; पुनः शिवे देवग्रहादिशेषश्च स्यात्। एवं भूतबलिमुक्त्वोत्सवबलिविधिमाह – अथेति। तत्र प्रथमं शिवस्योत्सवबलिरुच्यते – तत्र नन्दिमहाकालमन्त्राभ्यां तन्नामभ्यां

तत्पारिषदेभ्यश्च बलिं दत्त्वा गणपतिदक्षिणामूर्तिभ्यां च बलिं दत्वा बहिर्द्वाःस्थादिकमुपस्थाय बलिं हरेदिति विवक्षन्नाह – स्फुट स्फोटयेत्यादि।

**महाकाळस्य शक्तिः प्रों कपालिन् हो हृदन्वितः।**
**विघ्नेशान्ते बहिर्द्वाःस्थावुपस्थाय बलिं हरेत् ।। ४७।।**

**नमस्ते द्वारियुक्ताय शूलहस्ताय धीमते।**
**दृष्ट्या निहतदैत्याय शाङ्कराय नमो नमः ।। ४८।।**

**ओं शूलपाणये नमः, तत्पारिषदेभ्यो नमः।**
**नमस्ते द्वारि युक्ताय परशोर्ज्वालया वृत।।**
**दृष्ट्या विहतदैत्याय शाङ्कराय नमो नमः ।। ४९।।**

**ओं परशुपाणये नमः, तत्पा०**
**दिक्पालानामुपस्थानं बलिं तन्मनुभिः क्रमात्।**
**ओं नमो भूतपूर्वस्यां ये भूतास्त्वोजदिक्ष्वपि ।। ५०।।**

**दैत्यदर्पविनाशाय सरस्त्राक्षाय धीमते।**
**कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो! ।। ५१।।**

**ओमिन्द्राय सुराधिपतये रुद्रपारिषदे नमः, तत्पा०**

**ओं नमो भूतेभ्यो भुतकृद्भ्यः सर्वेभ्योऽरिष्टकृद्भ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यो नमो नमः स्वाहा।**

**पूर्वस्यां दिशि शिवस्य भगवतो ये गणा वज्रपाणयः श्यामाः श्यामाक्षाः श्यामनिभाः श्यामलोहिता दिव्यन्तरिक्षभौमाः पाताळवासिनश्च तेषां सर्वेषां बलिं हरामि, महद्भ्यः क्षुद्रकेभ्यः सर्वेभ्यस्तेभ्यस्ताभ्यो नमो नमः स्वाहा।**

ये भूताः पुरस्सदो निशाचरा रौद्राः सन्तोऽसन्तः सदसन्तो विरूपा विश्वरूपा घोररूपा महारूपा मृगास्या विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदाश्च बलिमिच्छन्ति तेषां, सर्वेषां बलिं हरामि महद्भ्याः क्षुद्रकेभ्यः सर्वेभ्यस्तेभ्यस्ताभ्यो नमो नमः स्वाहा।

मुखं यः सर्वदेवानां येन हव्यं च नीयते।
यस्मात् प्रवर्तते सर्वं नमस्तस्मै हविर्भुजे ।। ५२।।

अग्नये तेजो० तत्पा०

ओं नमो भूतेभ्यो०, आग्नेय्यां दिशि शिवस्य भगवतो ये गणाः शक्तिपाणयो रक्ताः०

येन संह्रियते सर्वं येन धर्मश्च रक्ष्यते।
यस्माद् बिभेति लोकोऽयं प्रेतनाथ! नमोऽस्तु ते ।। ५३।।

यमाय प्रेता० तत्पा०

ओं नमो भूतेभ्यो०, याम्यायां दिशि शिवस्य भगवतो ये गणा दण्डपाणयः कृष्णाः ०

ये भूता दक्षिणसदो०

राक्षसा यातुधानाश्च यस्यासन् वशवर्तिनः।
तस्मै निर्ऋतिरूपाय रक्षसां पतये नमः ।। ५४।।

निर्ऋतये रक्षो० तत्पा०

ओं नमो भूतेभ्यो०, नैर्ऋत्यां दिशि शिवस्य भगवतो ये गणाः खड्गपाणयो नीलाः०



येन प्रसूयते सर्वं यस्मिन् सर्वं प्रलीयते।

अमोघपाशहस्ताय तस्मैऽपां पतये नमः ।। ५५।।

वरुणाय जला० तत्पा०

ओं नमो भूतेभ्यो०, वारुण्यां दिशि शिवस्य भगवतो ये गणाः पाशपाणयः श्वेताः०

ये भूताः पश्चिमसदः०

पूर्यन्ते च ह्रियन्ते च येन प्राणादयः क्रमात्।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते! ।। ५६।।

वायवे प्राणा० तत्पा०

ओं नमो भूतेभ्यो०, वायव्यां दिशि शिवस्य भगवतो ये गणाः अङ्कुशपाणयः पीताः०

यत्प्रसादाज्जगत्सर्वं घनेन परिपूर्यते।
यक्षगुह्यकनाथाय धननाथ! नमोऽस्तु ते ।। ५७।।

कुबेराय यक्षाधि० तत्पा०

ओं नमो भूतेभ्यो०,

यं प्राश्यामरतां यान्ति देवा यज्ञशरीरिणः।
सोमाय गदिने तस्मै ज्योतिषां पतये नमः ।। ५८।।

सोमाय नक्षत्रा० तत्पा०

ओं नमो भूतेभ्यो०, कौबेर्यां दिशि शिवस्य भगवतो ये गणा गदापाणयः सिताः०

ये भूता उत्तरसदो०

येन कालाग्निना लोको युगान्तेष्ववदह्यते।
तस्मै ते ब्रह्मणः पुत्र! विरूपाक्ष! नमोऽस्तु ते ॥ ५९॥

ईशानाय विद्या० तत्पा०

ओं नमो भूतेभ्यो०, ऐशान्यां दिशि शिवस्य भगवतो ये गणाः शूलपाणयः कपिला०

पन्नगाधिपतिर्देवो अनन्तो नाम नामतः।
पाताळवासिने नित्यं नागराज! नमोऽस्तु ते ॥ ६०॥

अनन्ताय नागा० तत्पा०

ओं नमो भूतेभ्यो०, अधस्तादिशि शिवस्य भगवतो ये गणा विषपाणयः सूक्ष्मा०

येन सृष्टं जगत्सर्वं सर्गादौ विष्णुशासनात्।
पितामह! नमस्तुभ्यं सर्वलोकेश! पद्मज! ॥ ६१॥

ब्रह्मणे लोकाधिपतये रुद्रपारिषदे नमः। तत्पारिषदेभ्यो नमः।

ओं नमो भूतेभ्यो०, उपरिष्टाद् दिशि शिवस्य भगवतो ये गणाः पद्मपाणयः पिता०

ये भूताः उपरिषद ०

वाहनाय महाशम्भोः शैलर्णवघनस्वन!।
ऋषभाय नमस्तेऽस्तु सर्वदुष्टप्रशान्तये ॥ ६२॥

ऋषभाय नमः, हरवाहनाय नमः, सौरभेयाय नमः, महाबलाय नमः,। सौरभेयाय विद्महे महाबलाय धिमहे। तन्नो वृषः प्रचोदयात्। तत्पा०

**वीरभद्र! नमस्तेऽस्तु नमो विघ्नेश्वराय च।**
**ब्राह्म्यादिभ्यश्च मातृभ्यः सर्वाभ्यो वै नमो नमः ।। ६३ ।।**

**ओं ह्रीं श्रीं वीं वीरभद्राय विच्चे नमः। ओं ह्रीं श्रीं वीरभद्राय विद्महे महाकाळाय धीमहे। तन्नः शान्तः प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं गं गणपतये विच्चे नमः। ओं ह्रीं श्रीं एकदंष्ट्राय विद्महे गजाननाय धीमहे। तन्नो दन्ती प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं ब्रं ब्रह्माण्यै विच्चे नमः। ओं ह्रीं श्रीं स्वायम्भुवीयै विद्महे चतुर्मुखायै धीमहे। तन्नो ब्राह्मी प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं मां माहेश्वर्यै विच्चे नमः। ओं ह्रीं श्रीं त्रिशूलिनीयै विद्महे नेत्रत्रयायै धीमहे। तन्नो माहेश्वरी प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं कौं कौमार्यै विच्चे नमः। ओं ह्रीं श्रीं शक्तिनीयै विद्महे षण्मुखायै धीमहे। तन्नः कौमारी प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं वैं वैष्णव्यै विच्चे नमः। ओं ह्रीं श्रीं शङ्खिनीयै विद्महे चक्रिणीयै धीमहे। तन्नो वैष्णवी प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं वां वाराह्यै विच्चे नमः। ओं ह्रीं श्रीं दण्डिनीयै विद्महे पाशहस्तायै धीमहे। तन्नो वाराही प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं इं इन्द्राण्यै विच्चे नमः। ओं ह्रीं श्रीं नागारुढायै विद्महे वज्रहस्तायै धीमहे। तन्न इन्द्राणी प्रचोदयात्। तत्पा॰**

**ओं ह्रीं श्रीं चां चामुण्डायै विच्चे नमः। ओं ह्रीं श्रीं कपालिनीयै विद्महे मांसप्रियायै धीमहे। तन्नो डाकिनी प्रचोदयात्। तत्पा॰**

**मातृभ्यो विच्चे नमः, लोकमातृभ्यो विच्चे नमः, आकशमातृभ्यो**

विच्चे नमः, भूतमातृभ्यो विच्चे नमः, गुह्यमातृभ्यो विच्चे नमः, सर्वमातृभ्यो विच्चे नमः।

ओं ह्रीं श्रीं सर्वमातृभ्यो विद्महे योगेश्वरीभ्यो धीमहे। तन्नः शक्तिः प्रचोदयात्।

ओं नानारूपा मातरः प्रतिदिशं व्यवस्थिताः दिव्यन्तरिक्षभौमाः पाताळनिवासिन्यश्चेहायान्तु शिवाज्ञया मामनुगृह्णन्तु प्रतिगृह्णन्तु पूजां सौम्यरूपधारिण्यः ताभ्यो देवीभ्यो नमो नमः स्वाहा। सर्वमातृगणेभ्यो नमः, सर्वमातृगणपारिषदेभ्यो नमः।

शास्त्रे नमः, शम्बरकुमाराय नमः, [१] हस्त्यश्वाय नमः, नीलाय नमः, काळाय नमः, कपर्दिने नमः, उग्राय नमः, रुद्रसुताय नमः, भूतनाथाय नमः, भूतपतये नमः,

भूतनाथाय विद्महे भवपुत्राय धीमहे। तन्नः शास्ता प्रचोदयात्। तत्पा ०

दुर्गायै नमः तत्पा ०। धनदाय नमः तत्पा ०। स्कन्दाय नमः। सनत्कुमाराय विद्महे भवपुत्राय धीमहे तन्नः स्कन्दः प्रचोदयात्। तत्पा ०

ओं धुनि चण्ड हुं फट्। चण्डाय नमः। चण्डचण्डाय नमः। चण्डेश्वराय नमः। चण्डचण्डाय विद्महे चण्डेश्वराय धीमहे। तन्नश्चण्डः प्रचोदयात्। तत्पा०

सिंहोदराय नमः। बिलाळाय नमः।
ये समस्तं जगद्व्याप्येत्युपस्थाय बहिर्बलिः।



१. 'हर्यश्वाय' ख. ग. पाठः ॥

विंशद्भूतगणानां तु महाकाळादयोऽपि वा ।। ६४ ।।

सिंहोदराय नमः, विलाळकाय नमः इति ।।
भृङ्गिगणे नमः, महाकालाय नमः इत्यादि ।

विंशद्भूतगणेभ्यो नमः इति । अथवा महाकालो विधाता चेत्यादि ।

ये समस्तं जगद्व्याप्यों नमो भूतेभ्य इत्यपि ।
गृह्णन्त्विति त्रिभिर्द्वाभ्यामुतैकेनाष्टदिक्ष्वपि ।। ६५ ।।

ध्वजाधिपावृतेः पूर्वं महापीठबलेः पुरः ।
बलिं दद्यात् ततः पश्चादथवा मन्त्रविद्गुरुः ।। ६६ ।।

ये समस्तं जगद्व्याप्येत्यादि ।

ओं नमो भूतेभ्यो भूतकृद्भ्य इत्यादि ।

गृह्णन्तु बलिमेतत्तु बाह्यस्था विहगाननाः ।
ये क्रूरा येऽल्पसत्त्वाश्च भूताः प्रेताश्च राक्षसाः ।। ६७ ।।

वेतालाश्चैव मातङ्गा हीनाहीनाश्च ये गणाः ।
सर्वेषामेव तेषां च हरामि बलिमुत्तमम् ।। ६८ ।।

सर्वेभ्य एव तेभ्यश्च सगणेभ्यो नमो नमः ।

इति । भूतिदाय नम इत्यादि । पिङ्गलाय नमः हरसेनाय नमः, महाबलाय नमः । हरसेनाय विद्महे महाबलाय धीमहे । तन्नः शक्तिः प्रचोदयात् । तत्पा०

दशमूर्तिपारिषदेभ्यः सद्भ्योऽसद्भ्यः सदसद्भ्य सर्वगणेभ्यस्तेभ्यस्ताभ्यो नमो नमः स्वाहा ।

**असंख्याता गणाः सर्वे कोटिकोटिगणाधिपाः।**
**भवन्तु सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः ।। ६९ ।।**

**देवताभ्यः पितृभ्योऽथ भूतेभ्यः सह जङ्गमैः।**
**एतत्स्थाननिविवासिभ्यः प्रयच्छामि बलिं नमः ।। ७० ।।**

**नमो भूतेभ्योऽथ नमो भगवद्भ्योऽष्टदिक्ष्वपि।**
**बलिं दद्याद्विरावृत्या पश्चाद्देवग्रहादयः ।। ७१ ।।**

पुनस्तन्मन्त्रा लिख्यन्ते – बहिर्बलिकाले त्रिभिर्मन्त्रैर्बलिदाने पक्षान्तराणि दर्शयति – ये समस्तमिति। ये समस्तम्, ओं नमो भूतेभ्यः, गृह्णन्तु बलिमिति त्रिभिर्मन्त्रैर्वा ये समस्तं गृह्णन्त्विति द्वाभ्यां वा गृह्णन्वित्येकेनैव वा ध्वजावरणात् पूर्वं वा महाबलिपीठबलेः पूर्वं वा महाबलिपीठबलेः पश्चाद् वा बलिं दद्यादित्यर्थः। महाबलिपीठानन्तरम् ओं नमो भूतेभ्यो गणेभ्य इत्यादिना ओं नमो भगवद्भ्य इत्यादिना चाष्टदिक्षु द्विरावृत्त्या बलिं दद्यादित्याह – नम इति।। ६४ – ७१ ।।

**ओं नमो भूतेभ्यो गणेभ्यो ग्रहेभ्यः सर्वेभ्यः सर्वभूतेभ्यः सगणेभ्यः सर्वपिशाचेभ्यस्तेभ्यस्ताभ्यो नमो नमः स्वाहा।**

**ओं नमो भगवद्भ्यो भूतकृद्भ्यः सद्भ्योऽरिष्टकृद्भ्यः सद्भ्योऽसद्भ्यः सदसद्भ्यः सर्वगणेभ्यस्तेभ्यस्ताभ्यो नमो नमः स्वाहा। इति।**

**गृह्णन्तु बलिमेतत्तु बाह्यस्था विहगाननाः।**
**मातङ्गाश्चैव वेताळा हीनाहीनाश्च ये गणाः ।। ७२ ।।**

**इत्यनेन परिक्रामन् मन्त्री शीघ्रबलिं हरेत्।**
**क्षेत्रपालमथैशान्यां द्वात्रींशद्वर्णमन्त्रतः ।। ७३ ।।**

**सम्पूज्य जलगन्धाद्यैर्बलिं दद्याद्विधानवित्।**
**ओं, नीलाम्बुदप्रतीकाश! रक्तान्तायतलोचन!**
**क्षेत्रपालाय तैरेतै रुद्रो ज्ञापयति स्वाहा ।। ७४।।**

**ओं ह्लीं क्षें क्षेत्रपालाय नमः। ओं ह्लीं लों लोहजङ्घाय नमः।**

**परितो हेतुकादिभ्यो दद्यात् प्रागादिदिक्ष्वथ[1]।**
**परिषद्भिर्युतं मन्त्री हेतुकस्त्रिपुरान्तकः ।। ७५।।**

**अग्निवेताळकश्चाग्निजिह्वकल्पस्तदादिकः।**
**कराळ एकपादश्च भीमरूपोऽष्टमस्ततः ।। ७६।।**

**हाटकेशोऽध उपरि त्वाकाशाधिपतिः क्रमात्।**
**स्वनामभिश्च मायाद्यैर्नत्यन्तैः स्वाक्षरादिभिः ।। ७७।।**

**पूजा बलिश्च तेषां स्याद् बलिं चेह समापयेत्।**
**देव्यां भूतबलिक्रमेऽथ शिववद्योज्यो विशेषोऽखिलः**
**पूज्या वास्तु सुरा अपि श्रुतिमिता दिक्पान्तराळेष्विह।**
**तत्तद्दिक्पातिसर्वबल्यवसितौ न त्वत्र गायत्र्यणुः**
**पीठेऽग्र्ये न च शेषभुज्यपि समं सर्वं त्विदं मातृषु ।। ७८।।**

शीघ्रबलिमन्त्रमाह – गृह्णन्त्विति। क्षेत्रपालमन्त्रैर्बलिदानमाह – क्षेत्रपालमिति। द्वात्रिंशन्मन्त्रमाह – ओं नीलाम्बुदेति। तत्परितो हेतुकादीनां प्रागादिदिक्षु मायादिकैर्नत्यन्तैः स्वस्वाक्षरादिसहितैर्नाममन्त्रैर्बलिं दद्यादित्याह – परित इति। पूजाकालेऽपि तेषां बलियोग्यता स्यात्। इह बलिं समापयेच्च। देव्या उत्सवबलेर्विशेषमाह – देव्यामिति। अथ देव्यां भूतबलिक्रमे शिववत् शिवोत्सवबलिवदखिलो विशेषो योज्यः। इह तत्तद्दिक्पतिसर्वबल्यवसितौ



१. 'पि' ङ. च. पाठः ।।

तत्तद्दिक्पतेरुक्तस्य सर्वस्य बलेरवसाने दिक्पाना मन्तरालेषु श्रुतिमिताश्चतस्र-श्चतस्रस्तत्तद्दिग्भवा वास्तुसुराः पूज्याः। तत्राऽग्र्ये महाबलिपीठे न तु गायत्र्यणुः स्यात्। शेषभुजि च न गायत्री स्यात्। मातृष्विदं देव्युक्तं सर्वं समानं स्यात्।। ७२ – ७८।।

**दिक्पेभ्य एव वा तेभ्यस्तच्छक्तिभ्योऽपि वा त्विह।**
**तेभ्यः स्वशक्तिमद्भ्यो वा बलिः स्वागमचोदितः ।। ७९।।**

इह मातृषु केवलं तेभ्यो दिक्पेभ्य एव वा स्वस्वदिक्पशक्तिभ्य एव वा स्वस्वशक्तिमद्भ्यो दिक्पेभ्यो वा स्वस्वागमकथितो बलिः स्यात्।।

**कौबेर्यैशान्यथैन्द्री चाग्नेयी याम्याथ नैर्ऋती वारुणी वायवी कुम्भनासी ब्राह्मी च ताः क्रमात्।**

**कुबेराय धनाधिपतये मातृपारिषदे नमः। कौबेर्यै तच्छक्त्यै नमः इति।**

**कौबेर्यां दिशि कुबेरो नाम राजा कौबेरीसहानुगो बलिमेतं प्रतिगृह्णातु यथा भक्त्या निवेदितं विच्चे नमो नमः स्वाहा। एवमैशान्यादिष्वपि। पुनस्तत्पारिषदेभ्यो नमः। ओं नमो भूतेभ्यः इत्यादि।**

**बहिः ओं नमो भूतेभ्यः इत्यत्र अन्यो मनुः स्मृतः।**

**ओं नमो भगवतीभ्यः सर्वयोगिनीभ्यो डाकिनीभ्यः कूश्माण्डेभ्यः पिशाचेभ्यः सर्वगणेभ्यस्तेभ्यस्ताभ्यो नमो नमः स्वाहा।**

**नन्द्याद्या मात्राद्या बहिरोन्नम आवृतिः शिवस्यैव।**
**देवग्रहादयोऽपृथग् बलिविषये क्षेत्रपालश्च ।। ८१।।**



**वास्तुसुरा देव्या एवोन्नमं आद्यास्तु मालिकामनवः।**

**पञ्चाशद्भूतगणाश्चाम्बानामेव पूजनीयाः स्युः ।। ८२ ।।**
**देवस्य मातृभिर्योगे तासां वास्तुसुरा अपि ।**
**देव्या चेन्मालामनवस्तस्याः पञ्चाशदित्यपि ।। ८३ ।।**
**देव्यास्तु मातृभिर्योगे नन्द्याद्या मातृपूर्वकाः ।**
**मालामन्त्राश्च तस्याः स्युः पञ्चाशच्च ग्रहा अपि ।। ८४ ।।**

उत्तरादिक्रमेण तच्छक्तीः पठति – कौबेरीति । पुनस्तन्मन्त्रान् क्रमेण लिखति – कुबेरायेत्यादि । बहिर्बलिकाले ओं नमो भूतेभ्य इत्यस्य स्थाने ओं नमो भगवतीभ्य इत्याद्योऽन्यो मनुः स्मृतः स्यात् । तन्मन्त्रं लिखति – ओं नम इति । एतेषामपृथग्बलिविषये पूर्वं नन्दाद्याः पुनर्मात्राद्या बहिरों नम आद्यावृतिश्च देवग्रहादयः क्षेत्रपालश्च शिवस्यैव स्यात् । तत्र वास्तुसुरा देव्या एव । तत्र ओं नम इत्याद्या मालामनवः पञ्चाशद्भूतगणाश्चाम्बानामेव; पूजनीयाः स्युः देवस्य मातृभिर्योगे सम्भवति सति तत्र वास्तुसुरा अपि तासां मातृणामेव । देवस्य देव्या योगश्चेन्मालामनवः पञ्चाशदित्यपि तस्या देव्या एव । देव्या मातृभिर्योगे सति नन्द्याद्या मातृपूर्वका मालामन्त्राः पञ्चाशन्मन्त्राश्च ग्रहाश्च तस्या देव्या एव स्युः ।।

**पूर्वेद्युस्तीर्थयात्रायां मृगयाविहृतिर्दिवा ।**
**वने सर्वमुखीं देवीं मन्त्रवित् पूजयेत् तदा ।। ८५ ।।**

आरण्यबलिं ग्रामबलिं चाह – पूर्वेद्युरिति । तत्र दिवाकाले बल्यनन्तरं मृगयाविहृतिः कार्या । तदानीं वने सर्वमुखीं देवीं तत्र पूजयित्वा बलिं दद्यात् ।।

**नक्तं भूतबलेः शेषं कुर्याद् ग्रामबलिं ततः ।**
**वज्रशक्त्यादियोगिन्यो दिक्ष्वर्च्या ग्रामसीमसु ।। ८६ ।।**
**तटाकसत्र्यश्रचतुष्पथेषु पद्माबलौ पर्वतरथ्ययोश्च ।**
**ग्रामीयमध्ये च तथाऽऽकरेषूद्यानेषु चार्च्या विदुषा तदैताः ।। ८७ ।।**

**सहस्रघोणी त्रिमुखी मृगाक्षी पद्माऽट्टहासी नगरी महाश्रीः।**
**पीठेष्वगन्धिन्यपि दिव्यरूपा सहस्रमुख्योपवनेषु देवी ।। ८८।।**

**पञ्चप्रणवमुच्चार्य चामुण्डेति पदं पुनः।**
**प्रोच्चार्य नामाद्यन्ते तु विच्चे नम इति क्रमात्।। ८९।।**

नक्तं तु भूतबलेः शेषतया ग्रामे बलिं कुर्यात्। तदा पूर्वाद्यष्टदिक्षु ग्रामसीमसु वज्रशक्त्यादियोगिन्यः वज्रयोगिन्यः शक्तियोगिन्यः दण्डयोगिन्य इत्याद्या अर्च्याः। पुनस्तटाकादिस्थानेषु पीठेषु सहस्रघोण्याद्याः पूज्याः। वनेषु सर्वत्र सहस्रमुखी देव्येव। आसां देवतानां मन्त्रयोजनाप्रकारमाह – पञ्चेति। पूर्वं पञ्चप्रणववमुच्चार्य पुनश्चामुण्डेपदं प्रोच्चार्य तत्तन्नामाद्यादिनामन्ते विच्चे नम इति मन्त्रा इत्यर्थः।। ८६ – ८९।।

**सर्वेषां चैव सर्वासां भूतानां भूतयोगिनाम्।**
**चराणामचराणां च यथावाद्विकिरेद् बलिम् ।। ९०।।**

**तथोन्नमो भगवती[१]भ्योऽणुनोक्तेन तत्त्ववित्।**
**बलिं दत्त्वाऽन्तराग[२]त्य क्षेत्रपाले समापयेत् ।। ९१।।**

अत्र सर्वेषां सर्वासां चेत्यादि यथावद् विकिरेद्बलिमित्युक्तत्वाद् बलिदेवतानां मन्त्राणां चागमेषु बहुप्रकारेणोक्तत्वादसङ्ख्यत्वाच्च न सर्वमुक्तमित्यवगन्तव्यम्। तस्मात् स्वगुरुनिदेशादेव ज्ञात्वा यथायोगं बलिं दद्यात्। पुनः सर्वेभ्यो भूतेभ्यो नम इत्यादिमन्त्रैर्बलिं दद्यादित्याह। सर्वेषां चेति। पुनरों नमो भगवतीभ्य इत्यादिपूर्वोक्तेनैव बलिं दत्त्वान्तरागत्य क्षेत्रपाले समापयेत्।। ९० – ९१।।

**अथाप्लुतो मङ्गलपालिकादिभिः स्वलङ्कृते तत्र निषद्य मण्डपे।**
**समर्चितात्मा शयने प्रसाधिते यथापुरं पीठमपि प्रपूजयेत्।।**

१. 'भ्य अनेनोक्तेन कल्पवित्' छ. च, २. 'गभ्य' ख. ग. छ. च. पाठः।।

गर्भालयं प्राप्य समिष्टविष्टरे
देवं समावाह्य[1] समर्च्य चार्चकः।
प्रसाद्य दत्त्वा व्यजनाद्युपाहृतीः
कृताञ्जलिः प्रार्थयतामनेन तम् ।। ९३ ।।

"तीर्थयात्रा त्वया देव! श्वः कर्तव्या सुरेश्वर!
तत्र प्रतिसरारम्भं त्वमनुज्ञातुमर्हसि ।। ९४ ।।

तीर्थयात्रा त्वया देवि! श्वः कर्तव्या सुरेश्वरि!
तीर्थयात्रेह युष्माभिः श्वः कर्तव्या तु मातरः।
तत्र प्रतिसरारम्भं स्वमनुज्ञातुमर्हथ" ।। ९५ ।।

इति।

अश्वत्थपत्रयुगलैरथ साग्रदूर्वा-
सिद्धार्थसंयुतघृतं परिगृह्य दोर्भ्याम्।
मन्त्रैः सुशोभनसुभद्रसुमङ्गलार्ण-
भिन्नैर्भवत्ववसितैः क्रमशोऽधिबिम्बम् ।। ९६ ।।

आरोपयेत् कटितटावधि कन्धरान्तं
कान्तं च दोर्विनिमयोभयपार्श्वयुक्त्या।
प्रक्षालयेत् करयुगं पृथगत्र तत्त-
दश्वत्थपत्रकमपास्य च तस्य पृष्ठे ।। ९७ ।।

कर्मार्चामभिषिच्य तत्र पुरतः कृत्वा विधाय द्विजैः
पुण्याहं प्रकलय्य कौतुकमघोरेणेश्वरे रुर्वरौ।
त्र्यर्णान्तेन तु तेन मातृषु तथा वेशोक्तवद्वा[2] ततः

१. 'समास्थाप्य' छ. च. । २. 'शैवोक्तवद्वा' ङ. च. पाठः,

कृत्वा भूतलयादि सर्वमथ पीठं प्रार्चयेत् कल्पवित्।। ९८ ।।

बिम्बेऽस्मिन् निजपञ्चतत्त्वमनुभिः स्वावाह्य साकळ्यकृ-
न्मूलार्चां परिरक्ष्य बिम्बमितरन्नीत्वा गुरुर्मण्डपे।
पीठे न्यस्य कृताभिवाहसकलीकारं निवेद्यान्तिमै-
रिष्ट्वा साधु सुतोष्य पञ्चमनुभिः शय्यातले शाययेत् ।।
९९।।

पञ्चतत्त्वनिजमूलतारकोद्व्यापकैर्निजदशात्रयातिगम्।
संविभाव्य नववाससाऽऽवृतं रक्षतु क्षपयतु क्षपां च ताम् ।।
१००।।

का[१]ल्योचितं कर्म विधाय साधु सविग्रहीभूतसमर्चितात्मा।
तारेण मूलेन च पञ्चतत्त्वैः संव्याप्य तं ध्यायतु जाग[२]रूकः।।

उत्थाप्य धेन्वादिकमङ्गानि
प्रदर्श्य कृत्वाऽर्घ्यसमर्पणाद्याम्।
प्रारब्धपूजासुसमाप्तिमिष्टे
पीठेऽथ कृत्वा सकलीकरोतु ।। १०२।।

पूजोदितानि पुनराचमनावसाना-
न्यस्मै सदन्तरसनापवनानि दत्त्वा।
गण्डूषकं बहु समर्प्य सपाद्यकाद्यं
संस्नापयेन्मधुघृ[३]ताक्तियुतं क्रमज्ञः ।। १०३।।

वस्त्रादीनि समर्प्य चोपहरणानि त्रीणि दूर्वाङ्कुरान्

१. 'कल्यो' ख, २. 'जागरूकम्' घ. छ। ३. 'घृतार्ति ग, 'घृताक्त' च. छ,

**पुष्पं चन्दनमञ्जनागरुरसौ चापि प्रदद्यात् क्रमात्।**
**सम्भूष्यार्पितदर्पणो गणपतिं सम्पूज्य गोभ्यस्तृणं**
**दत्त्वा श्रावितभारतो विहितदानोऽथार्चयेत् तं गुरुः ।। १०४।।**

**शय्याद्युद्वास्य कर्मार्चाभिषिक्ताणुबिम्बके।**
**पञ्चतत्त्वैर्नियोज्यावाह्यार्चयेदथ कल्पवित् ।। १०५।।**

**सुवर्णरूप्यताम्रैश्च शालिमाषयवैस्तथा[1]।**
**कुसुम्भरात्रिमुद्गैश्च पिष्टचूर्णानि कारयेत् ।। १०६।।**

**यात्राहोमे शाकुनस्वस्तिमन्त्रै-**
**राज्यं देवे पञ्चभिर्ब्रह्मभिश्च।**
**देव्यां ह्रों ह्लेमादिभिश्चाष्टसंख्यं**
**हुत्वा कार्यः स्याच्चतुर्द्रव्यहोमः ।। १०७।।**

प्रस्वापनकर्म प्रायेण तन्त्रसमुच्चयोक्तश्लोकैराह – अथाप्लुत इति। कौतुकबन्धने रुर्वरौ त्र्यर्णान्तेनाघोरेण मातृषु तथा देव्युक्तवद् वा ईशोक्तवद् वा कौतुकमाकलय्य शेषं कर्म कुर्यात्। तीर्थयात्रोपक्रमे पिष्टचूर्णद्रव्याण्याह -- सुवर्णेति। यात्राहोमे विशेषमाह – यात्रेति।। ९१ – १०७।।

**सर्वं देव्यामिवाम्बुसु पक्वं गणजिनार्णतः।**
**हृल्लेखया चतुर्द्रव्यं जुहुयात् तद्विधानवित्।। १०८।।**

**गर्भालयं प्राप्य समिष्टपीठे[2] विभुं समावाह्य कृतोपचारः।**
**उद्वर्त्य चूर्णैर्द्रुपदादिवेति संस्नाप्य सम्पूज्य तथैव वा तम्।।**

**कृत्वा तदग्रे शुचि कर्मबिम्बं**
**सम्प्रार्थ्य सम्पातमथार्पयित्वा।**

१. 'स्सह' ख. ग. घ. छ. पाठः, २. 'विष्टरे' घ.

**तस्मिन् समावाह्य च मूलबिम्बा-**
**दारक्ष्य तत्कौतुकमाददानः ।। ११० ।।**

**माङ्गल्यवा[1]दादि वदन्निरेत्य**
**बलिं किरेदेक[2]परिक्रमेण।**
**अन्तर्बहिश्चापि विलाप्य केतु-**
**नारक्ष्य धामैतु च तीर्थवर्यम् ।। १११ ।।**

**मूलेनाष्टशतं सर्पिर्जुहुयात् तीर्थमण्डपे।**
**शक्त्यैवाम्बासु तीर्थार्थं पञ्चतत्त्वैरथापि वा ।। ११२ ।।**

तीर्थहोमविधिमाह – मूलेनेति।। ११२ ।।

**गुरूक्तनी[3]त्या स्नपयेन्महेशं**
**चूर्णैः समुद्वर्त्य तथैकवीरीम्।**
**मातॄरपि क्षेत्रपतिं च विद्वान्**
**सम्पूज्य सम्प्रार्थ्य नयेच्च धाम ।। ११३ ।।**

**तस्मिन्नहन्येव नियोज्य मूल-**
**बिम्बेऽभिषिच्य प्रयजेद्य[4]थोक्तम्।**
**संस्नाप्य विद्वान् कलशैः प्रभूतैः**
**समर्चयेद् भूतबलिं किरेच्च ।। ११४ ।।**

उत्सवानन्तरं शुद्धौ विशेषमाह – स्थानप्रासादेति। स्थानप्रासादबिम्बानां शोधनक्रमः प्रायः प्रागुदीरित एव। तत्र राक्षोघ्नहोमो वास्तुहोमश्च शैवस्तन्त्रसमुच्चयोक्त एव।

१. 'पादादि' घ, २. 'देव परि' ग ३. 'रीत्या' ख. ग., ५. 'च्च देवम्' घ. पाठ।।

**स्थानप्रासादबिम्बानामशुद्धौ शोधनक्रमः।**
**प्रायः प्रागुदितो होमः शैवोऽपि च गुरूदितः ।। ११५।।**

**धारायां वेदतन्त्रोक्तान् मन्त्रान् जपतु रुर्वरौ।**
**नवार्णपञ्चप्रणवत्र्यक्षरैकाक्षराणि च ।। ११६।।**

**मातृविद्यां च गायत्रीं विद्यां च समयादिकाम्।**
**व्योमव्यापिमनुं साङ्गं पञ्चब्रह्म दशाक्षरम् ।। ११७।।**

**केश्यग्निं पावमाचं च पञ्चतत्त्वादिकान्यपि।**
**धारायामवगाहे च जपेयुर्गुरुमूर्तिपाः ।। ११८।।**

**प्राक् स्वे पीठे स्वनवलिपिनाऽऽवाह्य देवीं सहाङ्गै-**
**रिष्ट्वा वर्णान् क्रमनियमविन्मन्त्रवित् कल्पयित्वा।**
**चा[१]मुण्डाद्या नव यजतु मूलाङ्गलोकेश्वरास्त्रै-**
**रेवं मातृष्विह मनुसपर्या कटाहादिषु स्यात् ।। ११९।।**

**साधारणं तु संसा[२]ध्य चतुःशुद्ध्यादिसाधनम्।**
**विभज्य विनियोक्तव्यं वीरभद्रादिषु क्रमात् ।। १२०।।**

**युगपद्वा क्रमाद्वा स्या[३]द् धारा तन्मनवः सकृत्।**
**देव्युक्ता एव सञ्जप्याः सूक्तं क्राणाशिशुर्निजम् ।। १२१।।**

देव्यां धारावगाहयोर्जप्यान् मन्त्रान् गणयति – धारायामिति। मातृषु धारायां क्लृप्तिविशेषमाह – प्रागिति। प्राक् चामुण्डायाः स्वे पीठे स्ववनलिपिना तां देवीमावाह्य वर्णानङ्गैः सहेष्ट्वा क्रमनियमवित् मातॄणां क्रमनियमं च जानन् मन्त्री इतरा अपि तथा कल्पयित्वावाह्य न्यस्य मूलाङ्गलोकेश्वरास्त्रैः सर्वासामपि मूलमन्त्रैः स्वस्वाङ्गैः सहेष्ट्वा समुदायेन लोकपालैस्तदस्त्रैश्चामुण्डाद्या

१. 'चामुण्ड्याद्या' घ., २. 'संसाद्य' घ., ३. 'स्या धारा' ख. पाठः ।।

नव यजतु। एवं मातृषु कटाहादिषु मनुसपर्या स्यात्। चतुश्शुद्धावपि तथा कुर्यादित्याह – साधारणमिति। धारा तु मातॄणां युगपद्वा क्रमाद् वा स्यात्। तन्मनवो देव्युक्ताः सकृदेव सञ्जप्याः तत्र क्राणाशिशुरिति निजं सूक्तं स्यात् ।। ११३ १२१।।

**शिवोक्तवद् दिश्यथ दक्षिणस्यां**
**देव्यां समुत्पाद्य गुरुः कृशानुम्।**
**सम्पूज्य तां[१] निष्कृतिहोममस्मिन्**
**कृत्वाऽभिषिञ्चेत् कलशेन देवीम् ।। १२२।।**

**अम्बासु चैवं कलशा नव स्युः**
**पूजेह पूर्वाभिहितैव पक्वम्।**
**गणोक्तगायत्र्यणुनेष्यतेऽथ**
**ताश्चाभिषिञ्चेत् कलशैर्यथास्वम् ।। १२३।।**

पञ्चगव्यानि पञ्चकानि च प्रत्येकं पूजयित्वा तथाभिषिञ्चेत्। देव्यां शङ्करप्रोक्तहोमोऽपि शिवोक्त एव। अम्बासु सर्वहोमेऽपि कलशा नव स्युः। पूर्वाभिहिता पूर्वं मातॄणां साधारणेनोक्ता तु पूजा। गणगायत्र्या च पक्वमिष्यते। स्वस्वकलशैस्ता अभिषिञ्चेत् ।। १२२ - १२३।।

**देव्यग्रतोऽग्निं स्वनवक्रियाभि-**
**रुत्पाद्य तां प्रार्थ्य करोतु होमम्।**
**स्युः पञ्चतत्त्वानि निजानि शेष-**
**मशेषमीशोदितवद्विदध्यात् ।। १२४।।**

**मातृष्वेवं हुतं कार्यं स्वोक्ता एव नव क्रियाः।**



१. 'तन्निष्कृति' ग.।।

**कलशा नव पूंजोक्ताः[1] पक्वं गणजिनार्णतः ।। १२५।।**

**ऐशेऽग्निमाधाय नवक्रियाभिः**
**संस्कृत्य देवीं परिपूज्य तस्याः[2]।**
**शिवोदितं शान्तिहुतं विधाय**
**तत्कुम्भतोयैः स्नपयेद् गुरुस्ताम् ।। १२६।।**

**मातृषु स्वोक्तक्लृप्त्याऽयं होमो नवघटान्वितः।**
**तत्र पायसहोमोऽपि होमेषु त्वेष्वनन्तरम् ।। १२७।।**

**अग्निमग्निदिशि नैजवर्त्मनोत्पाद्य मातृषु रुरोश्च विद्विषि।**
**पायसं त्रिमधुरान्वितं[3] चतुर्द्रव्यमप्यथ जुहोतु कल्पवित् ।। १२८।।**

**देव्यां स्वमन्त्रतोऽम्बासु होमोऽयं स्वस्वमन्त्रतः।**
**सङ्ख्या सहस्रमर्धं वा पादोऽष्टाढ्यं शतं तु वा।। १२९।।**

देव्यां प्रायश्चित्तहोमेऽग्निजनने नवैव क्रियाः स्युः। निजान्येव पञ्चतत्त्वानि। मातृष्वपि नवकलशेन सहैव प्रायश्चित्तहुतं कार्यम्। एवं शान्तिहोमेऽपि शिवोक्तद्रव्यैः कुर्यात्। देव्यां मातृषु च पायसहोममाह – अग्निमग्निदिशीति। निजोक्तरीत्याग्निमुत्पाद्य त्रिमधुराप्लुतं पायसं चतुर्द्रव्यं च स्वस्वमन्त्रैः सहस्रं वा तदर्धं वा तस्ताप्यर्धं वाष्टोत्तरशतं वा जुहोतु।। १२४ – १२९।।

**पालाश्यः समिधो देव्यामधिवासोदिता नव।**
**मातृषु स्वस्वमन्त्रेण पूर्णाः स्वस्वहुते भवेत् ।। १३०।।**

देव्यां पालाश्यः समिधः। मातृष्वधिवासोक्ता नव समिधः। तत्र स्वस्वमन्त्रैः स्वस्वचतुर्द्रव्यहोमे स्वस्वमन्त्रेण पूर्णा च भवेत्।।



१. पूर्वोक्ताः' ग. घ. २. 'तस्याम् शि' ख. ग. घ. पाठ, ३. 'राप्लुत'

**पृथक् प्रपूज्य वैकाग्नौ पक्वं स्वस्वजिनार्णतः।**
**हुत्वैवं तु हुतं कुर्यादन्ते ताः स्नपयेत् क्रमात् ।। १३१।।**

अथवा एकाग्नौ पृथक् पृथक् स्वस्वमन्त्रैः संपूज्य स्वस्वगायत्र्या पक्वं हुत्वा स्वस्वमन्त्रैर्हुतं कुर्यात्। पुनः स्वमन्त्रैरभिषिञ्चेत्।

**श्वस्पर्शादिषु[1] तच्छान्तिहोमान् विद्वाञ्छिवोदितान्।**
**कुर्यात् तत्तत्समीपे तु प्रोक्तोऽयं होम इष्यते ।। १३२।।**

**देव्यामग्रेऽग्निमुत्पाद्य तत्त्वहोमं शिवोक्तवत्।**
**कृत्वा तां स्नापयेत् तत्त्वान्यष्टाविंशतिरेव तु ।। १३३।।**

**स्वस्वाग्रेऽम्बासु देव्यामिव नव तनुयुस्तत्त्वहोमानिहाग्निं**
**चामुण्डाग्रे यथोक्तं जनयतु विहरत्वन्यकुण्डेषु [2]वाऽतः।**
**चामुण्डाग्रेऽनले वा नव कलशवदिष्ट्वोक्तरीत्यातु होमं**
**तत्त्वैस्तत्तत्कृतेऽस्मिन् पृथगिह जुहुयात् स्नापयेत् तद्धटैस्ताः ।।**
**१३४।।**

**प्रोक्तवद् द्रव्यकलशान् परिपूज्याधिवास्य च।**
**स्नापयेत् पूजयेच्चैतान् कुर्याद् भूतबलिं बुधः ।। १३५।।**

श्वस्पर्शनादिविषये स्वस्वेशभागे शिवोक्तक्रमेण तच्छान्तिहोमं कुर्यादित्याह – श्वस्पर्शेति। प्रोक्तोऽयं होमः स्वस्वगायत्रीपञ्चतत्त्वमूलैरेवेष्यत इत्यर्थः। अथ देव्यां शिवोक्तवत् तत्त्वहोममष्टाविंशतितत्त्वैः कुर्यादित्याह – देव्यामिति। मातृषु तत्त्वहोमे चामुण्डाग्रेऽग्निमुत्पाद्यान्यकुण्डेषु विहृत्य जुहुयादित्याह – स्वस्वाग्र इति। अथवा चामुण्डाग्रस्थित एव कुण्डेऽग्निमुत्पाद्य स्वस्वदिक्क्रमेण नवकलशान् परिपूज्य क्रमात् स्वस्वहोमं कृत्वा स्वस्वकलशैरभिषेचयेत्। पुनः



१. 'स्पर्शनादौ' घ. पाठः, २. 'चातः' ग. ख. पाठः ।।

पूर्वोक्तरीत्या द्रव्यकलशं संपूज्य यथोक्तक्रमेण शिवादीनभिषिञ्चेत्। पुनः संपूज्य भूतबलिं च कुर्यात्।। १३२ – १३५।।

**जीर्येयुः सदनानि चेत्सह शिवे बिम्बानि वा साम्बिके**
**सद्यस्तत्सदृशानि बालसदनानीशैशदेशे गुरुः।**
**मृत्काष्ठै रचयेन्न चेत्सह तदा स्वस्वोचितोद्देशवित्**
**स्वं स्वं बालगृहं प्रधानसविधे त्वन्यद् द्रयोर्जीर्यतोः ।। १३६।।**

जीर्णोद्धारविधिमाह – जीर्येयुरिति। गुरुः साम्बिके देव्या मातृभिश्च सहिते शिवे सहैव सदनानि वा बिम्बानि वा जीर्येयुश्चेत् सद्य एव ईशैशदेशे शिवस्यैवेशानकोणे तत्सदृशानि मूलप्रासादप्रतियोगिकानि बालसदनानि मृत्काष्ठैः द्रव्यैः रचयेत्। द्वयोर्जीर्यतोर्यदि प्रधानभूतस्य स्थानसमीपेऽन्यदपि बालालयं रचयेत्।

**सर्वं बालगृहं मूलप्रासादप्रतियोनिजम्।**
**साङ्गं सन्निपतत्साङ्गं क्षेत्रपस्तु यथापुरम् ।। १३७।।**

सर्वं बालगृहं मूलप्रासादस्य प्रतियोनिजं स्यात्। सर्वं साङ्गं चेत् अपि तदानीं सन्निपतत्साङ्गं साङ्गमेवेत्यर्थः। क्षेत्रपस्तु सर्वथा यथा (पुरं) पूर्ववदेव स्यात्।

**लोहैर्वा शिलया द्रुमैः स्वसदृशान्यल्पानि बिम्बानि वा**
**लिङ्गान्येव रुजोऽथ वा निजनिजानि त्वायुधान्येव वा।**
**पीठान्येव भगाङ्कितानि भगवत्यम्बासु वा कल्पयेत्**
**पीठाढ्यानि च बालवेश्म पुरतस्तन्मण्डपांश्चोचितान् ।। १३८।।**

ततो लोहैर्वा शिलया वा द्रुमैर्वा द्रव्यैः स्वस्वसदृशान्यल्पानि बिम्बानि वा लिङ्गाकारणि वा शूलानि वा निजनिजानि प्रधानायुधान्येव वा भगवत्यम्बासु

भगाङ्किकतानि त्रिकोणलक्षितानि पीठानि वा तत्र स्थापनाय कल्पयेत्। एतानि सर्वाण्यपि पीठैर्युक्तानि कल्पयेत्। पुनर्बालवेश्मपुरतो यथोचितान् मण्डपांश्च कल्पयेत्।

**कर्मौघोऽत्र गुरूदितः स्मररिपौ रीतिश्च सैवाखिला**
**भैरव्यां जननीषु [1]वाऽऽस्विह पृथक् स्यात्तत्त्वहोमोऽग्रतः।**
**चामुण्डानल एव सर्वविलयः स्युर्जीवकुम्भाः पृथक्**
**शय्याद्यप्यधिवासकीर्तितचरं भूयः प्रतिष्ठाऽपि च ॥ १३९॥**

अत्र स्मररिपौ कर्मणां समूहस्तन्त्रसमुच्चयोक्त एव। भैरव्यां जननीषु च सैवाखिला रीतिः स्यात्। आसु सर्वासु स्वस्वाग्रतः पृथगेव तत्त्वहोमः स्यात्। मातृषु चामुण्डानल एव सर्वेषां बहिर्गतानां परिवाराणां विलयः स्यात्। तासां जीवकुम्भाः पृथक् स्युः। शय्याद्यखिलमधिवासे कीर्तितपूर्वमेव। भूयः प्रतिष्ठापि च तथा स्यात्।

**नीत्वाऽहस्त्रयमुत्तरेद्युरभिषिच्य द्रव्यकुम्भैर्यजेत्**
**कार्यः स्यात्सह चेन्महोऽपि न महोऽस्त्येकोद्धृतौ केवला।**
**जीर्येदेकत[2]रैव मातृषु यदि प्रोक्तप्रकारेण सै-**
**वोद्धार्या नव चाभिषिञ्चतु दिने तुर्ये प्रवेशे तु ताः ॥ १४०॥**

प्रतिष्ठानन्तरमहस्त्रयमुत्तीर्य उत्तरेद्युर्द्रव्यकलशैरभिषिच्य यजेत्। ...द्धरः क्रियते चेदुत्सवोऽपि कार्यः स्यात्। एकस्यैव बिम्बस्योद्धृतौ केवल उत्सवो न स्यात्। मातृष्वेकतरैव जीर्येद् यदि प्रोक्तप्रकारेण सैवोद्धार्या। पुनः प्रवेशे तुर्ये दिने ता नव चाभिषिञ्चतु।

**नमामि मातरः सर्वा विघ्नेश! शिव! शङ्कर!**

---

१. 'चास्विहः' ख. ग. घ., २. 'तरैकमातृषु' ख. पाठः, ३. क्षमध्वं ग. घ. पाठः।

**क्षम[३] त्वं सर्वकालेषु सर्वेषां सर्वमातरः! ।। १४१ ।। इति**

**पूजाबिम्बमिदं देव्या इत्यादि ।।**

**बिम्बानीमानि मातॄणां स्थापितानीह सूरिभिः।**
**अनेन दूषणेनाद्य वर्तन्ते दूषितानि तु ।। १४२ ।। इत्यादि**

**चामुण्डे! वास्त्वभिनवमित्यादि।**

**मातरो! वास्त्वभिनवं बिम्बं वाऽपि च शोभनम्।**
**कारयिष्यन्ति वो भक्तास्तदनुज्ञातुमर्हथ ।। १४३ ।। इति**

**भगवत्यल्पगेहेऽस्मिन् वासः क्लेशोऽपि ते शिवे!**
**कर्तव्यश्चण्डिके! तावद् यावद् गेहं समाप्यते ।। १४४ ।।**

**कारकस्य परामृद्धिं विदधाना महोदयाम्।**
**भक्तानामनुकम्पार्थमिह त्वं स्थातुमर्हसि ।। १४५ ।।**

**भगवत्योऽल्पगेहेऽस्मिन् वासः क्लेशोऽपि वः शिवाः!**
**कर्तव्यो मातरस्तावद्यावद् गेहं समाप्यते ।। १४६ ।।**

**कारकस्य परामृद्धिं विदधाना महोदयाम्।**
**भक्तानामनुकम्मार्थमिहैव स्थातुमर्हथ ।। १४७ ।। इति**

**जलेऽग्नौ भुवि वा गर्ते महाजिह्वां विभाव्य तु।**
**तस्यां दुष्टानि मातॄणां बिम्बानि प्रतिपादयेत् ।। १४८ ।।**

तत्र प्रार्थनामन्त्राणां विशेषान् लिखति – (नमामिति)। दृष्टानां मातृबिम्बानां परित्यागरीतिमाह – जल इति।

इति शेषसमुच्चये नवमः पटलः।

# अथ दशमः पटलः।

**पूजा स्नानं स्थितिरपि विभोरेकवेरे यदि स्या-**
**न्नान्तर्गर्भावरणमिह पूजावृतौ स्याद्विकल्पः।**
**बेरेषु स्याद् बहुषु यदि गर्भावृतिः स्यादजादिः**
**स्यादप्यर्चावरणमुभयत्रापि बल्यावृतिः स्यात्।। १।।**

इत्येवमेकवेरप्रतिमाविषयां क्रियामभिधाय बहुबेरप्रतिमागतान् विशेषानाह – पूजा स्नानमिति। विभोर्देवस्य एकस्मिन् एव बेरे पीठपूजापुरस्सरमावाहनाद्युद्वासनान्ता पूजा अभिषेककलशसेकादिः स्नानं पूजाभिषेकव्यतिरिक्तकाले स्थितिरप्येकस्मिन्नेव बेरे स्यादिति। तत्रान्तर्भागे गर्भावरणं गर्भगृहगतपरिवारगणो न स्थापनीयः स्यात्। इहैकबेरविषये पूजावृतौ विकल्पः स्यात्। बहुषु बेरेषु सत्सु यद्यजादिः ब्रह्मादि गर्भावृतिः स्थापनीया स्यात्। अत्राच्चर्चावरणमपि स्यात्। उभयत्रैकबेरे बहुबेरे च बल्यावृतिर्द्वाःस्थादिक्षेत्रपालान्तावरणं स्यात्।

**बेराणि स्युस्त्रीण्यपि बल्युत्सवयात्रा-**
**र्थानि स्वर्णाद्यैरचितान्यप्युभयत्र।**
**स्नानार्चायां स्वोचितक्लृप्त्या विहितायां**
**पूजाबिम्बे वा स्नपनं स्याद् बहुबेरे ।। २।।**

उभयत्रैकबेरे बहुबेरे च बल्युत्सवाद्यर्थानि बल्यर्थमुत्सवार्थं तीर्थयात्रार्थं च सुवर्णादिभिरारचितानि त्रीणि बेराणि स्युः। बहुबेरे तु स्नानार्थं कल्पिते बिम्बे वा पूजाबिम्बे वा स्नपनं स्यात्।

**मूलार्चा बहुबेरके तरुमयी लेप्या च सा मृन्मयी**
**शूलस्थापनपूर्विका मृदुपचित्या शूल उत्पाद्यते।**
**शैली वाऽपि च चित्रसम्भृतरुचस्त्वेता उपार्चाः पुन-**
**र्लौह्यः शैल्यथवाऽर्चनाप्रतिकृतिस्तासां क्रियाऽथोच्यते ।। ३।।**

बहुबेरैकविषये तरुमयी लेप्या च मूलार्चा स्यात्। सा तु लेप्या केवलमृन्मयी शूलस्थापनपूर्विका च स्यात्। तत्र तु शूले मृदुपचित्या मृल्लेपेनोत्पाद्यते निर्वर्त्यते। अपि च शैली वा मूलार्चा स्यात्। एताः सर्वाश्चित्रसम्भृतरुचः चित्रवशान्नानारूपशोभाश्च उपार्चाः कर्मार्चाः पुनर्लौह्यः लोहमय्यः तत्रार्चनाप्रतिकृतिरथवा शैली तासां प्रतिमानां क्रियाथोच्यते।

**शूलं वार्यधिवास्य बिम्बकलशैः सिक्त्वाऽधिवास्याग्रतः**
**प्रासादे परिशोधिते मणिगणन्यासादि कृत्वा गुरुः।**
**संस्थाप्य स्वपदेऽभिषिच्य कलशाभ्यां प्रार्च्य संरक्ष्य तत्**
**तक्ष्णा मृन्मयमूलबिम्बमुपबिम्बं चेप्सितं कारयेत् ।। ४।।**

**धाम्नः संरचिते तले स्थलविशुद्धिं स्वोक्तनीत्या[१] गुरुः**
**कृत्वा वास्तुबलिं च रत्नहुतिकृत् पुण्याहकृत् संस्कृताम्।**
**तद्गर्तेऽजशिलां न्यसेद् द्रविणजातं च स्वमस्यान्ततः**
**शिल्पीशो गुरुबिम्बमत्र रचयेच्छैलं तथा दारवम् ।। ५।।**

अथ तन्त्रसमुच्चयश्लोकेन शूलप्रतिष्ठामाह – शूलं वारीति। मूलबिम्बस्य गौरवे सति प्रासादकरणात् प्राग् बिम्बरचना कार्येत्यभिप्रेत्याह – धाम्न इति। प्रासादस्याधिष्ठानादिकं यथाविधि चित्वा तत्र गुरुः स्वोक्तनीत्या स्थलशुद्धिं वास्तुबलिं च कृत्वा रत्नहुतकृत् पुण्याहकृत् तद्द्वयं च कृत्वा पुनस्तत्र गर्ते संस्कृतां नपुंसकशिलां स्वद्रव्यसमूहं च न्यसेत्। ततोऽत्र शिल्पीशः शैलं

१. 'रित्या' घ. पाठः ।।

दारवं वा गुरुबिम्बं बृहद्बिम्बं रचयेत्।। ४ - ५।।

**देवस्य धाम्न्यारचिते सहाङ्गैः**
**स्वैर्मण्डपाद्यैरिह वा पृथग्वा।**
**स्वैश्चोपबिम्बैः सह मूलबिम्बे**
**कुर्याद् गुरुर्मङ्गलबीजवापम् ।। ६।।**

ततो देवस्य प्रासादे मण्डपाद्यैः स्वैरङ्गैः सहारचिते सति इह प्रासाद एव वा पृथगन्यत्र वा स्वैरुपबिम्बैः सह मूलबिम्बे चारचिते सति गुरुर्मङ्गलबीजवापं कुर्यात्।

**तच्छिल्पी कृतमूलबिम्बमुचिताशासम्मुखं शायये-**
**च्छय्यायामुपबिम्बमस्य च तदर्हेऽह्न्यौपलं वामतः।**
**लेप्यादौ परिशोध्य धाम स वदेत् प्राप्तं सदन्तः कृत-**
**स्याक्ष्युन्मीलनकालमेतदुपबिम्बं शाययेच्चोक्तवत् ।। ७।।**

ततस्तदर्हे प्रतिमापरिग्रहयोग्येऽह्नि बहिः पृथगेव मूलप्रतिमा कृता चेच्छिल्पीः स्वेन कृतं तन्मूलबिम्बं शय्यायामुचिताशासम्मुखं शाययेत्। उपबिम्बमौपलं शैलं चेत् तस्य वामतश्च शाययेत्। मूलबिम्बे लेप्यादौ सति शिल्पी धाम प्रासादं निर्माय परितः शोधयित्वा तदन्तः कृतस्य बिम्बस्य प्राप्तमक्ष्युन्मीलनकालं वदेत्। एतदुपबिम्बं बहिर्भाग उक्तवदेव शाययेच्च।

**हैम्या तूलिकया लिखेद् घृतमधुस्तोकाक्तया लोचनं**
**सूच्यग्रेण तु दर्पणं प्रतितनौ सम्यक् तदक्तेन वा।**
**प्रासादे शयनेऽथवा प्रतिकृतेः सत्याः क्रियार्चादृशं**
**शेषाक्तेन पुरोक्तवत् प्रतिकृतौ तत्पूरणं मानसम् ।। ८।।**

ततो गुरुर्हैम्या हेमकृतया घृतमधुस्तोकाक्तया घृतमधुलेशेनाञ्जितया तूलिकया प्रासादे सत्या अथवा शयने सत्याः मूलप्रतिकृतेर्लोचनमुक्तप्रकारेण लिखेत्।

अथवा दर्पणप्रतितनौ दर्पणे प्रतिबिम्बयित्वा तु तल्लोचनं सम्यक् तदक्तेन घृतमध्वक्तेन सूच्यग्रेण लिखेत्। क्रियार्चादृशं कर्मार्चाया नेत्रम्। तच्छेषाक्तेन सूच्यग्रेण पुरोक्तवदेव लिखेत्। प्रतिकृतौ मूलबिम्बे तत्पूरणं मानसमेव स्यात्।

**चामुण्डाम्बास्वम्बुजाकल्पिताग्रे**
**पूजापीठे कर्णिकायां त्रिकोणम्।**
**तच्छेषाक्तेनैव शान्तित्रयीं[१] च**
**सूच्यग्रेणेहालिखेत् तत्क्रमज्ञः ।। ९।।**

इह नेत्रोल्लेखनसमये चामुण्डाम्बासु चामुण्डायां मातृषु चाम्बुजाकल्पिताग्रे पद्माकारेणाग्रभागेन युक्ते पूजापीठे कर्णिकायां कर्णिकास्थाने तच्छेषाक्तेन मूलबिम्बानां नेत्रोल्लेखनानन्तरं तच्छेषाक्तेन सूच्यग्रेण त्रिकोणं शक्तित्रयीं च तत्क्रमज्ञस्तासां त्रिकोणरेखानामिच्छादिशक्तीनां च क्रमं जानन्नालिखेत्।

**तद्बिम्बं सोपबिम्बं पुर उदितदिशा धामगं तेन धाम्ना**
**सार्धं सङ्गृह्य संशोधयतु निजनिजैः शोधनैर्दर्पणे तु।**
**तच्छेषेणोपबिम्बं सदनमपि पुरः शोध्यमन्तर्यदार्चा-**
**होमे सम्पातपातं प्रतिवपुषि परं कौतुकं कर्मबिम्बे ।। १०।।**

तन्मूलबिम्बमुपबिम्बयुक्तं पुरोक्तमार्गेण सङ्गृह्य निजनिजैः शोधनद्रव्यैर्दर्पणे प्रतिबिम्ब्य संशोधयतु। मूलबिम्बं धामगतं चेत् तेन प्रासादेन सार्धं सङ्गृह्य संशोधयतु। तच्छेषेणोपबिम्बं च संशोधयतु। यदा त्वन्तरर्मूलार्चा स्यात् तदा पुरत एव सदनं शोध्यं स्यात्। अक्षतहोमे सति चेत् (तत् तं) कृत्वा प्रतिवपुषि दर्पणप्रतिबिम्बे सम्पातपातः स्यात्। कौतुकबन्धनं परं केवलं कर्मबिम्ब एव स्यात्।

**मूलबिम्बं सुमृदुना शिखिबर्हचयेन वा।**

१. 'शक्ति' ख. ग. पाठः ।।

**स्वम्बरेणाथवेहाग्रे परिमृष्ट्या विशोध्यताम् ।। ११ ।।**

इह शोधनस्याग्रे पूर्वं मूलबिम्बं सुतरां मृदुना शिखिबर्हचयेन वा सुमृदुना वस्त्रेण वा विशोध्यताम् ।

**पूजार्चामुदितां च तीर्थसविधे नीत्वा पुरोक्तक्रमा-**
**न्मूलार्चामधिवास्य दर्पणगतां तद्वारि वा स्वाग्रतः ।**
**पात्रात्ताम्भसि वा तथा तु निजशुद्ध्यर्थेऽपि वा मण्डपे**
**लेप्यार्चादि तु तत्र धाम्न्यथ परां तीर्थोदके वासयेत् ।। १२ ।।**

तत उदितां पूजार्चां तीर्थसविधे नीत्वा मूलार्चां पुरोक्तक्रमात् तद्वारि तीर्थजले वा परिग्रहस्थल एव वा स्वाग्रतः पात्रात्ताम्भसि वा निजशुद्ध्यर्थे मण्डपे वा लेप्यार्चादिबृहद् बिम्बं चेत् तत्र धाम्न्येव वा सर्वत्र दर्पणगतमधिवास्य परां कर्मार्चां तीर्थोदके वाधिवासयेत् ।

**मृद्दारूपललोहरत्नकृतबिम्बानां गिरीषुत्रिरा-**
**त्रैकाहर्निशरात्रिमात्रमुदवासः स्वागमेषूदितः ।**
**मूलार्चाजलवासकालमुपलोपार्चोदवासोऽथवा**
**स्वं कालं तु तदैकबेरवदिदं सङ्गृह्य शोध्यं पुरः ।। १३ ।।**

**यत्स्यादाप्लवकौतुकं यदपि वा बह्वेकबेरोचितं**
**स्याद् बल्युत्सवतीर्थबिम्बमिह लौहं तत्प्रधानेन तु ।**
**सार्धं प्रोक्तदिशा प्रगृह्य परिशोध्योक्तोदके वासयेत्**
**कृत्स्नं वासरमस्य पूर्वदिवसान्ते वा ग्रहो बिम्बवत् ।। १४ ।।**

तत्र मृद्दारूपललोहरत्नकृतबिम्बानां मृदा वृक्षेण शिलया लोहेन रत्नेन कृतानां बिम्बानां क्रमेण गिरीषुत्रिरात्रैकाहर्निशरात्रिमात्रं सप्तरापञ्चरात्रं त्रिरात्रमेकाहोरात्रं रात्रिमात्रं चोदवासो जलवास आगमेषूदितः स्यात् । अथवा उपलार्चोदवासः शैलस्यार्चनाबिम्बस्य जलाधिवासो मूलार्चाया जलाधिवासेन

समकालं स्यात्। तदिदमर्चनाबिम्बं त्वेकबेरवत् पुर एव सङ्गृह्य स्वं कालं शोध्यम् स्यात्। स्नानबिम्बादेः शोधनक्रममाह – यत्स्यादिति। इहाप्लवकौतुकं स्नानबिम्बं बह्वेकवेरोचितं, बहुवेरे एकवेरे च योग्यं बल्युत्सवतीर्थबिम्बं लौहं च यद्यदपि वा अत्रोपरिगतं यच्च द्वयं मिलित्वैव योज्यम्। तत् सर्वं प्रधानेन सार्धं प्रोक्तदिशा प्रगृह्य परिशोध्योक्तोदके वासयेत्। अस्य लौहस्य पूर्वदिवसान्ते कृत्स्नं वासरं कालं स्यात् वा परिग्रहो बिम्बवदेव स्यात्।। १३ – १४।।

**मूलार्चामितराश्च वारिवसतेरानीय भद्रासने-**
**ष्वास्थाप्य क्रमतोऽथ बिम्बकलशैः सिक्त्वा सनेत्रक्रियाम्[१]।**
**मूलार्चां त्विह दर्पणेऽथ सकलेज्यां शक्तितोऽस्यां बुध-**
**स्तद्बिम्बे परिपूर्तये च तनुयान्नीराजनाद्यान्तिमाम् ।। १५।।**

अथ मूलार्चामितराश्च वारिवसतेर्जलाधिवासादानीय स्नानमण्डपे भद्रासनेष्वास्थाप्य मूलार्चां दर्पणे प्रतिबिम्ब्य सनेत्रक्रियं नेत्रोल्लेखनेन युक्तं बिम्बकलशैः सिक्त्वाथास्यां मूलार्चायां शक्तितः सकलेज्यां यथायोग्यं तनुयात्। बिम्बे पूजाबिम्बे पूजायाः परिपूर्वतये बुधो नीराजनाद्यन्तिमां पूजां च तनुयात्।

**बिम्बशुद्धिघटैर्मूलबिम्बीयप्रतिबिम्बकम्।**
**अभिषिच्यावशेषाद्भिः शेषबिम्बेषु सेचनम् ।। १६।।**

तत्र बिम्बशुद्धिघटैः क्रमेण मूलबिम्बीयं प्रतिबिम्बमभिषिच्य शेषतोयैः शेषबिम्बाभिषेचनं स्यात्।

**अथ संस्कृतमण्डपान्तरर्चाः**
**शयनीये विनिवेशयेत् क्रमेण।**
**प्रथमामिह मध्यतः सनिद्रा-**
**कलशं वामत एव चेतरार्चाः ।। १७।।**

१. 'क्रियम्' ग. पाठः ।।

अथ संस्कृतस्य मण्डपस्यान्तर्भागे शयनीयेऽर्चाः क्रमेण विनिवेशयेत्। इह मध्यतो निद्राकलशेन सार्धं प्रथमां मूलप्रतिमां तद्वामत इतराश्च विनिवेशयेत्।

**लेप्यादौ प्रासाद एवावतिष्ठे-**
**तैतद् बिम्बं यागबिम्बादि सर्वम्।**
**शय्यायां स्याद्यागबिम्बाग्रदेशे**
**निद्राकुम्भस्तद्विदा कल्पनीयः ।। १८।।**

लेप्यादावेतन्मूलबिम्बं प्रासाद एवावतिष्ठेत। यागबिम्बादि सर्वं मण्डपे शय्यायां स्यात्। तद्विदा गुरुणा यागबिम्बाग्रदेशे निद्राकुम्भः कल्पनीयः।

**ध्यानाधिवासमखिलं विदधीत मूल-**
**बिम्बेऽर्चनाप्रतिकृतावपि नात्र तत्त्वैः।**
**आवाहनं तदितरेषु चर्तुषु मूर्त्या-**
**वाहान्तमेव तु विशेषविदादधीत ।। १९।।**

अखिलं ध्यानाधिवासं मूलबिम्बेऽर्चनाबिम्बेऽपि विदधीत। अत्रार्चनाबिम्बेऽखिलैस्तत्त्वैरावाहनं न विदधीत।

**पूजाबिम्बादिषु स्थूलमूर्त्यङ्गत्वेन तत्त्ववित्।**
**पञ्चतत्त्वैः समावाह्य विन्यस्याङ्गानि पूजयेत् ।। २०।।**

पूजाबिम्बादिषु तत्त्वविद् गुरुः स्थूलमूर्त्यङ्गत्वेन पञ्चतत्त्वैः समावाह्याङ्गानि विन्यस्य पूजयेत्।

**तत्त्वहोमेऽथ सम्पातं मूलबिम्बेऽधिदर्पणम्।**
**स्पृष्ट्वा तत्पूर्तये पूजाबिम्बेऽपि मनुवित् स्पृशेत् ।। २१।।**

**अधिवासशान्तिहुतयोः सम्पातस्पर्शनं प्रतितनौ स्यात्।**
**पूजाप्रतिमायामपि तच्छेषस्पर्शमात्रमितरेषु ।। २२।।**

**गेहान्तः कृतबिम्बपीठममुना बिम्बेन सार्धं यदि**
**स्याच्चित्रं यदि न स्वकीर्तितदिशा शोध्यं यथार्हं तु तत्।**
**तद्वत्केवलपीठमप्यथ बहीरीत्या स्वया शोध्यतां**
**ब्रह्माश्मापि धिया कथञ्चन यथोक्तं चापि शोध्यं क्रमात् ।।२३।।**

तत्त्वहोमसम्पातं प्रतिबिम्बितदर्पणे स्पृष्टशेषेण पूजाबिम्बेऽपि स्पृशेदित्याह – तत्त्वहोम इति। अधिवासशान्तिहुतयोः सम्पातमपि तथा स्पृशेदित्याह – अधिवासेति। पीठादीनां शोधनरीतिमाह – गेहान्तः कृतेति। गेहान्तःकृतबिम्बपीठं प्रासादान्तर्भागे स्थापितस्य बिम्बस्य पीठं चित्रं यदि स्यादमुना बिम्बेन सार्धं शोध्यं स्यात्। चित्रं न यदि स्यात् स्वकीर्तितदिशा तु यथार्हं तच्छोध्यम्। अथ केवलं पीठं चञ्चलं पीठं यदि तद्वदेव बहिर्भागे स्वया रीत्या शोध्यताम्। ब्रह्माश्मा नपुंसकाश्मापि कथञ्चन यथा शक्ति धिया यथोक्तं चापि शोध्यं स्यात्।। २१ - २३।।

**निःशय्यं ध्रुवमालयस्थमिह मूलेज्याप्लवार्चास्पदं**
**नोचेदालयगं स्वबिम्बशयनाद्वामे तु शय्यान्तरे।**
**न्यस्तं भूतलयादिशुद्धनिजमन्त्रन्यासपूजोर्जितं**
**तद्वद् ब्रह्मशिलामपि स्वहुतसम्पातैधितं कल्पयेत् ।। २४।।**

इहालयस्थं प्रासादस्थं मूलेज्याप्लवार्चास्पदं मूलार्चायाः पूजर्चायाश्च पीठं ध्रुवं निश्चलं चेन्निश्शय्यं शय्यारहितमेव। अथालयगं नोचेत् स्वबिम्ब शयनाद् वामभागे शय्यान्तरे न्यस्तं पीठं च भूतलयादिभिः शुद्धं निजमन्त्रन्यासेन पूजया चोर्जितं स्वहुतसम्पातैधितञ्च कल्पयेत्। (तथा तत्तद्? तद्वत् तथा) ब्रह्मशिलामपि कल्पयेत्।

**बल्यादिबिम्बे तदभिन्न एव**

१. 'शोथ्यः' च. पाठः ।।

**पीठे विशुद्धे च सहैव तेन।**
**भूताप्ययाद्यं सह तेन कृत्वा**
**शक्तिं विभाव्यात्र समर्चयेत् ताम् ।। २५।।**

**लेप्यादिबिम्बेऽजशिलामणिन्या-**
**सादौ कृतेऽपि ह्यधुनापि कार्यम्।**
**हुतं तदीयं ध्रुवकर्मबिम्ब-**
**प्रतिष्ठितौ शक्तिहुतं च भूयः ।। २६।।**

बलिकौतुकादिषु बिम्बसहितानां पीठानां तेनैव बिम्बेन सह शोधनं कुर्यादित्याह – बल्यादीति। पुनर्लेप्यादिबिम्बे नपुंसकशिलायां रत्नन्यासादौ कृतेऽपि सत्यधुनापि तदीयं हुतं कार्यमेव। ध्रुवकर्म बिम्बप्रतिष्ठितौ भूयः शक्तिहुतं च कार्यमेव।। २४, २६।।

**ततः श्रपितपायसो विहितवत् स्वकुण्डे गुरुः**
**सपर्यतु यथाविधि प्रतिकृतावुदङ्मण्डले।**
**स्वकुण्डदहने विभुं द्विजतनौ च तेनान्धसा**
**बहिः परिषदोऽप्यमुं प्रधिनुयादपूपादिभिः ।। २७।।**

ततो गुरुः स्वकुण्डे विहितक्रमेण श्रपितपायसो भूत्वाः पुनः प्रतिकृतौ उदग्गते मण्डले स्वकुण्डाग्नौ द्विजतनौ च विभुं सपर्यत पूजयतु। बहिः परिषदोऽपि पूजयतु। पुनरमुं देवमपूपादिभिः प्रधिनुयात्।

**शय्यायां पीठमिष्ट्वा महिततनुयुगे मूलबिम्बे स्वमूले-**
**नावाह्य न्यासभेदैः सकलयतु तथा कर्मबिम्बे च भूयः।**
**[1]स्वां मूर्तिं स्नानबिम्बादिषु समुचितविद्विन्यसेद्विग्रहेज्यां**
**सर्वेष्वाधाय सर्वावरणमपि यजेदीदृशीयं सपर्या ।। २८।।**

१. 'स्वा मूर्ती च ।।

पूजायां विशेषमाह – शय्यायामिति। शय्यायां पीठमिष्ट्वा महिततनुयुगे पूजितस्थूलसूक्ष्ममूर्तौ मूलबिम्बे स्वमूलेनावाह्य न्यासभेदैः सकलयतु। तथा कर्मबिम्बे च करोतु। भूयः स्नानबिम्बादिषु समुचितज्ञो गुरुः स्वां मूर्तिं विन्यसेत्। सर्वेषु विग्रहेज्यामाधाय सर्वावरणं यजेत्। इयं सपर्या त्वीदृशी स्यात्।

**मूलार्चापचितिस्तनावनुदकैः सूनैर्मनःसम्भवै-**
**र्वागन्धादिभिरप्यथार्घ्यममृतं चैत्तं च नैवेद्यकम्।**
**पूजार्चां[१] तु विधानतोऽर्चयतु नैवेद्यं तु तत्पायसं**
**स्नानार्चादिषु यागबिम्बवदभीज्यार्घ्यं निवेद्यं भवेत् ।। २९ ।।**

मूलार्चाया अपचितिं पूजा तनौ विग्रहेऽनुदकैः सूनैर्वा मनःसम्भवैर्वा गन्धादिभिर्वा स्यात्। अथार्घ्यं चैत्तममृतं च निवेद्यकं स्यात्। पूजार्चां तु विधानतोऽर्चयतु। तत्र तु पायसं निवेद्यं स्यात्। स्नानार्चादिषु यागबिम्बवदभीज्या विग्रहेज्यार्घ्यमेव निवेद्य भवेत्।

**दर्पणप्रतिबिम्बे यदीरितं तदशेषतः।**
**मूलबिम्बवपुष्येव ध्यानेनैकं वितन्वते ।। ३० ।।**

एके तु दर्पणप्रतिबिम्बे यत् कर्मेरितं तदशेषतो मूलबिम्बवपुषि ध्यानेनैव वितन्वते।

**सङ्क्षिप्तपूजोऽथ निवेद्यमात्रं**
**स्यान्मूलबिम्बेऽथ तु यागबिम्बे।**
**तत्पूर्तये स्यादुभयोर्वितानः**
**प्राक्स्थापनात् सङ्क्रमणाद्ययोगात् ।। ३१ ।।**

अथ मूलबिम्बे संक्षिप्तैव पूजा तत्र निवेद्यमात्रं च स्यात्। यागबिम्बे

१. 'यागार्चां तु' ङ ।।

तत्पूर्तये पूजा निवेद्यं च स्यात्। स्थापनात् प्राक् सङ्क्रमणाद्ययोगादुभयोर्वितानः पृथग्भाव एव स्यात्।

**प्रातः प्रासादप्रतिष्ठादि कृत्वा**
**ब्रह्मग्रावाणं प्रतिष्ठाप्य मन्त्री।**
**रत्नानि न्यस्यात्र पीठं प्रतिष्ठा-**
**प्यास्मिन् विद्वान् पीठपूजां विदध्यात् ।। ३२।।**

पुनरुत्तरेद्युः प्रातःकाले मन्त्री प्रासादप्रतिष्ठादि कृत्वा ब्रह्मग्रावाणं प्रतिष्ठाप्य रत्नानि न्यस्यात्र पीठं प्रतिष्ठाप्यास्मिन् पीठपूजां विदध्यात्।

**न पुं[१]सकशिलाद्यं तु लेप्यादौ प्राक् प्रतिष्ठितम्।**
**नवीकृतधियेदानीं ध्यानेन स्थापयेदपि ।। ३३।।**

लेप्यादौ तु प्राक् प्रतिष्ठितं नपुंसकशिलाद्यमिदानीं नवीकृतिधिया ध्यानेनैव स्थापयेत्।

**मूलार्चास्पदपीठिकाग्रभुवि पूजार्चास्पदे कल्पिते**
**न्यस्याजोपलमा[२]त्रमस्य मणिहेम्नी मध्यगर्ते न्यसेत्।**
**यद्येतत् स्थिरकौतुकं तदुपरि स्वां पीठिकां शक्तितः**
**स्विष्टां न्यस्य यजेच्च तत्र च पुनः पीठार्चनं प्राचरेत् ।। ३४।।**

मूलार्चाया आस्पदस्थायाः पीठिकाया अग्रभुवि कल्पिते पूजार्चाया आस्पदे एतत् पूजाबिम्बं स्थिरकौतुकं चेत् तत्राजोपलमात्रं न्यस्यास्य मध्यस्थे गर्ते मणिहेम्नी न्यसेत्। तदुपरि स्वां पीठिकां शक्तितः शक्तिमन्त्रेण स्विष्टां न्यस्य यजेत्; तत्र पुनः पीठार्चनं च प्राचरेत्।

**सति स्नानबिम्बे पदेऽ[३]स्याधिपीठं**



१. 'कृति' च., २. 'मत्र' ङ, ३. 'स्यापि' ।।

**प्रतिष्ठाप्य शक्त्याऽऽचरेत् पीठपूजाम्।**
**परेष्वस्ति यत्तत्पदे तस्य पीठं**
**प्रकल्प्याथ तालत्रयाद्यं विदध्यात् ।। ३५।।**

स्नानबिम्बे सत्यस्य पदे च शक्त्या पीठं प्रतिष्ठाप्य पीठपूजाम् आचरेत्। परेषु बिम्बेषु यद्यदस्ति तत्तत्पदे तस्य पीठं प्रकल्पाथ तालत्रयाद्यं विदध्यात्।।

**निधाय भद्रपीठानि तत्तदास्पदपृष्ठतः।**
**मण्डपात् सर्वमानीय बिम्बान्येतेषु विन्यसेत् ।। ३६।।**

तत्तदास्पदस्य पृष्ठतो भद्रपीठानि न्यस्य मण्डपात् सर्वमानीयैतेषु भद्रपीठेषु बिम्बानि विन्यसेत्।

**स्यान्मण्डपेऽर्चनमिहार्चनबिम्ब एव**
**विद्येशकुम्भसलिलार्पणमादिबिम्बे।**
**उद्वासनं च सकलस्य करोतु याग-**
**बिम्बे तु वेश्मनि भवेद्यदि मूलबिम्बम् ।। ३७।।**

इह मण्डपेऽर्चनबिम्ब एवार्चनं स्यात्। विद्येशकुम्भसलिलानां समर्पणमुद्वासन-मादिबिम्ब एव स्यात्। मूलबिम्बं वेश्मनि भवेद्यदि सकलस्योद्वासनं यागबिम्बे करोतु।

**बिम्बमनु यागबिम्बं नयने स्नानादिशेषबिम्बानि।**
**योज्यानि तदभितः स्युर्निद्राकलशादि सर्वमुदितनयम्।। ३८।।**

नयने बिम्बानयने बिम्बमनु मूलबिम्बस्य पश्चाद् यागबिम्बं स्यात्। स्नानादिशेषबिम्बानि तदभितः पृष्ठतो योज्यानि स्युः। निद्राकलशादि सर्वमुदितनयम् उक्तन्याय एवेत्सर्थः।

**कार्यं परावाहनमादिबिम्बे**



१. 'रित्या' घ. पाठः ।।

**यद्यागबिम्बेऽपि दशाभिवाहः[१]**
**स्यादादिबिम्बेऽथ तयोर्द्वयोः स्या-**
**न्मन्त्राभिवाहोऽथ यथार्हमिज्या ।। ३९ ।।**

ततः आदिबिम्बे परावाहनं कार्यम्। यागबिम्बेऽपि तत् परावाहनं कार्यम्। दशाभिवाहः अवस्थावाहनमादिबिम्ब एव स्यात्। अथ तयोर्द्वयोर्मन्त्राभिवाहः स्यात्। यथायोग्यं पूजा च स्यात्।

**ततः प्रतिष्ठाप्य च मूलबिम्बं**
**लेप्यादि चेत् तत्तु तथा विभाव्य।**
**ध्रुवं च सम्भाव्य यथोक्तनीत्या[२]**
**विश्वाणुनोपस्थितिमस्य कुर्यात् ।। ४० ।।**

ततो मूलबिम्बं यथोक्तनीत्या प्रतिष्ठाप्य तत्तु लेप्यादि चेत् (तदा? तथा) प्रतिष्ठां विभाव्य ध्रुवा द्यौरित्यादिना स्थिरीकृत्यास्य यथोक्तनीत्या विश्वतश्चक्षुरित्याद्युपस्थानं च कुर्यात्।

**तारादिपूर्वमियमित्यथ सेति देव**
**ते मूर्तिरोमिति वदन्निजमूलरुद्धम्।**
**स्वं पञ्चतत्त्वमपि मूलनिरञ्जनं च**
**पीठे न्यसेत् स्वपदभाजि तु यागबिम्बम् ।। ४१ ।।**

पुनस्तारोपचाराद्यन्ते "इयं सा देव ते मूर्तिरोम्" इति मन्त्रं निजमूलपुटितं स्वपञ्चतत्त्वमूलं प्रणवं च वदन् स्वपदभाजि पीठे यागबिम्बं न्यसेत्।

**तत्र ध्रुवादिजपकृत्[३] स्वपदेषु मूर्ति-**
**मन्त्राञ्चितानि मनुना प्रणवादिगेन।**



१. 'वाहम्' च., २. 'रित्या', ३. 'ध्रुवाणु' ख. पाठः ।।

**तेनैव मूलमपरान्तजुषा क्रमेण**
**संस्थाप्य च ध्रुवयतु ध्रुवमन्त्रजापी ।। ४२।।**

पुनस्तत्र यागबिम्बे ध्रुवाणुजपकृद् भूत्वा स्वपदेषु स्वस्वस्थानेषु मूर्तिमन्त्रैरेवान्वितानि स्नानादिबिम्बानि प्रणवादिगेन मूलमपरान्तजुषा तेनैव 'इयं सा देवता' इत्याद्येन मनुना क्रमेण संस्थाप्य ध्रुवमन्त्रजापी ध्रुवयतु स्थिरीकरोतु।

**मन्त्रावाहन्यसनकृदथो यागबिम्बेऽष्टबन्धं**
**क्षिप्त्वा तच्चेदचलमथ कुम्भेशनिद्राघटाभ्याम्।**
**कृत्वा स्वस्वोदितवदभिषेकं ततः साधु जीवा-**
**वाहं त्रेधा न्यसनमिषुतत्त्वैश्च विद्वान् विदध्यात् ।। ४३।।**

अथो यागबिम्बे मन्त्रावाहन्यसनकृद् विद्वांस्तदचलं चेदष्टबन्धं क्षिप्त्वाथ कुम्भेशनिद्राघटाभ्यां स्वस्वोदितवदभिषेकं कृत्वा ततः साध्यञ्जसा जीवावाहमिषुतत्त्वस्त्रेधा न्यसनं च विदध्यात्।

**सूक्ष्मं स्थूलं रूपमावाह्य मन्त्री**
**मन्त्रावाहन्यासकृत् पूजयित्वा।**
**भूयो दौग्धान्नं निवेद्य प्रसाद्य**
**सर्वं कुर्यात् तल्लयाङ्गवसानम् ।। ४४।।**

ततस्तत्र सूक्ष्मं स्थूलं च रूपमावाह्य मन्त्रावाहन्यासादिकृद् भूत्वा पूजयित्वा भूयो दौग्धान्नं निवेद्य प्रसाद्य तस्य लयाङ्गावसानं सर्वं विदध्यात्।

**यागार्चातोऽनुदककुसुमैर्मन्त्रवित् पञ्चतत्त्वै-**
**र्नीत्वा कृत्स्नं[१] विभूममलधीर्मूलबिम्बेऽथ सद्यः।**

१. कृत्स्ना' ।।

**जीवन्यासं[1] सकलमपि कृत्वोपहारैस्तु हार्दैः**
**सन्तर्प्यानुग्रहदमपि लोकादिमन्त्रैर्विदध्यात् ।। ४५ ।।**

ततो यागार्चातोऽनुदककुसुमैर्मन्त्रवित् प्रणवोपचारादियोगं जानन् पञ्चतत्त्वैः कृत्स्नं विभुं मूलबिम्बे नीत्वाथ सद्यो जीवन्यासं सकलमपि कृत्वा हार्दैर्मानसैरुपहारैः संतर्प्य लोकानुग्रहादिमन्त्रैरनुग्रहमपि विदध्यात्।

**स्नानादीतरबिम्बेषु मूर्तिमन्त्राभिवाहनम्।**
**वर्णाङ्गन्यासपूजां च कृत्वाऽर्घ्यं वितरेद् बुधः ।। ४६ ।।**

ततो बुधः प्रतिमानां तारतम्यं जानन् गुरुः स्नानादीतरबिम्बेषु मूर्तिमन्त्राभिवाहनं वर्णाङ्गन्यासं पूजां च कृत्वा निवेद्यस्थानेऽर्घ्यं वितरेत्।

**प्राप्येशान्नित्यपूजानुमतिमथ समर्च्यासनं यागबिम्बे**
**मूर्तिद्वन्द्वं विभाव्याथ दरभृतजलेनानयेन्मूलबिम्बात्।**
**देवं तं पञ्चतत्त्वैर्मनुविदिह कृतव्यापके तारतोऽङ्गा-**
**द्याधायावाह्य मूलेन च सकलयतु स्वाक्षराङ्गादिभिस्तम् ।।**
**४७ ।।**

नित्यपूजाविधिमाह – प्राप्येति। पूर्वमीशान्नित्यपूजाया अनुमतिं प्राप्याथ यागबिम्ब आसनं समर्च्य स्थूलसूक्ष्मरूपमूर्तिद्वयं कल्पयित्वाथ दरभृतेन जलेन मूलबिम्बात् तं देवं पञ्चतत्त्वरानयेत् आवाहयेत्, तारतः कृतव्यापक इहाङ्गादि कृत्वा मूलेन स्वहृदयाच्चावाह्याक्षराङ्गैः तं सकलयतु।

**कृत्वाऽर्चनं स्वनिखिलावरणार्चनाढ्यं**
**नानानिवेद्यसुभगं सह वैश्वदेवम्।**
**स्वस्वप्रधानपरिषद्यजनार्थनं च**





१. 'प्राण' ख. पाठः ।

**सन्तोष्य सम्प्रणयतूक्तवदादिबिम्बे ।। ४८ ।।**

स्वैर्निखिलावरणैः सह नानानिवेद्यैः सुभगमर्चनं कृत्वा सह वैश्वदेवं प्रधानपरिषद्यजनं प्रार्थनं च कृत्वा संतोष्योक्तक्रमेणादिबिम्बे संप्रणयतु।

**वेराणि सन्ति यदि गर्भगृहेऽजरुद्रा-**
**दीनां विशोधितचराण्यधुना स्वमन्त्रैः।**
**संस्थाप्य किञ्चिदभिपूज्य निवेद्यशेषात्।**
**किञ्चिन्निवेदयतु तद्विभुपूजने तु ।। ४९ ।।**

गर्भगृहे विशेषेणाजरुद्रादीनां बिम्बानि सन्ति यदि विशोधितचराणि बिम्बशोधनकाले पूर्वं शोधितानि तान्यधुना स्वस्वमन्त्रैः संस्थाप्य किञ्चिदभिपूज्य तद्विभुपूजने निवेद्यशेषात् किञ्चिन्निवेदयतु।

**नीत्वा तथाऽऽदिबिम्बे व्यापय्य प्रणवतो न्यसेत् पञ्च।**
**तत्त्वानि मूलवर्णाङ्गानि धियेष्ट्वोक्तबज्जपेच्च मनून् ।। ५० ।।**

**द्विद्व्येकोद्भिदुरेषुतत्त्वमनुभिर्व्यापय्य मन्त्री चिद-**
**र्चार्चाविष्टरपीठिकायतनसंयोगं विभाव्य क्रमात्।**
**ब्रह्माध्वेद्धचिताऽऽदिनोदवपरिव्याप्त्याऽभिपूर्याखिलं**
**काण्डं तत्परिकल्पयेदथ महासालात्मनाऽवस्थितम्।। ५१ ।।**

**तल्लयाङ्गादिकृद्रक्षेन्न्यस्य गन्धाक्षतादिकम्।**
**द्वारं बध्वा वहिर्गत्वा प्रणमेन्मण्डपे विभुम् ।। ५२ ।।**

**नोद्घाटयेद् द्वारमहस्त्रयेऽत्र**
**कृत्वाऽग्रतः स्वस्तिकमादधीत[१]।**

१. 'स्वण्डिक' ।।

**नित्यार्चनं स्वार्हहुतादियुक्तं**
**संस्नाप्य तुर्येऽह्नि यजेच्च बिम्बे।। ५३।।**

**दिशाहोमादि सकलं कृत्वा कलशपूजनम्।**
**पूर्वेद्युर्मण्डपे कुर्याद[१]भिषेकं परेद्यवि ।। ५४।।**

ततोऽर्चनाबिम्बादादिबिम्बे नीत्वा प्रणवतो व्यापय्य पञ्चतत्त्वादिमूलवर्णाङ्गानि च न्यसेत्। धियेष्ट्वोक्तवन्मन्त्रं जपेच्च। पुनश्चिच्चैत्यमेलनादिकं तन्त्रसमुच्चयश्लोकैराह – द्विद्व्येकेति। चतुर्थदिवसात् पूर्वं दिशाहोमादि कृत्वा तत्पूर्वेद्युर्मण्डपे कलशपूजनं परेद्यव्यभिषेचनं च कुर्यात्।।

**बर्हिबर्हेण मूलार्चां मृष्ट्वा वस्त्रेण वा ततः।**
**विद्वान् पञ्चोपबिम्बानां तैलाभ्यङ्गादिकं चरेत् ।। ५५।।**

**मूलबिम्बात्सपर्यायां पूजाबिम्बेऽवतारणम्।**
**प्रतिसङ्क्रमणं चान्ते मूलबिम्बे पुरोदितम् ।। ५६।।**

बर्हिबर्हेण वा वस्त्रेण वा मूलार्च्चामिष्ट्वा पञ्चानामुपबिम्बानां यागस्नानं बल्युत्सवतीर्थार्थं कल्पितानां तैलाभ्यङ्गादिकं चरेत्। तव तत्र सपर्यायां मूलबिम्बात् पूजाबिम्बेऽवतारणं पूजान्ते प्रतिसङ्क्रामणं तत्पुरोदितप्रकारमेव स्यात्।

**मूलार्चामभिवन्द्य पूजयतु पूजास्नानबिम्बासनं**
**पूजार्चार्पितमूलबिम्बगविभुं दत्त्वाऽर्घ्यपाद्यादिकम्।**
**स्नात्वाऽतोऽपि च मूर्तिभाजि मनुवित् तं स्नानबिम्बे कृत-**
**न्यासो द्रव्यघटाभिषेकमखिलं कुर्वीत सावस्रुतम् ।। ५७।।**

कलशस्नानविधानमाह – मूलार्चामिति। पूर्वं मूलार्चामभिवन्द्य पूजाबिम्बे च पीठं पूजयतु। पुनः पूजार्चायां योजितमूलबिम्बगतदेवो मनुविदर्घ्यपाद्यादिकं

---

१. 'दधिवासं' ङ. पाठः ।।

दत्त्वा ततो यागबिम्बान्मूर्तिभाजि स्नानबिम्बे तं देवं नीत्वा मूलाङ्गकृतन्यासो भूत्वा द्रव्यघटाभिषेकमखिलं सावस्रुतं कुर्वीत।

**तं यागबिम्बेऽजघटोदशेष-**
**सिक्ते नियोज्याङ्गपटादि दत्त्वा।**
**सम्पूज्य साङ्गावरणं निवेद्य**
**महानिवेद्यं विधिवत् प्रसाद्य ।। ५८ ।।**

**मूलबिम्बे ततो नीत्वा यथोक्तन्यासकृद् गुरुः।**
**भावोपहारैः सन्तर्प्य लयाङ्गादिकमाचरेत् ।। ५९ ।।**

पुनरजघटोदशेषसिक्ते ब्रह्मकलशजलशेषेण सिक्ते यागबिम्बे तं देवं नियोज्यङ्गवस्त्रादि दत्त्वा साङ्गावरणं तं सम्पूज्य महानिवेद्यं निवेद्यविधिवत् प्रसाद्य ततो मूलबिम्बे नीत्वा यथोक्तन्यासकृद् गुरुर्भावोपहारैस्तं सन्तर्प्य लयाङ्गादिकमाचरेत् ।। ५८ –५९ ।।

**तदैवावस्रुतजलैरभिषिच्येतराण्यपि।**
**बिम्बान्यथ परीवारेषूक्षित्वा विकिरेद्बलिम् ।। ६० ।।**

इतराणि बिम्बानि तदैवावस्रुतजलैरभिषिच्याथ परिवारेषु चोक्षित्वा बलिं विकिरेते।।

**पूजादिप्रक्रियोक्तैव[१] नोत्सवेऽस्ति बलौ भिदा।**
**[२]प्रस्वापनावभृथयोर्भिदामात्रमथोच्यते ।। ६१ ।।**

अत्र बहुवेरे पूजादिप्रक्रिया तूक्तेव स्यात्। उत्सवे तु बलौ भेदो नास्ति। अथ प्रस्वापनावभृथयोः यात्रायां प्रस्वापने तीर्थस्नाने च भिदामात्रमुच्यते।।

**यागार्चायां विभुयजनकृत पूर्ववन्मुलसंस्थं**

१. 'क्तैवं' , २. 'प्रस्थापना' ।।

**प्रार्थ्याज्यारोपमिह तनुयाद् यागबिम्बेऽर्पिते वा।**
**सङ्क्षाळ्योपन्यसतु महद्बिम्बं ततः सर्वमस्मिन्**
**नीत्वा कुर्यात् स्वपनविधिमप्युत्तरेद्युश्च कृत्यम् ।। ६२।।**

तत्र यागार्चायां विभुयजनकृद् भूत्वा देवं मूलसंस्थं कृत्वा पूर्ववत् तीर्थयात्रा त्वया देवेति प्रार्थ्य इहैव वा यागबिम्बेऽर्पिते सति वा ज्यारोपं तनुयात्। पुनर्महाबिम्बमुत्सवबिम्बं संक्षाल्य उप समीपे न्यसतु। ततोऽर्चनाबिम्बादस्मिन् नीत्वा स्वपनविधिमप्युत्तरेद्युश्च कृत्यं सर्वं तनुयात्।।

**सम्पूज्योद्वास्य शय्यादि नीत्वाऽन्तं[1] महकौतुकम्।**
**पूजाबिम्बे नियोज्येष्ट्वा मूलबिम्बेऽर्पयेद् विभुम् ।। ६३।।**

तत उत्तरेद्युस्तत्र संपूज्य शय्याद्युद्वास्य महकौतुकमन्तर्नीत्वा तस्मात पूजाबिम्बेऽर्पयेत्।।

**सङ्क्षाळितावभृथबिम्बमथोपनीय**
**पूजावधौ प्रथमबिम्बगमर्थयित्वा।**
**पूजान्तरे यदि तु तत्स्थमथैनमिज्या-**
**बिम्बाश्रितं नयतु मन्त्रबिदत्र बिम्बे ।। ६४।।**

अथ संक्षालितावभृथबिम्बं संक्षालिते तीर्थबिम्बमुपनीय समिपे स्थापयित्वा पूजावसाने देवं प्रथमगं कृत्वा कर्मार्चातीर्थयात्रार्थमित्यनेनार्थयित्वा पूजाबिम्बे योजयित्वा मन्त्रविदत्र तीर्थबिम्बे नयतु। पूजान्तरे यदि तु तत् क्रियते चेत् तत्स्थं मूलगं कृत्वा प्रार्थयित्वा पुनरिज्याबिम्बाश्रितमेनं तीर्थबिम्बे जयतु।।

**कृत्वाऽत्र[2] विधिवत् तीर्थस्नपनं प्रापितालयम्।**
**नीत्वेज्याबिम्ब इज्यान्ते मूलबिम्बे नियोजयेत् ।। ६५।।**



१. 'त्वान्तमं', २. 'कृत्वा च' ।।

अथ विधिवत् तीर्थस्नपनं कृत्वा प्रापितालयं प्रासादं प्राप्य इज्याबिम्बे नीत्वा इज्याया अन्ते मूलबिम्बे नियोजयेत्।

**स्थानप्रासादयोः शुद्धौ न भेदः शुद्धिकर्मणि।**
**बिम्बशुद्धौ हुतविधावपि भेदः स[1] उच्यते ।। ६६।।**

शुद्धिकर्मणि स्थानप्रासादयोः शुद्धौ न भेदोऽस्ति। बिम्बशुद्धौ क्षालनादौ हुतविधावपि भेदः स्यात्। स उच्यते।।

**नीत्वेशं यागबिम्बे कृतसकलचतुःशुद्धिरा[2]द्ये नयेद्वा**
**द्वे कृत्वा द्वे च नीत्वा चरतु यजनबिम्बेऽथ मूलेऽर्पयेद्वा।**
**भूयोऽस्माद्यागबिम्बे क्रमयतु कृतधारोऽर्चयेच्चादिबिम्बे**
**धारान्ते त्वेव पूजा यदि न कृतचतुःशुद्धिरुद्वाह[3]येत् ।। ६७।।**

क्षालनादिचतुश्शुद्धौ ईशं यागबिम्बे नीत्वा कृतसकलचतुश्शुद्धिर्भूत्वा गुरुराद्ये बिम्बे नयेद् वा। अथवा यजनबिम्बे द्वे क्षालनप्लावने कृत्वा पुनर्मूलबिम्बाद् देवं तत्र नीत्वा द्वे स्नानमार्जने चरतु। पुनर्मूलेऽर्पयेत्। भूयो धारार्थमस्मा-न्मूलबिम्बाद् यागबिम्बे क्रमयतु। पुनः कृतधारो भूत्वादिबिम्बेऽर्पयेच्च। धारान्ते त्वेव पूजा यदि स्यात् तर्हि कृतचतुःशुद्धिर्भूत्वा नोद्वासयेत; धारान्त एवोद्वासयेदित्यर्थः।।

**सङ्क्रमय्यार्चनार्चायामवगाहं यथाविधि।**
**विदधीतार्चनान्ते तं मूलबिम्बे नियोजयेत् ।। ६८।।**

पुनरर्चनार्चायां संक्रमय्य यथाविध्यवगाहं विदधीत। अर्चनान्ते तं मूलबिम्बे नियोजयेत् च।।

**कृत्वा भूतलयादि सर्वमपि मन्त्रन्यासनिष्ठं महा-**

१. 'समुच्यते' च., २. 'रोद्येन धेन्वा' ग., ३. 'सयेत' छ. पाठः ।।

**बिम्बेऽथार्चनबिम्ब ईशमवतार्यात्रापि कृत्वा तथा।**
**तत्सर्वं परिपूज्य पीठमभिवाह्य स्नापयेत् पञ्चके-**
**नाथेष्ट्वा प्रणयेन्महाप्रतिकृतौ तन्न्यासमप्याचरेत् ।। ६९ ।।**

पञ्चकस्नानकाले महाबिम्बे भूतलयादिसर्वमपि मन्त्रन्यासनिष्ठं कृत्वाथार्चनाबिम्बे ईशमवतीर्यात्रापि तथा भूतलयादि तत् सर्वं कृत्वा पीठं परिपूज्याभिवाह्य पञ्चकेन स्नापयेत्। अथेष्ट्वा महाप्रतिकृतौ प्रणयेत् तत्र तन्न्यासमप्याचरेत्।।

**कुर्याच्छेषोपबिम्बानां सप्तस्वपि च शुद्धिषु।**
**तत्तच्छेषेण संशुद्धिं भूतमात्रलयाद्यपि।। ७० ।।**

सप्तस्वपि शुद्धिषु स्नानबिम्बादिशेषोपबिम्बानां तत्तच्छेषेण संशुद्धिं कुर्यात्। भूतमात्रस्य लयाद्यपि कुर्यात्।

**तत्तन्निष्कृतिहोमेषु यागबिम्बार्पितं विभुम्।**
**तत्कुम्भैरभिषिच्येष्ट्वा मूलबिम्बे नयेद् बुधः ।। ७१ ।।**

तत्तन्निष्कृतिहोमेषु मूलबिम्बाद् यागबिम्बार्पितं विभुं तत्कुम्भैरभिषिच्येष्ट्वा बुधो मूलबिम्बे नयेत्।

**नीत्वेशं यागबिम्बेऽर्पयतु लयहुतोत्थं घृतं तत्त्वहोमे**
**प्रत्यर्प्य न्यासमेषां चरतु च हुतकृद्यागबिम्बेऽथ नीत्वा।**
**तत्कुम्भेनाभिषिच्यागमविदिह निवेद्यान्तकृन्मूलबिम्बे**
**नीत्वा न्यासं विधायेह गमितमभिपूज्यादिबिम्बे नयेच्च ।। ७२ ।।**

तत्त्वहोमे ईशं यागबिम्बे नीत्वा लयहुतोत्थं सम्पातघृतं तत्रार्पयतु। पुनर्मूलबिम्बे प्रत्यर्प्य एषां तत्त्वानां संहारन्यासं चरतु। तत्र स्थिते देवे हुतकृच्च भूत्वाथ यागबिम्बे नीत्वा तत्तत्कुम्भेनाभिषिच्येह पायसं निवेद्यान्तकृद् भूत्वागमविद्

गुरुर्मूलबिम्बे नीत्वा तत्त्वानां सृष्टिन्यासादिकं विधायेह यागबिम्बे गमितमभिपूज्यादिबिम्बे नयेच्च।।

**जीर्णोद्धृतौ तु तरुणालय एंक[1] एव**
**स्यादल्पबिम्बमुपबिम्बमिदं हि षष्ठम्।**
**कर्मैकवेरसममेव भिदा तु शुद्धा-**
**वुक्ताऽथ निष्क्रमविधौ च वदामि भेदम् ।। ६३।।**

जीर्णोद्धृतौ विशेषमाह – जीर्णोदधृताविति। तत्र तु तरुणालयेऽल्पप्रासादे अल्पबिम्बमेकमेव स्यात्। इदं हि षष्ठमुपबिम्बं स्यात्। अत्र कर्म एकवेरसममेव स्यात्। शुद्धौ भिदा तूक्ता; अथ निष्क्रमविधौ भेदं च वदामि।

**मूलार्चामभिवन्द्य विभ्वनुमतः सङ्क्षाळिते पीठमि-**
**ष्ट्वाऽर्चाबिम्ब उपात्तमूर्तिनि विभुं नीत्वोचितन्यासकृत्।**
**इष्ट्वैनं जनितत्त्वहोमजघृतं प्राप्यादिबिम्बेऽर्पिते[2]**
**तत्त्वन्यासकृदर्थयेत विलयानुज्ञां हुतं चाचरेत् ।। ७४।।**

तत्र संहारतत्त्वहोमे पूर्वं सृष्टितत्त्वहोमान्तं कृत्वान्तर्गत्वा मूलार्चामभिवन्द्य विभ्वनुमतो देवादनुज्ञां गृहीत्वा संक्षालितेऽर्चाबिम्बे पीठमिष्ट्वोपात्तमूर्तिनि पूजितमूर्तावत्र विभुं नीत्वोचितन्यासकृद् भूत्वा तत्रैनमिष्ट्वा जनितत्त्वहोमजघृतं सृष्टितत्त्वहोमात् सम्भूतं सम्पातं तस्मिन् प्राप्यादिबिम्बेऽर्पिते तस्मिन् देवे सति तत्त्वन्यासकृद् भूत्वा परिपूर्णं तं प्रति विलयानुज्ञामर्थयेत्। अथ संहारतत्त्वहोमं चाचरेत्।

**तत्तत्कर्मार्चाकृते पञ्चतत्त्वैः**
**कार्यः संहारक्रमादन्यहोमः[3]।**
**युक्त्या तद्वन्मूर्तिमन्त्रेण चैषां**

१. 'एकमेव', २. 'बिम्बार्पितं', ३. 'दाज्म' ग. ङ. पाठः।।

**योज्यः स्यात्कार्योपपत्त्या विशेषः ।। ७५।।**

अन्तस्तत्त्वस्य होमात् पूर्वं तत्तत्कर्मार्चाकृते तत्तत्कर्मार्चां उद्दिश्य पञ्चतत्त्वैः पृथक् संहारक्रमादाज्यहोमः कार्यः स्यात्। तद्वद् मूर्तिमन्त्रे चैषां बिम्बानां कार्योपपत्त्या विशेषो योज्यः स्यात्।।

**नीत्वोपबिम्बे विदधीत पूजां स्यात् तत्त्वकुण्डे[१]ष्विह वैश्वदेवम्।**
**कुर्यात् ततो होमसमापनादि पूजान्त ईशं च नयेत् स्वबिम्बे।।**
**७६।।**

एवं तत्त्वानां होमावसाने उपबिम्बेऽर्चनाबिम्बे देवं नीत्वा पूजां विदधीत। इह तु वैश्वदेवं तत्त्वकुण्डे स्यात्। ततः स्विष्टकृदादिभूतं होमसमापनादि कुर्यात्। पुनः प्रसन्नपूजान्ते ईशं स्वबिम्बे नयेत्।।

**पूजार्चामभिषिच्याथ तत्त्वकुम्भं तदग्रतः।**
**न्यसेत् कालावधिप्रश्नाद्यपि कुर्यादिहोचितम् ।। ७७।।**

ततः पूजार्चामभिषिच्याथ तदग्रतस्तत्त्वकुम्भं न्यसेत्। तत इह कालावधिप्रश्नाद्युचितमपि कुर्यात्।।

**मूलार्चायां विभाव्य प्रभुमिह कृततत्त्वध्रुवोद्व्यापको नी-**
**त्वेज्याबिम्बेऽभिषिच्याग्र[२]विहितकलशेनादिबिम्बेऽथ नीत्वा।**
**उद्व्याप्य ध्यानसङ्कोचकृदथ दरकेनाग्रतः सूपक्लृप्ते**
**कुम्भे प्रोद्वास्य सिक्त्वाऽर्चनवपुषि चरेद् ध्यानसङ्कोचमस्मिन्।।**

ततो मूलार्चायां प्रभुं विभाव्येह कृततत्त्वध्रुवोद्व्यापको भूत्वा इज्याबिम्बे एवं नीत्वाग्रनिहितेन तत्त्वकलशेऽभिषिच्याथादिबिम्बे नीत्वोद्व्याप्य ध्यानसङ्कोचकृद् भूत्वाथ दरकेन शङ्खगतेन जलेनाग्रतः सुक्लृप्ते कुम्भे

१. 'ण्डे त्विह बैल्यहोमम्' ङ. पाठः, २. 'गनिहित' ग. ङ. पाठः ।।

प्रोद्वास्य तेन कुम्भेनार्चनावपुषि सिक्त्वार्चनाबिम्बे ध्यानसङ्कोचं चरेत्।।

**मूले वा ध्यानसङ्कोचकृदपचितिबिम्बेऽर्पयित्वाऽत्र चैवं**
**कृत्वा सङ्कोचमग्राहितकलशसिगेवादिबिम्बे प्रणीय।**
**उद्व्यापय्याग्रतः सम्भृतकलशक उद्वास्य तेनाभिषिञ्चे-**
**द्यागार्चां नैव सङ्कोचनमिह बहुबेरे परं निष्क्रमः स्यात्।।**

अत्र क्रमे प्रसिद्धं पक्षान्तरं दर्शयति – मूले इति। पूर्वं मूले मूलबिम्बे ध्यानसङ्कोचकृद् गुरुर्भूत्वा पुनरपचितिबिम्बे पूजाबिम्बे देवमपयित्वात्र चैवं ध्यानसङ्कोचं कृत्वा पुनरत्राग्राहितकलशसिक् अग्रस्थिततत्त्वकलशेन सेचनं कृत्वा तदैवादिबिम्बे प्रणीयोद्वापय्य ऊर्ध्वं व्यापयित्वा तस्याग्रतः सम्भृतकलशके सम्भृते जीवकलशजले उद्वास्य तेन यागार्चामभिषिञ्चेत्। इह बहुवेरे नैव सङ्कोचनं स्यात् केवलं निष्क्रम एव स्यात्।।

**यात्राहोमादिसम्पातं मूलबिम्बेऽत्र युक्तितः।**
**सिक्त्वा स्थूलादिरूपाणि कुम्भ उद्वासयेत् क्रमात् ।। ८० ।।**

अत्र मूलबिम्बादुद्वासनकाले यात्राहोमादिसम्पातं मूलबिम्बे युक्तितः सिक्त्वा स्थूलादिरूपाणि क्रमाज्जीवकुम्भ उद्वासयेत्।।

**जीवोद्वासनमप्यस्मिन् कृत्वा तत्त्वैस्तु पञ्चभिः।**
**त्रिधा विन्यस्य मूलाक्षराङ्गन्यासादि चाचरेत्।। ८१ ।।**

**यात्राहोमघृतावशेषमथ सिक्त्वा यागबिम्बे ततोऽ-**
**प्युद्वास्याग्रसुसम्भृतेऽथ कलशे मन्त्री यथोक्तक्रमात्।**
**मन्त्रा[1]वाहनकृत् प्रपूज्य विनिवेद्यातोष्य वस्त्रावृतं**
**नीत्वा संस्कृतमण्डपेऽ[2]धिशयनं न्यस्येद् गुरुः कल्पवित्।।**

१. 'तन्त्रा' ग. पाठः, २. 'च शयने' ।।

**उद्धारशायनजलार्पणमादिविम्ब-**
**स्येज्याऽर्चया सह भवेद्यदि सा तु शैली।**
**लौहीं[१]मुखप्रतिकृतिं दहने यथास्वं**
**विद्राव्य कारयतु शिल्पिवरेण तां ताम्।। ८३।।**

पुनरस्मिन् जीवकुम्भे जीवोद्वासनमपि कृत्वा तेन यागार्चामभिषिच्य पञ्चभिस्तु तत्त्वैस्त्रिधा विन्यस्य मूलाक्षराङ्गन्यासादि चाचरेत्। अथ यात्राहोमस्य घृतावशेषं यागबिम्बे सिक्त्वा ततोऽपि यथोक्तक्रमादग्रतस्सम्भृतो कलशे उद्वास्य मन्त्री मन्त्रावाहनकृद् भूत्वा प्रपूज्य निवेद्यातोष्य वस्त्रावृतं तं कुम्भं संस्कृतमण्डपे नीत्वाधिशयनं न्यस्येत्। गुरुः कल्पविद् इति पदाभ्यां जीवोद्वासनोपदेशादिकं सूचितम्। आदिबिम्बस्योद्धारश्शायनं जलर्पणञ्चेज्यार्चया सह भवेत्। सा पूजार्चा शैली शिलया निर्मिता यदि तदा भवेत्। लौहीं लोहनिर्मितां तामुपप्रतिकृतिं पूजाबिम्बादिकं दहने विद्राव्य यथास्वं स्वप्रकारेणैव शिल्पिवरेण कारयतु।। ८१-८३।।

**नेत्रोन्मीलनसङ्ग्रहादिविधिकृत् तज्जीवकुम्भान्तिके**
**संवेश्याल्पककौतुकं समधिवास्यान्येद्युरल्पालये।**
**तत् संस्थाप्य यथार्हकालमभिषिच्यानेन कुम्भेन त-**
**न्न्यासेज्यादिकृदुत्सवान्तमखिलं कर्म प्रकुर्याद् गुरुः ।।**

पुनरल्पकौतुकं गुरुर्नेत्रोन्मीलनसङ्ग्रहादिविधिकृद् भूत्वा तज्जीवकुम्भान्तिके संवेश्य समधिवास्यान्येद्युस्तदल्पालये संस्थाप्य यथार्हकालमनेन जीवकुम्भेनाभिषिच्य तन्न्यासेज्यादिकृद् भूत्वोत्सवान्तमखिलं कर्म प्रकुर्यात्।।

**मूलार्चामितराश्च साधु रचिताः संस्कृत्य संशोधिता-**
**ल्पार्चोद्वासितजीवकुम्भमधिवास्यार्चाभिराभिः सह।**

१. 'हीमुपप्रति' ङ. पाठः ।।

**प्राग्वच्छोधितमूलधाम्नि विधिवत् कृत्वा प्रतिष्ठां निजे**
**काले जीवघटाभिषेचनविधिं कुर्यात्सपर्याद्यपि[1] ।। ८५ ।।**

पुनः स्वप्रासादे प्रतिष्ठाकाले साधु रचितां मूलार्चामितराश्च सङ्गृह्य संस्कृत्य संशोधिताल्पार्चोद्वासितजीवकुम्भं संशोधितेऽल्पप्रासादे संशोधिताल्पार्चाया उद्वासितं जीवकुम्भमाभिरर्चाभिः सहाधिवास्य प्राग्वदेव शोधिते मूलप्रासादे विधिवत् प्रतिष्ठां कृत्वा निजे काले जीवघटाभिषेचनविधिं सपर्याद्यपि कुर्यात् ।।

**तुर्यदिनस्नपनोत्सव-**
**विधिमपि विदधीत देशिकप्रवरः ।**
**सद्यस्तदल्पबिम्ब-**
**प्रतिपत्तिरपि च यथोचितं[2] क्रियताम् ।। ८६ ।।**

पुनर्देशिकप्रवरस्तुर्यदिनस्नपनविधिमुत्सवविधिमपि विदधीत । सद्यस्तदानीमेव तदल्पबिम्बप्रतिपत्तिः तस्याल्पबिम्बस्योद्वारादिरपि च यथोचितं क्रियताम् ।

**प्रासादजीर्तावपि सर्वमेवं प्रायोऽत्र किं त्वर्चनबिम्ब एव ।**
**स्यान्मूलबिम्बस्य च शुद्धिरेतच्छेषेण शेषप्रतिमाश्च शोध्याः ।। ८७ ।।**

प्रासादस्य जीर्तावपि प्राय एवमेव सर्वं क्रियतात् । किन्तु अत्रार्चनबिम्ब एव मूलबिम्बस्य शुद्धिः स्यात् । एतच्छेषेण शेषप्रतिमाश्च शोध्याः स्युः ।।

**पूजार्चामात्रजीर्तावपि गदितदिशोद्वास्य नीत्वाधिशय्यं**
**तामर्चां लाङ्गलोच्चालितबहिरपनीतां त्यजेत् प्राग्वदप्सु ।**
**गेहं संशोध्य मूलप्रतिकृतिमपि तां दर्पणे चाथ नव्यां**
**पूजार्चां दृग्विधानग्रहकृदधिजलं वासयेतोक्तकालम् ।।**

१. 'सपर्यामपि' , २. 'दितं' ङ पाठः , ३. 'दिग्वि' छ. पाठः ।।

पूजार्चामात्रजीर्त्तावपि दर्शितदिशोद्वास्य शय्यायां नित्वा लाङ्गलोच्चालितबहिरपनीतां लाङ्गलाग्रेण विश्लेष कृत्वा बहिरुक्तक्रमेणापनीतां तां कर्मार्चामपि त्यजेत्। पुनर्गेहं संशोध्य तां मूलप्रतिकृतिमपि दर्पणे प्रतिबिम्ब्य संशोध्य नव्यां पूजार्चां दृग्विवधानग्रहकृद् भूत्वोक्तकालमधिजलं जले वासयेत्।।

**तां चाधिशा[1]य्य शयनं कलशेन सार्धं**
**कृत्वाऽधिवासमपि मूलत[2]नोश्च विद्वान्।**
**नीत्वाऽन्तरे तदखिलं मनसाऽऽदिबिम्बं**
**संस्थापयेदितरदप्युपदिष्टरीत्या ।। ८९ ।।**

तां च शयनमधिशाय्य शयने शाययित्वा कलशेन सार्धमधिवासं कृत्वा मूलतनोश्चाधिवासं कृत्वा विद्वान् गुरुरेतदखिलमन्तर्नीत्वा मनसादिबिम्बे संस्थापयेत्। इतरत् पूजाबिम्बमप्युपदिष्टरीत्या संस्थापयेत्।।

**जीवावाहनसमये तत्कलशेनाभिषिच्य मूलार्चाया[3]म्।**
**नीत्वा न्यासं विदधीताथाखिलमपि चरेत् प्रतिष्ठोदितवत्।।**

जीवावाहनका[4]ले तत् कलशेनाभिषिच्य मूलार्चायामेवं नीत्वा न्यासं विदधीत। अथ प्रतिष्ठायामुदितक्रमेणाखिलमपि कर्म चरेत्।।

**बिम्बग्रहेऽधिवासे वा प्रोक्तं व्याहृतिभिर्हुतम्।**
**पूर्त्यर्थमुपबिम्बानामपि कर्तव्यमष्टशः ।। ९१ ।।**

बिम्बग्रहे चाधिवासे वा पूर्वं प्रोक्त[5]व्याहृतिभिर्हुतमुपबिम्बानां पूर्त्यर्थमष्टशः कर्तव्यं स्यात्।।

**लेप्ये जीर्णे प्रोक्तवत् प्रोषितेशं तत्त्यक्त्वाऽन्यद्रुक्प्रतिष्ठादिपूर्वम्।**

---

१. 'शय्य' ग. घ. पाठः , २. 'तनौ च' ङ. पाठः, 'म्' ग. पाठः
४. 'समये' इति मूले पाठो दृश्यते। ५. मूले 'प्रोक्त'मिति।।

**निर्माप्याशेषां प्रतिष्ठां विदध्यात् पूर्वार्चाबिम्बेऽक्षिविध्यादि कार्यम्।।**

लेप्ये बिम्बे जीर्णे प्रोक्तवदेव प्रोषितेशमुद्वासितदेवं तद् बिम्बं त्यक्त्वा प्रतिष्ठादिपूर्वं शूलप्रतिष्ठादिकं सर्वं यथा तथान्यं निर्माप्याशेषां प्रतिष्ठां विदध्यात्। तत्र पूर्वार्चाबिम्ब एवाक्षिविध्यादिकं कार्यं स्यात्।।

**प्रासादान्तर्दारवे वौपले वाऽप्येवं सर्वं स्याद् बहिर्निर्मिते तु।**
**आदर्शेऽर्चा बिम्बके वा चले स्यान्नेत्रोन्मेषाद्युक्तवत् सर्वमन्यत्।। ९३।।**

प्रासादान्तर्गते दारवे वा औपले वा बिम्बे जीर्णेऽपि एवमेव सर्वं कर्म स्यात्। बहिर्निर्मिते तु आदर्शे वा चलेऽर्चाबिम्बे वा नेत्रोन्मेषादि स्यात्। अन्यद् सर्वमुक्तवदेव स्यात्।।

**स्नानाद्यर्चा यजनतनुगे देव उद्वास्य नव्या[1]**
**नेत्रोन्मेषाद्यमनुविधिवद्वारिवासं च कृत्वा।**
**कुम्भेनैकेन तु समभिषिच्याथ पुण्याहकृत्ता[2]-**
**भूतापीत्यादिनिजविधिभिर्भावयेन्मूर्तिरूपाः ।। ९४।।**

स्नानाद्यर्चा जीर्णाश्चेद् यजनतनुगे देवे ता उद्वास्य नव्याः स्वीकृत्य नेत्रोन्मेषाद्यमनु नेत्रोन्मेषाद्यनन्तरं विधिवद् वारिवासं च कृत्वा एकेन कुम्भेन त्वभिषिच्य पुण्याहकृद् भूत्वा भूतापीत्यादिनिजविधिभिर्भूतसंहारादिकर्मभिर्मूर्तिरूपा भावयेत्।।

**हुत्वोक्तवद्यजनबिम्बगतादनुज्ञां**
**लब्ध्वा निजास्पदं[3] इमाः प्रतिमा यथास्वम्।**

१. 'सर्वा नव्या नेत्राद्य' , २. 'कृत्तं भू ङ. पाठः , ३. 'दगतां प्रतिमां' ग. पाठः।।

**संस्थाप्य देवनवकाद्यभिषेकशेषे-**
**णाथाभिषिच्य वितरेदपि तद्विदर्घ्यम् ।। ९५ ।।**

पुनरुक्तवद्धुत्वा यजनबिम्बगताद् देवादनुज्ञां लब्ध्वा निजास्पदे एवेमाः प्रतिमा यथास्वं स्वस्वोक्तक्रमात् संस्थाप्य देवनवकाद्यभिषेकशेषेण देवस्य नवकादिकलशैराभिषेकं कृत्वा तच्छेषेणाथाभिषिच्य तद्विद्गुरुरर्घ्यमपि निवेद्य बुध्या वितरेत् ।।

**पूजार्चायामष्टबन्धस्य जीर्णौ**
**तस्यामावाह्य स्वसम्पातसिक्तम् ।**
**जीर्णं प्रोद्वास्यादिबिम्बे विभुं तं**
**नीत्वेज्यार्चां क्षाळयित्वा विधिज्ञः ।। ९६ ।।**

**पीठं प्राच्यावाह्य तं मूलबिम्बात्**
**क्षिप्त्वा प्रागुद्दिष्टरीत्याऽष्टबन्धम् ।**
**सर्वं कृत्वा पायसं सन्निवेद्य**
**पूजां कुर्यान्मूलबिम्बे नयेच्च ।। ९७ ।।**[१]

पूजार्चायामावाह्य स्वसम्पातसिक्तं संहारनवशक्तिसम्पातसिक्तं जीर्णमष्टबन्धं प्रोद्वास्यादिबिम्बे तं विभुं नीत्वाथेज्यार्चां क्षालयित्वा विधिज्ञो गुरुस्तत्र पीठं प्राच्य तं देवं मूलबिम्बादावाह्य प्रागुद्दिष्टरीत्याष्टबन्धं क्षिप्त्वा सर्वं कर्म कृत्वा पायसं निवेद्य पूजां यथोक्तप्रकारेण कुर्यात् । मूलबिम्बे तं देवं नयेच्च । तत्र न्यासजातं मानसपूजां च कुर्यात् ।।

इति शेषसमुच्चये दशमः पटलः ।

शुभं भूयात् ।



१. 'कृत्वा मूल' ङ. पाठः ।।